ॐ



श्रीगणेशाय नमः

# श्रीशिवरहस्याख्यः महेतिहासः
# माहेश्वराख्यः प्रथमांशः

षड्दर्शनपारंगतानां जनकपूर् ब्रह्मश्री. सहजानन्दोपाध्यायाभिधानां

महानुभावानां सेवयासमासादितविधेन

मरुवूर्. गणेश शास्त्रिणा,

सर्वतन्त्रस्वतन्त्राणां सर्वतोमुखपर्यन्तानेकक्रतुभिराराधितपरमेश्वराणां पंचनदक्षेत्रमलंकृतवतां

ब्रह्मश्री. बालकृष्णशास्त्रिणां शिष्येष्वन्यतमेन

वरहूर्. सुन्दरेश्वर शास्त्रिणाच

सम्यक् परिशोधितः



देवकोट्टाभिधनगरवास्तव्यस्य मे. अरु. ना. रामनाथ श्रेष्ठिवर्यस्य द्रव्यसहायेन

चेन्नपत्तननगरस्थेन वि. ए. पदयुतेन क. सदाशिव श्रेष्ठिवर्येण

वाणीनिलय मुद्राक्षरशालायां

मुद्रितो विजयतेतराम्

१९१३



मूल्यं रूपकद्वयम्.] [प्रत्येकं प्रेषणव्ययः.

**DEDICATED**

**By Kind Permission**

**TO**

The Hon'ble

**Mr. Justice T. V. Seshaghiri Iyer avgl,** B.A. B.L.,

*Judge of the High Court of Judicature,*

*Madras, etc.*

**Whose appreciation & encouragement of Literature and Religion, The Publisher desires very gratefully to Acknowledge.**

ओं

शिवाभ्यां नमः.

# भूमिका.

---

आस्तिकवर्याः! विदितमेव हि संसारमहातमसि भ्रमतां सात्विकानां सत्यज्ञानानन्दस्वरूपानुभवसाधनं सकलजगत्सृष्ट्यादिहेतुः सर्वज्ञत्वादियुतः सर्वेश्वरः शास्त्रं सङ्कलितवानिति। शास्त्रशब्दश्च वेदेषु तदनुसारिषु च प्रमाणग्रन्थेषु रूढतया समुल्लसति । शास्त्रं च प्रतिज्ञाहेतुदृष्टान्तस्वरूपेण प्रवर्तमानं सत् अभ्युदयार्थान् सम्यक् बोधयति। अयमत्र सङ्ग्रहः वेदः प्रतिज्ञा तदनुसारिणः आगमाः स्मृतिः सूत्राणि च हेतुः इतिहासपुराणानि तु दृष्टान्त इति । तथाच वेदैः प्रतिज्ञातान् हेतुग्रन्थैर्निरूपितानेवार्थान् इतिहासपुराणानि दृष्टान्तात्मकतया प्रवर्तमानानि स्फुटं बोधयन्ति। एवं हि—'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्यादि महर्षिभिरुक्तम्। तत्र च इतिहासग्रन्थाः शिवरहस्यमहाभारताद्याः इति सुप्रसिद्धम् । तत्र शिवरहस्याख्यमितिहासरत्नं शतसहस्राधिकसङ्ख्याकग्रन्थयुतं समुद्रवदत्युदारं द्वादशांशात्मकं ज्ञानोपासनाख्यकाण्डद्वयगतं सकलमपि विषयजातं विविधया भङ्ग्या विमलतरं विस्पष्टं विबोधयति। विज्ञेयमतो विद्यावतां विज्ञानाभरणमिति विस्तरभियैव विशेषतः एतन्महिमकथनात् विरम्यते अस्माभिः।

अतिमहनीयमिदं इतिहासरत्नमतिप्रसिद्धमपि स्कान्दान्तर्गतशिवरहस्यखण्डस्यास्यच भेदमजानद्भिरधुनातनैरीषदज्ञातम् अज्ञातप्रायं वा संवृत्तमित्यस्मिन्विषये कालस्य कौटिल्यमेव हेतुरिति कलनीयम्। कालवशादेवमेतद्ग्रन्थमहिमज्ञानविरलतां मनसालोच्य सात्विकः शैववर्यः सद्गोष्ठीसंस्तवगरिष्ठः सदाशिवचरणारविन्दनिरन्तरसेवानन्दितहृदयः सदाशिवश्रेष्ठ्याख्यः सन्मणिः एतद्ग्रन्थं मुद्राप्य पुस्तकरूपेण प्रख्यापयितुं प्रववृते। मुद्रणायचास्य ग्रन्थस्य तालपत्रादिलिखितानि तत्र तत्र विद्यमानानि आनीतानि पुस्तकानि बहूनि। तत्र प्रथमांशोपकारकाणि तु पुस्तकानि तञ्जावूर् नगरस्थास्तिकवर्येण वेङ्कटेशशास्त्रिणां तनूजेन सदाशिवश्रेष्ठिने उपकृतं

द्राविडलिप्यां पत्रात्मकं शुद्धमेकम्, अन्यच्च पञ्चनदक्षेत्रे विराजितवतां मखिवर्याणां ब्रह्मश्री. वालकृष्णशास्त्रिणां पुत्रनिकटादानीतं नागरलिप्यां पत्रात्मकम् आदितः पञ्चषपत्रहीनं शुद्धमेकम्, अपरञ्च वरहूर्. सुन्दरेश्वरशास्त्रिभिरुपकृतं द्राविडलिप्यां तालपत्रात्मकं शुद्धप्रायमेकम्, इतरच्च तञ्जावूर् नगरस्थेन मन्नियम्भट्टाख्येन महाराष्ट्रब्राह्मणेनोपकृतं नागरलिप्यां पत्रात्मकं शुद्धप्रायमेकमित्येवं पुस्तकचतुष्टयं क्वचिल्लेखनप्रमादयुतं, क्वचित्श्लोकवर्णादिभ्रंशयुतं क्वचिदस्पष्टया लिखितमपि प्रायेण यथावन्मुद्रणायार्हतां संहृत्य सम्प्राप्तम् । इदं किल ग्रन्थरत्नं श्रीमहाभारतवत् क्वचित् गद्यपद्यमिश्रितं क्वचित् वृत्तद्वयेन वृत्तत्रयेण वा ऊनपादेन वा पादमात्रेण वा दृश्यमानश्लोकयुतं क्वचित्अदृश्यमानवृत्तलक्षणमिति ज्ञायमानमपि अतिप्राचीनतया महार्षेयतया अतिगभीरार्थरहस्यवोधकतयाचास्य ग्रन्थस्य महनीयतायां न क्वापि विप्रतिपत्तिः । अयञ्च प्रथमांशः देवकोट्टानगरवास्तव्येन शिवभक्तधुरन्धरेण नेत्रार्पकार्चितश्रीकालहस्तीश्वरालयजीर्णोद्धारकेण मे. अरु. ना. रामनाथश्रेष्ठिवर्येण कृतद्रव्यसहायेन मुद्रितः। आस्तिकवर्याणां महोपकारतया प्रवृत्तस्य वि. ए. पदयुतस्य श्रीसदाशिवश्रेष्ठिवर्यस्यास्य सात्त्विकमणेः सर्वज्ञः सर्वेश्वरः सर्वाभीष्टसिद्धये भूयादित्याशयः आर्यजनानां स्यादित्यखिलमपि शुभम् ॥

इत्थं,

मरुवूर्. गणेश शास्त्री.

वरहूर्. सुन्दरेश्वर शास्त्री.

## श्रीशिवरहस्यप्रथमांशस्य विषयानुक्रमणिका.



श्रीगणेशायनमः

श्रीगुरुभ्योनमः

# श्रीशिवरहस्याख्यः महेतिहासः

# प्रथमांशः

---

सूतमुनि संवादः.

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

शिरसाशिवभक्तानां पादांबुजरजःकणान्। वन्दामहे वयन्नित्यं वासनाध्वान्तभास्करान्
पुरा माहेश्वरे सत्रे प्रवृत्ते मुनयस्तदा । यदृच्छयाऽऽगतं सूतं पैप्पलादं हि सत्रिणः ॥
वाजश्रवस आहुस्तं समवेता महर्षयः । कृष्णाजिनोत्तरासंगा भस्मोद्धूलितविग्रहाः ॥
त्रिपुण्ड्रविलसत्फाला रुद्राक्षांगदकंकणाः । यज्ञेश्वरं महारुद्रं पूजयन्तोऽध्वरेण ते ॥
लिंगेऽग्निहोत्रे सूर्ये च रुद्रसूक्तजपादराः । पञ्चाक्षरावृत्तिपराः शिवनामपरायणाः ॥
पञ्चकोशातिगं देवं पञ्चास्यं परमेश्वरम् । ध्यायन्तः परया भक्त्या तं पप्रच्छुरकल्मषाः ॥
संपूज्यार्घ्यासनैर्भोज्यैः प्रश्रयप्रश्नभाषणैः । अन्योन्यं कुशलप्रश्नैः प्रश्रयावनतास्तदा ॥

---

१-२. इदं प्रथमतःश्लोकद्वयमपि पुस्तकेषु क्वचिन्नदृश्यते.

तेषां कुलपतिर्वृद्धः प्राह तं मौनिभार्गवः ।

मौनिभार्गवः—

पैप्पलाद सनाथास्स्मः त्वदागमनतो वयम् ॥ ८ ॥

माहेश्वरं यतस्सत्रं प्रवृत्तं पारमेश्वरम् । त्वं भक्तोऽतीव रुद्रस्य स्कन्दनन्दीशसन्निभः ॥
जैगीषव्यो मुनिः पूर्वमूर्ध्वरेता महातपाः । शंकराज्ञाप्रभावेन स्कन्दाद्यत्प्राप्तवान् शुभम् ॥
पुण्यं शिवरहस्याख्यमितिहासोत्तमोत्तमम् । त्रिणेत्रापारचरितं द्वादशांशसमन्वितम् ॥
उपासता त्वयापूर्वं मनोवाक्कायकर्मभिः।भक्त्या त्वनन्यया शंभोस्त्वयि यत्प्रोक्तवान्स्वयं
यस्मिन्ददौ हरः प्रीत्या संस्थितेषु मुनिष्वपि । द्वादशांशयुतं साक्षाद्रहस्यं शिवसंभवम् ॥
शिवरत्नमहाकोशं तद्देव्या हृदयंगमम् । स्कन्दायाचष्ट सा देवी प्रीत्या तेन प्रदर्शितम् ॥
शंकरस्याऽऽज्ञया सूतगुरौते शांभवोत्तमे।जैगीषव्या यतत्प्रादात् स्कन्दस्स्कन्दिततारकः
इति शुश्रुम वृत्तान्तं तन्नो ब्रूहि कृपाधिकात्[1] । सुगोप्यमपि तद्ब्रूहि यतो भक्ता वयं शिवे ॥
त्रिणेत्रसुचरित्राणां पात्रभूता मुनीश्वराः । माहेश्वरेण सत्रेण शुद्धगात्रा वयं सदा ॥
सुत्राममान्ये लोकेऽपि वाञ्छा नो पातभीतितः।गात्रे कलत्रे पुत्रेवा मित्रेवास्नेहवर्जिताः॥
विरक्ताश्च वदास्मभ्यं रहस्यं शांभवं मुदा । त्वं[2] भो ज्ञानप्रदस्साक्षाद्गुरुः शिवसमो मतः ॥
त्वं नो माता पितास्माकं वद तत्करुणाबलात् । इत्थं स पैप्पलादो हि सूतःपृष्टोमुनीश्वरैः
उवाच प्राञ्जलिर्वाक्यं तेषां भक्त्या सुतोषितः । अनन्यशंभुभक्त्याच जानन्पात्रश्चतानपि

सूतः—

पात्रं भवन्तः कृपया महेशितुः सत्रेण दानैस्तपसोपसद्भिः ।
पवित्रगात्रावभृतेन दीक्षया वेदान्तसारार्थविचारनिष्ठाः ॥ २२ ॥
शृणुध्वमाद्यं प्रथमांशमेतद्यथा गुरुर्मे भगवान् प्रसादभाक् ।
महेश्वरस्याप्रतिमप्रभावो भावो भवोत्कृष्टहृदो[3]ज्झिताशः ॥ २३ ॥

जैगीषव्यमुनिस्तताप तपसा रुद्रं जपंस्तुष्टधीः
कष्टानप्यसमीक्ष्य संयतमना[4] वर्षायुतं वायुभुक् ।

---

१. "नोब्रूहित्वं घृणानिधे" इतिपाठान्तरम् ॥ २. "त्वंनोज्ञानप्रदः" इति पुस्तकान्तरे ॥
३. "अन्विताशः" इति पुस्तकेषुक्वचित् ॥ ४. "संव्रतमनाः" इतिपाठः ॥

शिष्टः श्रीशिपिविष्टपादकमलध्यानो विशिष्टाऽन्तरो
ब्रह्मिष्ठो हि गरिष्ठमद्भुततरं प्राप प्रसादं हरात् ॥ २४ ॥

इति श्रीशिवरहस्ये प्रथमांशे सूतमुनिसंवादे
प्रथमोऽध्यायः ॥ १.

---

जैगीषव्यसुरसंवादे द्वितीयोऽध्यायः.

सूतः—शैतमुखशिखिवेदशाखा शतमुखनुतषण्मुखाप्तबंधुं ।
नभशिखसुखदं महेभवक्त्रं खगगतिपंकजजातसंस्तुतम् ॥ १ ॥
उत्फुल्लामलनीलनीरजमहासिह्मासनाध्यासिता
पारावारजगद्विबोधचतुरा वाणी मनोहारिणी ।
भो शंभो शिव सांब शंकर महादेवेतितानामृता-
स्वादास्वादनवल्लकीमुखरितानंदोल्लसा पातु नः ॥ २ ॥
पापागाधमहांबुधेर्जनिजराकल्लोलपारंपरी-
मज्जज्जन्तुकदंबकं करुणया पारं परं योगतः ।
शंभोः सैत्कथया सुधासुरसया सन्नौकया केवलं
संतीर्णन्तु करोति जन्तुनिवहं सत्कर्णधारो गुरुः ॥ ३ ॥
कालावच्छेदयुक्तान् विधिहरमुरभिच्छक्रसूर्येन्दुवायून्
सृष्ट्वा तैः क्रीडतीशो जगदुदरदरीमध्यपद्मैकसंस्थः ।
नीरूपो विश्वरूपः प्रमथगणवरैर्विश्वकर्त्र्या जनन्या
हेरंबस्कन्दयुक्तो गुरुरमरवरः पूर्विकः पातु नित्यम् ॥ ४ ॥
पैञ्चास्यवक्त्रकमले मकरंदमेतत् पञ्चत्वनाशनकरं श्रुतिपञ्चकंहि ।

---

१. "शतमुखशिखिभेदवेद" इति भेदशब्दसाहित्ये सुगमतयार्थो ज्ञायते ।

२. "जस्तुतंभजे" ३. "सुन्दरसत्कथासुरसया"

४. "पञ्चास्यवक्त्रकमले" इत्ययंश्लोकः संपूर्णतया पुस्तके नदृश्यते ॥

[1]पुण्यं शैवरहस्यसारमधुना पेपीयतां मुक्तये
[2]पञ्चास्यध्यानपूता द्विजवरतिलकाः पञ्चपापैर्विहीनाः ॥ ५ ॥
वेदेषु प्रथितश्च पञ्चकतया भूतेषु पञ्चस्वपि
कोशे पञ्चकतोन्तिमैकवसतेः शंभोः कृपाकारणं ।
श्रुत्वा [3]जन्मजरादिदुःखनिवहैः पञ्चत्वहीनो भवेत् ॥ ६ ॥
दुर्मायालसितेन पापमतिभागायात्यहो संस्मृतिम्
त्यक्त्वा शंकरनामबोधितकथापीयूषपानोज्झितः ।
कामक्रोधजराविपत्तिमरणैः [4]सौरिं व्रजेद्दुःखितः
स्वस्यास्यान्तरवर्त्तिपायसवरं त्यक्त्वाऽऽखुमूत्रं पिबेत् ॥ ७ ॥

मुनयः—
स कथं तपसा देवं प्रसाद्य परमेश्वरम् । जैगीषव्यस्सर्वगुरुस्तपोराशिः शिवार्चकः ॥
कं काममलभत्सूत तं नो विस्तरतो वद । श्रोतुमिच्छास्ति महती चरित्रे शांभवे हि नः ॥
वदाद्यकरुणामूर्ते [5]शूलिनोऽमलसत्कथाः । स वाजश्रवसां वाक्याज्जहर्ष परमेश्वरम् ॥
ध्यात्वा स्वहृत्पद्मकोशे जगादागाधबोधदाम् । कथांकलुषचित्तानां तमःकालुष्यमुक्तये ॥
सूतः—वायुर्दोधूयते यद्युदयमुडुगणो बंभ्रमीति द्रुतं खे
वह्निर्जाज्वल्यते यन्न च सलिलनिधिर्माधवीं दोधवीति ।
भूर्यद्बद्धोभवीति स्थिरचरधृतये तच्च तादृक्च सर्वं
स्वायत्ताशेषसत्तास्थितियमनपरं शंभुलीलोत्थ मुक्तम् ॥ १२ ॥
श्रुणुध्वं मुनयस्सर्वे सत्रिणः पूतमानसाः । जैगीषव्यतपश्चर्याकारणं तारणं नृणाम् ॥

१. "पुण्यं शैवरहस्यसारमधुना पेपीयतांमुक्तये" इत्ययं पादः अर्थान्वयस्यसमीचीनत्वात् शार्दूलविक्रीडितछन्दो युक्तत्वात् "वेदेषु प्रथितञ्च पञ्चकतया" इत्यस्य श्लोकस्यासंपूर्णत्वाच्चानेनैव श्लोकेन युतस्यादिति निश्चीयते । परन्तु ग्रन्थस्य परमार्षेयत्वात् पुस्तकदृष्टपादक्रमं विपरिणमयितुं नवयमीशामहे ।

२. "पञ्चास्य ध्यानपूताः" इत्ययं पादोऽपि पादत्रयमपेक्षते आकरे तु न दृश्यते ।

३. "जन्मप्राप्यमहीतले बहुविधं पापानिकृत्वामुहुः कामक्रोध" इति पुस्तकान्तरे दृश्यते ॥

४. सौरिं=अन्तकमित्यर्थः अनेन तदधिष्ठित नरकयातना लक्ष्यते ।

५. शूलिनोविलसत्कथाः इति पीठः ।

स तपोऽतपदत्युग्रं शांभवं व्रतमास्थितः । हिमवच्छिखरे पूर्वं संवत्सरशताष्टकम् ॥
अग्नि रित्यादिभिर्मन्त्रैर्विमृज्यांगानि भस्मना । त्रिपुण्ड्रफालस्सततं कण्ठकक्षोरुबाहुषु ॥
धृतरुद्राक्षकोटीरो रुद्राक्षकवचावृतः । पञ्चाक्षरपरो नित्यं रुद्रावर्तनतत्परः ॥ १६ ॥
ग्रीष्मेपञ्चाग्निनिरतः केवलं सलिलाशनः । वर्षास्वाकाशनिलयो हेमंते जलमध्यगः॥
फलपर्णाशनो नित्यं वर्षं पवनपारणः । कटधूमाशनो वर्षं वर्षं लंबदधश्शिराः ॥
एवं तपस्यतस्तस्य जैगीषव्यमहामुनेः । वर्षायुतमगात्तीव्रं रुद्रविन्यस्तचेतसः ॥
वरेणाच्छन्दयद्ब्रह्मा तं विष्णुः पाकशासनः।तस्य ते चित्तजिज्ञासां कर्तुंदेवाव्यवस्थिताः
ताननालोकयन्विप्रो नैव किञ्चिदथोऽर्थयत् । गंभीरसागराकारमलक्ष्यं शिववल्लभम्॥
जितेन्द्रियं जिताहारमूर्ध्वरेतसमव्ययम् । शिवलिंगार्चनव्यग्रं पञ्चाक्षरजपादरम् ॥
रुद्रसूक्तार्थविज्ञानप्रवणं संयतेन्द्रियम् । हंसारूढः पद्मसंस्थश्शार्ङ्गधृग्गरुडासनः ॥
ऐरावतसमारूढः पाकशास्त्रमरैर्वृतः । तस्य चित्तं सुविज्ञातुमागतास्ते मुनिं तदा॥
ब्रह्मा विष्णुस्तथा शक्रस्सुरासुरमरुद्गणाः । ध्यायन्तं परमेशानं जैगीषव्यं तदा द्विजाः ॥
स्वं स्वं वाहनमारुह्य स्वस्वालंकारभूषिताः। *तस्यचित्तपरीक्षार्थं ब्रह्मावाक्यमथाब्रवीत्

ब्रह्मोवाच—

वत्सोत्तिष्ठ महाभाग जैगीषव्य महाव्रत । अदेयं तव नास्त्येव त्रिलोक्यां त्वत्तपस्यया॥
त्वत्समो न मुनिर्ब्रह्मन्नूर्ध्वरेता महातपाः । रुद्रावर्त्तनशीलश्च रुद्रविन्यस्तमानसः ॥
द्युब्रह्मोपेन्द्रलोकेषु विहरस्वाजरामरः। भुङ्क्ष्वभोगान्यथाकामं देवभोग्याननुत्तमान्॥
शक्रस्थानेऽप्सरोभिस्त्वं नन्दने विहराजरः । पिबस्वामृतमुत्कृष्टं देवैः पेयमनुत्तमम्॥
विष्णुलोकेतथाभोगान्वैष्णवान्भुंक्ष्वकेवलम्। नानाविधैर्महायज्ञैःप्राप्यंशक्रसदोऽखिलैः
गवां दानैस्तथान्नादिप्रदानैष्षड्रसान्वितैः। देशे काले च पात्रे च गृहवस्त्रादिदानतः ॥
पानीयशालानिवहैर्घर्मकाले मुनीश्वर । महाषोडशदानैश्च शुद्धद्रव्यार्जितेन च ॥
मण्टपाट्टालकरणैर्विप्राणां स्थापनार्चनैः । उद्यानारामकरणैश्छायावृक्षादिरोपणैः॥
कन्यादानैश्च विविधैर्व्रतकृच्छ्रादिभिर्द्विज। प्राप्या लोकामदीयाहियन्यैर्मानुष्यवर्त्मभिः
तेषूत्सवेन भोगांस्त्वंभुङ्क्ष्वविप्रयथासुखम् । अयं शक्रोऽमराधीशो वरं दातुं तवागतः

*शैवेन्द्रं तं सुरेन्द्रास्ते दृष्ट्वाविस्मयमागता इति क्वचित्पुस्तकेऽधिकतयादृश्यते ॥

करीन्द्रो यस्य वहने चतुर्दन्तस्सुपाण्डरः । यस्सर्वयज्ञे विप्रेन्द्रैराहूतस्सोमपायिभिः ॥
सर्वासुरविसंहर्त्ता कुलिशं यस्य चायुधम् । अहं सर्वजगत्स्रष्टा भारतीपतिरुत्तमः ॥
मत्पुत्रास्सृष्टिकर्तारो न कश्चिन्मत्समो द्विज । पुलस्त्यः पुलहोऽत्रिश्च कश्यपो मनुरेवच ॥
अंगिरा नारदो दक्षो वीतिहोत्रो महामुनिः । नव प्रजानांपतयो येभ्यस्सृष्टिर्विनिर्गता ॥
चतुर्वक्त्रस्त्वहं साक्षाद्वरान्दातुं तवागतः । ततः प्राहांबुजाभाक्षस्तं मुनिंचातिगर्वितः ॥

विष्णुरुवाच—

अहमेवाखिलाधारश्शंखचक्रगदाधरः । ममशार्ङ्गरवं श्रुत्वा दैत्येन्द्रा मूर्छिता भृशम् ॥
सिंहकोलाकृतिरहं भूत्वा देवानतोषयम् । हिरण्याक्षश्च कशिपुं मुरश्च मधुकैटभौ ॥
रणे मया हता दैत्या रावणाद्या महाबलाः । लक्ष्मीपति रहं साक्षात् क्षीराब्धिर्निलयो मम
शेषोऽनन्तफणामौलिर्ममतल्पं महामुने । प्रभाभासितदिक्कुञ्जं कौस्तुभं मम वक्षगम् ॥
चक्रं शतदशारं मे दैत्यास्टब्जस्रणं करे । यत्पक्षाघातपवनैरुल्लोलास्सप्तसागराः ॥
काद्रवेयफणारत्नराजिधारो हि वाहनम् । मन्नाभिकंदसंभूतस्साक्षाल्लोकपितामहः ॥
मदीययशसा व्याप्तं जगदेतच्चराचरम् । मत्प्रसादेन सर्वेषां सिध्यन्त्यखिलसिद्धयः ॥
तादृशं स्वदृशा पश्य त्वत्पुरस्थितमाशुमाम् । त्वत्कामं पूरयाम्याशु तच्छीघ्रं वरयस्वमे ॥
त्वदीयतपसाविद्वन् प्रसादसुमुखोऽस्म्यहम् । तदा स विष्णुवचसा जैगीषव्यो महामुनिः
दृष्ट्वा प्राहामरश्रेष्ठान्निष्कामान्तरसुन्दरः । कामारिध्याननिर्धूतनिष्कामहृदयो मुनिः ॥

जैगीषव्यः—

य त्वोक्तं तत्तथा विष्णो त्वया पद्मासनेन च । शक्रस्यास्य श्रुतं सर्वमैश्वर्यं लोकविस्मयम्
न विस्मापयितुंशक्यंनिष्कामस्यममान्तरं । यथोन्मूलयितुं शक्यः किं मेरुर्वायुनामुना ॥
विष्णो त्वद्वचसा चेतो न विचालयते मम । कैवर्तकन्याकानीनद्विजदैत्यनृपार्भकाः ॥
तवावतारमाहात्म्यवेत्तारो न वयं हरे । हरपादांबुजध्याननिर्धूततमसो वयम् ॥९५॥
शैवेन्द्रेषु न ते धाष्टर्यं विद्यते हि गदाधर । प्राप्तकामावयंविष्णो नित्यानित्यविवेकिनः

यः कामाननुसंदधाति मनसा प्राप्नोति लोकानमून्
ब्रह्मोपेन्द्रशतक्रतुप्रभृतिनां वासस्ततोभ्रश्यति ।

प्राग्जन्मानुभवेन योनिषु चिरं भ्रान्तस्ततो विद्यया
विश्वेशस्य कृपावशाच्छततनुप्रान्ते विमुक्तो भवेत् ॥ ५७ ॥
किं वा ब्रह्मेन्द्रविष्णुप्रभृतिसुरपदैः पुण्यलेशैकलभ्यैः
किं रंभादिकयोनिभोगनिचयैस्स्रक्चन्दनाद्युत्सवैः ।
पाताललावधिसुन्दरैः किमधमैः किं कामनाविप्लुतैः
युष्मद्बोधनया नचालयति मनो निष्कामजाः श्रोत्रियाः ॥ ५८ ॥
संसारापारसारप्रचुरितमनसो नित्यनित्याश्च भोगाः
काम्यन्ते कामिभिर्ये सततबहुरसाः कातराः पामरास्ते ।
श्रीमन् धीमन् परार्थिन् सकलसुरगणाः श्रीशशांकांशमौलेः
श्रीमत्पादाब्जयुग्मप्रणिहितमनसो निर्भयाश्चामरास्ते ॥ ५९ ॥
नरकमुखसुखानां व्यर्थकोलाहलानामसुखमुखमतीनां यद्यपि घ्नन्ति तत्वम् ।
हरपदनिरतानां विश्वभूतात्मनान्नः करणविषयभोगा नैव लूयन्ति विष्णो ॥ ६० ॥
ब्रह्मा शक्रो भवांश्च प्रकृतिपरवशाः पश्य सर्वेश्वरस्य
श्रीश श्रीशंकरस्यागतिसगतिगतिव्योमकेशस्य शंभोः ।
तस्यायं दासदासस्त्रिपुरपुरहरश्रीशिवस्यास्य कर्त्तुः
पातुर्हर्त्तुः प्रकर्त्तुः शृणुत सुमनसो नित्यमन्यन्न जाने ॥ ६१ ॥
पशुपतिवरदानात्तत्वसंप्राप्तभूतेः पशुवरवरदानात्किं मम प्राप्तिहेतुः ।
पशुपति चरणाब्जध्यानसन्मानसं मे नहि खलु भवतृष्णापारदूरं हरेद्यः ॥ ६२ ॥
त्र्यक्षांघ्रिप्रवणप्रसन्नमनसो लक्ष्यस्य किं मे सुरै-
र्लक्षीभूतभवत्पदेषु नितरां वाञ्छा न मे जायते ।
किं तच्चाक्षतवीक्षणास्थिरचिरं विश्वन्तु विश्वेश्वरा-
ज्ञातं तव मुहुर्मुहुः प्रविलयं यात्येव यातं भवेत् ॥ ६३ ॥

१. "आगतिसगतिगतिव्योमकेशस्य" इति पदविभागो ज्ञेयः । आगम्यत इत्यागतिः कर्मणिक्तिन् उपास्य इति यावत् सगतीनां ज्ञानिनां गतिः प्राप्यभूतपरमकाष्ठारुपा "सा काष्ठा सा परा गति" रित्यादि श्रुतिशतप्रतिपादित इति बोध्यम् ।

रज्जौ कल्पितदन्दशूकसदृशं देवा नकिञ्चिज्जगत्
जातश्चापि जनिष्यमाणमपिवा भूतं हि रज्जौ भ्रमः ।
तद्वत्सर्पदशोपमानमिति या धीर्वै परं मुक्तये
सा धीश्चापि निरन्तरं भगवतश्शंभोः कृपायाः फलम् ॥ ६४ ॥
नक्वापि स्पृहयन्ति शंकरकथापीयूषपानात्परम्
लिंगालिंगनपूतभस्मनिटिला रुद्राक्षमालाधराः ।
पुण्यास्तेशतरुद्रमध्यविलसन्नाम्नां पदार्थादराः
भावा भावुकदिव्यजन्मतपसा भूमण्डले पावनाः ॥ ६५ ॥
मारापारशराग्रकुण्ठनमहासारैकधारोपलाः
सारासारविचारधीरहृदयाधौरेयधुर्यास्सदा ।
पारावारविकारसंसृतिमहादुःखांबुधेस्तारकाः
विश्वाधीश्वरपूजकास्तुनियतं पापौघसंहारकाः ॥ ६६ ॥
सूतः—जैगीषव्य मुखाब्जनिस्सृतमहोदारोत्कटं ते मधु
पीत्वा चामरनायका मधुतृषास्वानंदितस्वान्तराः ।
ऊचुः प्राञ्जलयस्तदा द्विजवरं ब्रह्मा महेन्द्रो हरिः
ज्ञात्वा तस्य विनिश्चयं शिवसमासक्तं मनश्चापि ते ॥ ६७ ॥
देवाः—प्राप्येशानपदांबुजोत्थसुमनामोदात्तसन्मानसः
त्वं वै शांभवपुंगवस्तव हृदं ज्ञातुं प्रवृत्तास्सुराः ।
निष्कामोऽसि निरंकुशोऽसि भगवन् प्रोक्तं हि तत् क्षम्यताम्
स्वात्मारामतया त्वयैव सकला भोगास्सदैवोज्झिताः ॥ ६८ ॥
एवं ते विबुधाः प्रशस्य च मुनिं चालिंग्य लिंगार्चकं
धन्यास्स्मेति वदन्ति सुन्दरगिराप्यानन्दधारावृताः ।
शैवोक्तामृतवाक्यनन्दितमनस्स्वान्ता मुदा ते द्विजाः
स्वं स्वं वाहनमाधिरुह्य तरसा गन्तुं मनश्चक्रिरे ॥ ६९ ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यसुरसंवादो नाम
द्वितीयोऽध्यायः. २.

## जैगीषव्यसुरसंवादे तृतीयोऽध्यायः.

जैगीषव्यः—

शृणुध्वं ब्रह्मविष्ण्वाद्या यन्मानस्यमहैतुकम्। नित्यं सर्वज्ञता तस्य देवदेवस्य शूलिनः ॥
यो वेदान्तैकसंवेद्यो यं ध्यायन्ति मुमुक्षवः। यस्य निश्वासपवना वेदाश्चत्वार एव हि॥
यो ब्रह्मविष्णुरुद्राणां जनकः परमेश्वरः। सूर्यस्य जनिता वह्नेश्चन्द्रचक्रानिलात्मनाम् ॥
न तस्य कारणं शंभोस्स सर्वस्यापि कारणम्। यस्समाराध्यतेविप्रैर्भिन्नभिन्नक्रियादिभिः
यस्त्वग्नीषोमजं सर्वं जगत्पाति सनातनः। असंगस्सर्वभूतेषु निर्विकारो विकारिषु॥
यं सूक्ष्मबुध्या पश्यन्ति स्वहृदा वीतरागिणः। यो ध्यानेन जपैर्यज्ञै स्तपसानाशकेन च ॥
स वेत्ति वेद्यानक्षाणि मनोवाचामगोचरः। यस्माद्भूतानि जायन्ते येनजीवन्तितान्यपि॥
यत्र लीनानि कल्प्यन्ते स एकः परमेश्वरः। यस्त्वपाणिर्निरंघ्रिश्चाप्यचक्षुश्चाप्यथाश्रवाः
सोऽन्तिके स हि दूरस्थस्सबाह्याभ्यन्तरेऽपिच। ससत्यं ज्ञानमानन्दो गुणैर्हीनश्चनिर्गुणः
स्वतन्त्रश्च सुपूर्णश्च तेन पूर्णमिदं जगत्। स नित्यश्चेतनानाञ्च पतीनां पतिरीश्वरः ॥
यस्त्वेकस्सृजतीशानश्चराचरमिदं जगत्। यथोर्णनाभिस्तन्तून्वै सृजते ग्रसतेऽपिच ॥
यस्य रूपापरिज्ञानाद्देहमात्मेति मन्यते। यस्य रूपापरिज्ञानान्मन आत्मेति मन्यते ॥
यस्य रूपापरिज्ञानात्खानिचात्मेति मन्यते। यस्यरूपापरिज्ञानाद्भूतान्यात्मेतिमन्यते॥
यस्य रूपापरिज्ञानात्सर्वमात्मेति मन्यते। यस्याकाशश्शरीरंहि चाकाशो नैव वेत्तितम् ॥
यस्य भूमिस्स्वरूपं हि तं भूमिर्नैव वेत्ति हि। यो मनश्चक्षुरादीनां नियंता परमेश्वरः॥
यस्य भासा जगद्भाति सशक्रानलवायवः। भीत्याभान्ति च वान्त्येव चेतनानां सचेतनः
यस्य मायाविलसितं जगत्स्थावरजङ्गमम्। स मायी परमेशानस्तेनावास्यमिदं जगत्॥
योऽशरीरो ह्यलिंगश्च यमिभिः परिदृश्यते। यस्य विज्ञानमात्रेण सर्वं विज्ञातमेव हि॥
ज्ञानमात्मा त्वहं ब्रह्म ज्ञानं शान्तिरनुत्तमा। स एकः परमात्माहि नेहनानास्तिकिञ्चन॥
स एको ज्ञानवानीश ईशनीभिस्स ईशते। एक एव महान्रुद्रः पुरुषो विश्वतो मुखः॥२०॥
त मेकं ज्ञानमात्मानं त्यक्त्वान्यत्तदिदं जगत्। यज्ज्ञानाद्धृदयग्रंथिछेदनं जायतेनृणाम्॥
यस्यैकत्वं हि विज्ञाय शोकं तरति मानवः। स एव ज्योतिषां ज्योतिस्स एव तमसांतमः॥
स एकस्सर्वभूतेषु बहुधा भाति मायया। यो जाग्रत्स्वप्नतुर्याभिर्गूढोत्मा न प्रकाशते॥

योदृश्यस्सूक्ष्मया बुध्या तत्प्रसादेन केवलम्। तपसा वेदितव्यस्स नान्यथा कर्मकोटिभिः
यो वेदादौ स्वरः प्रोक्तो वेदान्तेषु प्रतिष्ठितः। य ईशानोऽधिविद्यानां पारदृश्वा सनातनः
यो भूतसंघे सुप्तेऽपि जागर्तीशो महेश्वरः। यस्मात्प्राणो मनो जज्ञे सहि नात्येति किश्चन॥
योज्योतिर्ज्योतिषांदेवोविश्वात्माविश्वतोमुखः। योभूमिमत्यतिष्ठच्चयस्माद्ब्रह्माणिजज्ञिरे
यतो ब्रह्मेशविष्णिवन्द्रास्सह देवैश्च जज्ञिरे। यो ब्रह्म ब्रह्मविच्चापि चात्र ब्रह्म समश्नुते॥
एष ब्रह्मैष विष्णुश्च एष देवो विराजते। एष भूतपतिर्देव एष सेतुर्विधारणः॥
एकमेव महादेवमिन्द्रमित्रादिभिस्सुरैः। नामरूपगुणैश्चैव मायया मन्यते जनः॥ ३०॥
इदं जगत्पुरा सृष्ट्वा तस्मिन्प्राविशदीश्वरः। व्याकुर्वन्नामरूपे तु व्यवहारीव भासते॥
पुरुषोयःपरस्सूक्ष्मोभोक्ताभोज्यश्चयस्सदा। योखिलोविश्वनेताचयस्मान्नान्यत्परायणम्
अशरीरोऽव्ययात्मायश्चाशीर्णोह्यविनाशकः। योमायया शरीरस्थस्तद्वीर्यैर्नैवलिप्यते॥
भोगीव भासते देवो ह्यन्नपानादिभोगभाक्। यश्च सर्वेन्द्रियातीतस्सर्वेषामपि भासकः॥
योऽव्यक्तोव्यक्ततामेत्य जगत्पुष्णाति लीलया। योऽविद्ययासंसरति विद्ययाच प्रमुच्यते
योऽनाधारोऽखिलाधारस्स्वेमहिम्निप्रतिष्ठितः। यंशृण्वंतोपिवेदान्तैर्मुह्यन्तियतयस्सुराः
यस्त्वेनंवृणुते देवास्तस्यैवात्माप्रकाशते। य आत्मासर्वभूतस्थो जडानां विदुषामपि॥
यो जगज्जन्ममरणैरशीर्यो नहि शीर्यते। योह्यागतैर्दुःखसङ्घैस्सुखैर्वा स्पृश्यते नहि॥
यस्मिन्ज्ञातेऽखिलं ज्ञातं नकिञ्चिदवशिष्यते। यमविज्ञायविश्वेशंदुःखान्तन्नाधिगच्छति
योसंगःपुरुषोनित्यस्स्थाणुवन्निश्चलोगुणः। योनजीवश्शिवश्चापिचान्योपाधिविवर्जितः
पश्चकोशातिगोह्यात्मा सदानन्दघनस्सुखम्। एकोऽद्वयस्तृतीयश्च नवैसवहुधाविभुः॥
योन्तिकेसहिदूरस्थस्तेनावास्यमिदंसुराः। सभूमापरमानन्द आर्तमेतज्जगत्सुराः॥
तज्जं तल्लंच तदनं जगदेतत्प्रकाशते। यस्तमःपारगो नित्यं मनोवाचामगोचरः॥४३॥
यस्यैव शक्तिर्विविधा स्वभावाज्ज्ञानदासुराः। सएषपरमानन्दस्सदसत्पक्षवर्जितः॥
लिंगहीनस्सदाऽसंगोयोवेदान्तैकगोचरः। दृश्यतेत्वग्र्ययाबुध्यासूक्ष्मयासूक्ष्मदर्शिभिः॥
मुक्तयेदेहिसंघानां सुलभोव्यक्ततांगतः। त्रिणेत्रो नीलकण्ठश्चचोमादेहार्धविग्रहः॥४६॥
क्रीडतेप्रमथाधीशो हेरंवस्कन्दपुत्रवान्। सर्वावासोऽपिभगवान्कैलासाचलमास्थितः॥
यस्यलिंगार्चनेनैव त्रैलोक्यश्रीरवाप्यते। यस्यप्रसादाद्विष्णुत्वं त्वयाप्राप्तंसुदर्शनम्॥

ब्रह्मणस्सृष्टिसामर्थ्यमिन्द्रस्याप्यरिनिग्रहः । देवराज्यं भोगभाग्यं सर्वमैशादनुग्रहात् ॥
नतत्रसूर्योदेवेशो भाति चन्द्रो नचानलः। भीत्याभान्तिच सर्वेऽपिसोऽन्तरापुरुषोहरः
हिरण्यबाहुरीशानो हिरण्यपतिरीश्वरः। कर्मदेवास्सर्वएत्र ब्रह्मविष्णुमहेश्वराः॥ ५१॥
यस्याज्ञावर्त्तिनस्सर्वे सर्वेषांकारणं शिवः । ब्रह्मणश्चशिरश्छिन्नं देवदेवेन लीलया ॥
इन्द्रस्यास्यभुजस्तंभो येनाकारि दयालुना। यस्य भक्तस्य शापेन दशजन्मानि ते हरे॥
सौकरं नारसिह्मन्तेरूपं संशिक्षितं हरात्। सर्वं जानामितेविष्णो ब्रह्मन्शक्रगतव्यथाः॥
यूयंहिपशवोऽज्ञानजृंभिताः पशुपस्सहि । गच्छन्त्वत्र यथाकामं मादृक्षेनास्तिधृष्टता ॥
भवंतो देवतास्सर्वे त्वहंशर्वपदाश्रयः । इत्युक्त्वा ध्यानमातिष्ठज्जैगीषव्यो महामुनिः॥
ध्यानेन तेन महता चेदमाह तदा द्विजाः ।

जैगीषव्यः—

यच्चब्रह्म जगज्जगच्च यदृते नास्तीति वद्यं पदं
त्वेवं ये विदुरीश्वरेश्वरधिया ते यांति शंभोः पदम् ।
ते लोकान्हि नयांति यापितमहादुःखाभितप्तापदः
सौख्यञ्चापि समाप्नुवंतिभगवंस्त्वद्भक्तिसारादराः ॥ ५७ ॥

बाहुभ्यान्तव धन्वने च भगवन्कुर्वे नमस्स्वस्तये
भीतास्त्वद्धनुषः कराग्रविशिखैर्हेत्या शरव्याय च ।
पाहीश प्रविमुच्य ज्यामथधनुःकोट्योश्शरान्त्संत्यजन्
हेतिं पातय मां विलोकय दृशा दूरे निषंगं त्यज ॥ ५८ ॥

शैवेन्द्राश्शिवसंमतास्सुरवरापारव्यथाभीतितो
नो बिभ्यंति न चाप्नुवंति च हरे युष्मद्वरान् किंफलान् ।
किंत्वीशानपदारविंदभजनान्नान्यन्मनश्चिंत्यते
क्षुद्रेषु प्रभविष्णवो नहि वयं यात स्वधामन्त्सुराः ॥ ५९ ॥

हारा एव भवंति भाग्यनिवहैश्श्रीचन्द्रचूडार्चका-
स्तेषां त्वत्पदवासनापि सुतरां वाणीश शक्रालयम् ।

किं जायेत गिरीन्द्रशेखरगतो मत्तद्विपालिं भिन-
त्सिह्मः किंतृणमत्ति तद्वदिह मे त्वत्तो वराणां स्पृहा ॥ ६० ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यसुरसंवादो नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

विष्णुवाक्यं नाम चतुर्थोऽध्यायः.

देवाऊचुः—

तव भावमहो ज्ञातुमागता वयमद्य वै । स एव सर्वकामानां पूरकोऽस्ति न संशयः ॥
किं तवासुकरं विद्वंस्त्रिषु लोकेषु विद्यते । त्वन्मनो ध्यायति सदा यतश्शिवपदांबुजम् ॥
येषां मनसि विश्वेशपदांबुजयुगं भवेत् । तेषां किं भुवनैश्वर्यैर्विनश्वरतरैर्मुने ॥ ३ ॥
यतो महेशकृपया दृढा भक्तिर्भवेच्छिवे । यया भक्त्या द्विजवरास्सुरासुरनरा अपि॥४॥
मुक्ताश्च मोचयंत्यन्याञ्छैवाः कारुणिकोत्तमाः । भक्तिरेवविरूपाक्षेसर्वेषांमुक्तिदायिनी
भक्त्यासंपूजितोलिंगे ह्यलिंगोऽपिमहेश्वरः । बिल्वपत्रैस्तत्फलैर्वा भस्मनावा महच्छ्रियम्
प्राप्नोतिमुक्तिसाम्राज्यमपुनर्भवदायकम् । भस्माभिषिक्ता येभावास्त्रिपुण्ड्रांकितमस्तकाः
रुद्राक्षमालाकोटीरधारिणो मालिकाधराः । पञ्चाक्षराद्यूक्तिपरा रुद्राध्यायजपादराः ॥
शिवलिंगार्चकाश्शैवाश्शिवक्षेत्रनिवासिनः । नैवेद्यभोजिनश्शंभोर्यात्रापुष्पफलार्पकाः ॥
अनन्यस्वांतरा विप्रा मनोवाक्कायकर्मभिः । शिवध्यानेन संतृप्तास्सदाशिवकथादराः ॥
गणयन्ति महाशैवा नास्मान्कर्मसुरान्मुने । तवेदृङ्मानसं विप्र नकस्यापि मुनेरपि ॥
त्वद्भावो भवसंसक्तो भवनाशाय केवलम् । यथा रत्ननिधिं प्राप्य स किंगृह्णाति लोष्टकम्
यथा मत्तेभकुंभस्थस्सकिं खरमपेक्षते । यथैव कल्पकवनं संप्राप्यार्कमपेक्षते॥ १३ ॥
यथा मणिमयं हारं प्राप्य किंवा वराटिकाम् । तथास्मदीयभोगेषु मूढोरज्यतिकामतः॥
त्वं कामारिपदध्यानान्निष्कामोऽसिमहामुने । त्रिणेत्रपादकमलमित्रं त्वन्मानसं मुने॥
त्वमेव शैवधुर्येषु मूर्धन्यो धन्य एवहि । तव संदर्शनापारसंहृताखिलपातकाः॥ १६॥
जगज्जन्मसिसृक्षासु विश्वेशेन नियोजिताः । नलभामैव विश्रांतिं श्रांतास्संसारवर्तिनः॥
सदावैषयिका देवा वयं सर्वे महामुने । तववाक्पंकजोद्भूतसाधुसाराश्रितांतराः॥१८॥

वयं विश्रांतिमापन्नाः प्रपन्नाः परमां गतिम् । शैवेन्द्रांगमहासंगनिर्मुक्ताखिलहृत्तमाः ॥
उत्तमा विधिविष्ण्विंद्रा देवेषु तवदर्शनात् । कालकूटमहाज्वालानिर्दग्धान्हि महामुने ॥
अशीतयन्महादेवः पीत्वाहालाहलंविषम् । देवानरक्षद्भगवान्हत्वा त्रिपुरमुल्बणम् ॥
कृत्वा मां बाणमत्युग्रं धृत्वामेरुं शरासनम् । मौर्वींश्चकाराहिपतिं सारथिं विधिमातनोत् ॥
वेदाह्वयांस्तथाचक्रे चक्रे सूर्यश्च चन्द्रकम् । धरामण्डलमेतद्वै ससरित्सवनाब्धिकम् ॥
सुरासुरान्भटांश्चक्रे कर्षणे वायुमण्डलम् । किं स विश्वाधिको देवो विश्वभूतेषु गण्यते ॥
अस्मासु पशुभूतेषु देवः पशुपतिश्शिवः । पशूनस्मान्निवध्नाति मायापाशेन शंकरः ॥
सएव कृपया जन्तून्मोचयत्येव सर्वदा । यस्य लिंगं सदाकालं पूजयन्ति मरुद्गणाः ॥
सत्पूज्योहि महादेवस्सर्वे वयमतंद्रिताः । जन्ममृत्युजरादुःखैरभिभूता महामुने ॥ २७ ॥
पुरा मन्नेत्रपद्मेन संपूज्याप्तंसुदर्शनम् । दैत्येन्द्रद्रावकं साक्षाद्विश्वेशस्य कृपावलात् ॥
मृकंडुतनयं कालमृत्योर्यो मोचयच्छिवः । श्वेतञ्च तं नृपसुतमरक्षत्कालपाशतः ॥
यस्य लिंगस्य सन्मौलिं मूलं ब्रह्माहमप्यधः । अदृष्ट्वा परमां शांतिं प्राप्तवंतौ पुरा मुने ॥
उपमन्युं मुनिसुतं गाणापत्येन योजयत् । शिलादतनयेसाक्षात्स्वसारूप्यं ददौ हरः ॥
भृंगीशंच मुनिश्रेष्ठं कोपनं भक्तिमत्तरम् । निजभक्तगणश्रेष्ठं चण्डीशञ्चाप्यकल्पयत् ॥
दैत्येन्द्रपुत्रं बाणञ्च सहस्रभुजमातनोत् । वीरभद्रेण निंदंतं विधिं शिक्षयदीश्वरः ॥ ३३ ॥
ममावताररूपाणि मत्स्यकूर्मकिटीहरिः । नरसिंह्मादिरूपाणि हंतात्युद्वेजकानि मे ॥
शारभं रूपमास्थाय पुरा घोरतरं शिवः । शिवभक्तास्तथान्येऽपि सुरासुरमुनीश्वराः ॥
प्रसादाभिमुखेनैव प्रसादेन नियोजिताः । स्मरांधकगजाद्याश्च शिक्षिताश्च पिनाकिना ॥
इन्द्रस्यास्य प्रसादेन सवज्रस्तंभितो भुजः । न तेन सदृशो देवो यो वेदांतैकगोचरः ॥
अनन्तमहिमाधारस्त्वपरिच्छिन्नवैभवः । योगीयतेसदेशानो वेदे वेदान्तमौलिषु ॥
यं यजन्ति महासत्रे यो ध्येयो योगिभिस्सदा । यंदानैस्तपसा भक्त्या पूजयानशनेन च ॥
ऋषयो देवसंघाश्च स्वस्वकामार्थसिद्धये । विश्वोविश्वातिगस्साक्षाद्विश्वेशो विश्वभावनः ॥
न तस्य कार्यं करणं न क्रिया वा महेशितुः । परास्य शक्तिश्चित्रैव सर्वाकारेण भासते ॥
तन्मायामोहिता एव वयं सर्वे सुरासुराः । जन्ममृत्युजरादुःखैरभिभूतास्स्म सर्वशः ॥
तस्यैवाज्ञावशादेतज्जगच्चक्रं प्रवर्त्तते । वह्निर्वहति कव्यानि हव्यानिच सुरेष्वपि ॥ ४३ ॥

उदेति सविता नित्यं किमस्तं याति शासनात्। सोमोऽमृतमयस्साक्षादुदेत्योषधिनायकः
नक्षत्राणि भ्रमन्त्येव ग्रहाधारा भ्रमन्तिहि। प्रवाति पवनो मंदं मेघा वर्षन्ति शासनात्।।
भूमिर्वहति विश्वंवै लोकास्सर्वे चतुर्दश । शेषोऽपिधत्ते शिरसि भुवं भवपदाश्रयः ।।
पर्वतास्सरितो वाप्यस्समुद्रास्तस्य शासनात्। नोद्वेलतां प्रयान्त्येव स्मरशासनशासनात
पालयामि शिवादेशाज्जगत्सासुरमानुषम्। विधिस्सृजति भूतानि रुद्रोऽन्ते संहरिष्यति।।
इन्द्रः पालयते देवान्त्सोसुरान्त्संहरत्यपि। यमोऽपि पापिनां शास्ता यमशासनशासनात्
कुबेरो धनपो नित्यं वरुणो यादसांपतिः । ईशानो रुद्रसंघानां यक्षाणां निरृतिस्तथा ।।

सर्वं सासुरमानुषं जगदिदं तस्येशसच्छासना-
दास्तेऽत्यंतधियाभियासुरनरव्रातास्तुवंते ऋचा ।
साम्ना रुद्रशतैर्महोपनिषदां सारार्थवाक्यैश्शिवः
कस्तादृक्षवरिष्ठ एवहि मुने देवाधिदेवश्शिवः ।। ९१ ।।
सर्वे स्वीयविमानवाहनगणैश्श्रेणीभिरेणीदृशा-
मन्योन्यं पुनरीशपादमनसस्संवर्णितन्निश्चयम् ।
इत्युक्त्वा प्रययुर्मुदा विधिहरी शक्रस्तथान्ये सुरा
नत्वा तं मुनिपुंगवं सुरगणा यातास्स्वगेहं तदा ।। ९२ ।।

इति श्रीशिवरहस्ये प्रथमांशे विष्णुवाक्यं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

---

## जैगीषव्यप्रसादकरणं नाम पञ्चमोऽध्यायः.

सूतउवाच—

एवं तपस्यतस्तस्य कालोभूयानवर्तत । वल्मीकावृतगात्रस्य तृणवल्लीयुतस्य च ।।
तस्यैव तपसा लोकास्सन्तप्ताश्च सुरासुराः । विस्मयंतो मुनिं दृष्ट्वा मुनयस्संशितव्रताः ।।
नारदो वीणया लोकान्नाम्नागायन्महेशितुः। श्रावयन्त्सततं लोकान्धूतपापानथाकरोत
हिमवच्छिखरं दृष्ट्वा जैगीषव्यमदृश्यत। वल्मीकस्यान्तरदृशा पश्यन्वै नारदो मुनिः ।।
तपसातापयल्लोकान्ध्यायन्रुद्रमनन्यधीः । रुद्राध्यायार्थविज्ञानप्रवीणमनसं सदा ।।

दृष्ट्वासविस्मयोपेतो नारदस्तमभाषत । जैगीषव्य महाभाग तपसा संशितव्रत ॥

नारदः—

त्वत्तपस्या महातीव्रा तया लोकाश्च तापिताः। किमद्य प्रार्थ्यमस्तीह तवकामस्य सत्तम॥
त्वादृशा नो मुनिश्रेष्ठा दृष्टावापि श्रुता मया । आकौमारब्रह्मचर्ये तवैव निरतं मनः ॥
ऊर्ध्वरेतास्त्वमेवासि मुनिसङ्घेषु सुव्रत। तवाद्यदर्शनाद्विप्र धन्योऽस्मि नितरां मुने ॥
तवेन्द्रब्रह्मलोकेषु वैष्णवे प्रथितं यशः । लोकपालामरास्सर्वे मुनयोतीव सुव्रताः ॥
दृष्ट्वा निष्ठान्तवात्युग्रां तथेदृक्तपसः क्रियाः। रुद्रावर्त्तनशीलस्य चोग्रविन्यस्तचेतसः॥
स नारदस्य वचसा जैगीषव्यो महामुनिः। स्वागतेनाभिनंद्यैनं निषीदेत्यब्रवीन्मुनिम्॥
उपविष्टे नारदे तु जैगीषव्योऽमितप्रभः । उवाच तं देवमुनिं वीणासक्तकरं तदा ॥

जैगीषव्यः—

लोकांस्त्वया सञ्चरता किं दृष्टश्चित्रमद्भुतम् । तन्मे वद महाभाग कुशलस्सर्वसंसदि ॥
त्वया नाविदितं किश्चित्त्रिषु लोकेषु विद्यते। स जैगीषव्यवचसा प्राह तन्नारदो मुनिः॥

नारदः—

विष्णुलोके ब्रह्मणश्चशक्रसंसदिचाप्यहम्। गच्छन्पश्यामिपुण्यानांभोक्तारोमुनयोनृपाः
पुण्यान्ते पतमानांश्च नानायोनिषु सत्तम। भ्रमन्तः कर्मणानेन तेजोमात्रशरीरिणः ॥
तिरस्कृतास्त्वया देवा ब्रह्मविष्णुहरीश्वराः । येषां प्रसादतस्सर्वेस्वर्गानन्तश्रियेमुने ॥
तेऽपि देवास्त्वया धूतानिष्कामेनेदमद्भुतम्। कामांगनाशपादाब्जध्याननिष्कामितंमनः
तवेदं मानसं दृष्ट्वा देवाश्चाश्चर्यमागताः। ब्रह्मा विष्णुस्तथा शक्रस्सर्वे च मुनयो वयम् ॥
एष गच्छामि कैलासं नानागणनिषेवितम् । विज्ञप्तुं ते तपश्चर्यां देवदेवाय शंभवे ॥
इत्युक्त्वोत्थितएवासौ नारदो दिव्यदर्शनः। जगामलोकानखिलान्कैलासञ्चमहामुनिः
नानारुद्रगणोपेतं सुरकिन्नरशोभितम् । नन्दिभृङ्गिमहाकालगणनायककोटिभिः ॥
रुद्रैश्च रुद्रकन्याभिरप्सरोभिस्समावृतम् । हेरंबस्कन्दनन्दीशबाणचण्डीश्वरादिभिः ॥
समावृतं तरुवरैर्नानापुष्पफलोपगैः । प्रफुल्लपङ्कजोत्फुल्लनीलोत्पलसरोवरैः ॥ २५ ॥

१. लोकानामिति पाठः ।

कैलासशिखरापारसौधपंक्तीश्वरालयैः । कनत्कनकरत्नौघमौलिकुंभपताककैः ॥
दोधूयमानैर्नितरां राजद्भूषगणैस्तदा । शुकबर्हिणनादैश्च कोकिलालापसुन्दरैः ॥
मुरजानकशङ्खादिमड्डुमद्दलवादनैः । दुन्दुभ्याघातजारावविनादितगुहामुखैः ॥
वीणाक्कणनशब्दैश्च गन्धर्वकृतगायनैः । मुरलीसरलीलीलाविलासाप्सरसाङ्गणैः ॥
प्रनृत्यत्किन्नरानीकशिञ्जन्मञ्जीरनिस्वनैः । कैलासशिखरापारमद्राक्षीन्नारदो मुनिः॥
द्वारिस्थितन्नन्दिकेशमपश्यद्वेत्रपाणिनम्। जटामकुटशोभाढ्यं त्रिपुण्ड्राङ्कितमस्तकम्॥
भस्माभ्यक्तं रुद्रगणैस्समन्तात्परिवेष्टितम्। ददर्श नयनाब्जाभ्यां तेजोराशिमिवस्थितम्
तेनाभिप्रश्नकथनैर्नन्दितो नारदो मुनिः । उवाच द्वारि देवस्यगायन्मधुरवीणया ॥
नामानि देवदेवस्य पावनानि महामुनिः। नंदिकेशाग्रतस्स्वैरं जगौ रुद्रानुमोदितः ॥

नारदः—

शिव शिव भव हर देवशासन नगशर पाहि दयाकटाक्षसारैः ।
भव भवजनितां रुजं हराशु प्रमथाधीश्वर वीर धीर पाहि ॥ ३५ ॥
शिव शिव दहनाब्जमित्रसोमप्रकटविलोचन कृत्तिवास शंभो ।
तव शिव कृपया स्मरांधकारे भव भवशमनाद्भयं नचैव ॥ ३६ ॥
हरगिरिसुतया सदोपकण्ठ प्रबलगराशन नीलनीलकण्ठ ।
हृदिभवयमिनां किलोपकण्ठ प्रथितमहोरगभोगशोभिकण्ठ ॥ ३७ ॥
हर हर शमनैकभीतिजातं हर हर भवजातघोरदुःखम् ।
हर हर पापमपाकुरुष्व शंभो हर हर मुरजित्सुपूजितांघ्रे ॥ ३८ ॥

शंभो शङ्कर चन्द्रशेखर दयासारामराधीश्वर
पापापारजलाब्धिशोषणमहाबाडव्यवह्ने शिव ।
कान्तार्धाकृतिशोभितांग कमलाकान्ताक्षिपूज्यांघ्रिक ,
विश्वेशानविधिप्रचण्डशिरसालग्नप्रयाणे हर ॥ ३९ ॥

शूलप्रोत्थितदक्षवक्षहरण त्र्यक्षामराधीश्वर
पाहीमञ्जनमर्भकं तव विभो भावैकलभ्यप्रभो ।

गानंते शृणु नारदस्य हि मुखाद्वीणाक्वणन्मञ्जुलम्
भो भो देववर प्रसीद भगवन्दृष्टिं कृपायाः कुरु ॥ ४० ॥

गानान्ते नारदमुखाद्वीणाक्वणनमञ्जुलम्। श्रुत्वैवं नन्दिकेशाद्या गणाश्शंभोर्महात्मनः॥
व्यजिज्ञिपंस्तेदेवाय शङ्कराय महात्मने।प्रणम्य नन्दिकेशोऽपि पिधायास्यं करेण वै॥
उवाच देवं वरदं प्रसन्नास्यं त्रिलोचनम्॥

नंदिकेश्वरः—

शंभो शङ्कर धूर्जटे त्रिणयनापारव्यथां संहर
पारावारमहाप्रभाव जगतां व्यापारसारादर।
त्वन्नामामृतधारया जगदिदं प्राप्तस्तवेशांतिकम्
संभाव्य प्रमथाधिनाथ पदवीं द्रष्टुं पदाब्जं तव ॥ ४३ ॥
द्वारे तिष्ठति वारितस्सहि मया किञ्चाज्ञयाशुप्रभो
देवाज्ञावसरेण तं गमयितुं दिव्यं मुनिं नारदम्।
त्वत्पादांबुजलोलमिष्टमनसं सर्वैर्विशिष्टान्तरम्
भक्तिज्ञानविरक्तिशालिमुखितः पादौ दिदृक्षुः प्रभो ॥ ४४ ॥

नंदिकेशवचश्श्रुत्वा कटाक्षाग्रेण शङ्करः। संज्ञां चक्रेऽखिलेशानो नारदागमनं प्रति॥
नारदोऽपि च देवेशं नत्वा तुष्टाव हर्षितः। शिपिविष्टं महादेवमष्टाकृतिमनोहरः॥

नारदः—जय जय देव महेश धूर्जटे जयजय विश्वविधान दक्षशिक्ष।
जय जय विश्रुतवेदगीतकीर्ते जय जय भक्तजनार्पितैकभुक्ते ॥ ४७ ॥
जय जय भगवंस्तपःक्रियाणां फलदानोन्मुख पञ्चवक्त्र शंभो।
तव शिव भगवन्पदाब्जयुग्ममभिपूज्य स्वहृदा तपैकराशिः ॥ ४८ ॥
मुनिरास्ते हिमवन्नगोर्ध्वमौलौ तव दिव्यामृतदेहलोकनैकतर्षः।

इत्थं नारदवाक्येन जातहर्षो महेश्वरः। जैगीषव्यं ययौ द्रष्टुं नानागणवरैर्वृतः ॥ ४९ ॥
आरुह्य शाकरं दिव्यं नानालङ्कारभूषितम्। नानागणमुखोद्गीतवाद्यबृन्दकृतारवम्॥

१. अत्र भो इत्यनुसन्धाने श्लोकस्समीचीनस्स्यात्। २. शाकरम्-वृषभमित्यर्थः।

छत्रचामरहस्तैश्च पताकाविधृतैर्गणैः। उमया स्कन्दहेरम्बनन्दिभृङ्गिगणावृतः॥ ५१॥
क्षणेन हिमवन्मौलिमाजगाम महेश्वरः। मुनिभिर्गणमुख्यैश्च मन्दस्मितमनोहरः॥
उद्यच्छशाङ्कधवलधावल्याङ्कसमप्रभः। गङ्गातुङ्गतरङ्गौघमौलिद्युतिविराजितः॥

दृष्ट्वा तं मुनिमेकाग्रमानसं स महेश्वरः।
दयाकटाक्षामृतसिन्धुवर्षैर्वल्मीकभूतम्मुनिमाववर्ष।
स चोत्थितो देववरं प्रणम्य तुष्टाव चाष्टाकृतिमप्रमेयम्॥ ५४॥

जैगीषव्यः—

महेश्वर महोद्धत प्रबलपापतापापह प्रपन्नजनरक्षण क्षणविशिष्टशिष्टेष्टद।
विनीतजनवत्सल त्रिपुरमारसंशोषक प्रसीद दययाधुना भवदवाग्निसंशोषक॥
क्षपापतिकलाधर क्षपितपापतापापह प्रचण्डगरलाशन त्रिदशमौलिवन्द्याङ्घ्रिक।
महोक्षवरवाहनाध्वरसुदक्षदक्षापह भगाक्षिहर शङ्कर प्रसभमाशु पश्य प्रभो॥५६॥
हरामरवरोत्तम प्रबलसौरिगर्वापह मृकण्डुतनयार्चित प्रबलशूलदग्धान्धक।
फणीन्द्रमणिकङ्कणोज्ज्वलित सूर्यसोमानलत्रिलोचन दयारसैः प्रथय वेदगीलाशय॥
त्रियम्बक सदाशिव त्रिदशनायकाशावस यमीन्द्रहृदयाब्जगोच्चलितमञ्जुनादप्रिय।
सुकृत्तिवसनामलोच्छ्वसितभोगिभोगप्रिय प्रसीद मयि देव भोर्मुरहराब्जनेत्राङ्घ्रिक॥
रमारमणसायक प्रबलमेरुसद्धन्वक महीवररथाङ्गकविधृतसोमपूषात्मक।
तुरङ्गनिगमाव्यय विधिसुयन्तरीक्षस्व मां दयारसदृशानया मदनकायनाशादर॥
जैगीषव्यस्तुतिं श्रुत्वा सन्तुष्टःप्राह शङ्करः। प्राञ्जलिं विनयोपेतं मुनिं वीक्ष्य स्मरार्दनः॥

ईश्वरः—

त्वंधूर्जटिप्रेमरसो मुमुक्षुर्मोक्षैकलानश्श्रुतिशेखरान्तः।
त्वमूर्ध्वरेता मम सुप्रसादभाक्त्वं सारभूतोऽसि मुनीश्वराणाम्॥ ६०॥
विगलितमदमानलोभमोहः प्रशमितवृत्तिरुमेशतर्षचेताः।
धृतभसितवरो वराक्षमालश्श्रुतिमूर्धन्यमनोविचार शूरः॥ ६१॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यप्रसादकरणं नाम
पञ्चमोऽध्यायः॥ ५॥

## जैगीषव्यागमनन्नाम षष्ठोऽध्यायः.

जैगीषव्यः—

त्वमेव देवदेवेश पिता माता सखा प्रभुः। त्वमेव सर्वं देवेश विश्वेश्वर महेश्वर ॥ १ ॥
नजाने गिरिजाजाने त्वत्तोह्यन्यं सुरेश्वर। तस्मात्प्रसीद भगवन् करुणासागराधुना ॥
प्रपन्नोऽस्मि पदद्वन्द्वं निर्द्वन्द्वं ते महेश्वर। भ्रातरौ स्कन्दहेरम्बौ सखायो गणपा मम॥
जगतां जननी गौरी जनित्री मम शङ्करी। जगत्पिता त्वमेवेश पिता मम महेश्वर ॥
नान्यं वरं वृणे देव त्वत्पादाम्बुजभक्तितः। सैव धर्मार्थकामादिमोक्षहेतुर्ममाधुना ॥
यया भक्त्या महादेव मुक्तास्सर्वे सुरासुराः।त्वद्भक्त एव जगतिमुक्तोऽन्यान्मोचयत्यपि
त्वद्भक्त्यैव विधिर्विश्वं सृजत्येव महेश्वर। त्वत्तो वेदानधिगतस्सत्यलोकाधिपोऽभवत्॥
विष्णुस्तव पदद्वन्द्वं नेत्राब्जेन समर्चयन्। दैत्यवृन्दैकसंहत्यै चक्रं प्राप सुदर्शनम् ॥
त्वद्भक्त्यैव विरूपाक्ष वैकुण्ठस्याधिपोऽभवत्। पद्मसद्मापतिश्चापि जातो रुद्रस्त्वदाश्रयात्
दत्वा शूलवरं तस्मै रुद्रायामिततेजसे। रुद्राणामाधिपत्ये च त्वया सोऽप्यभिषेचितः ॥
यस्यशूलानलज्वालादग्धमन्ते चराचरम्। शक्रोऽमरेन्द्रतां प्राप्तस्त्वद्भक्त्यैव हराधुना ॥
शचीपतित्वं संप्राप नानास्वर्गैकभोगभाक्। धनाधिपत्वन्धनदस्त्वद्भक्त्यैव महेश्वर ॥
यमोऽपित्वत्पदार्चातो लोकपालोऽभवच्छिव। वरुणोयादसान्नाथस्सूर्यचन्द्रानिलानलाः
त्वद्भक्त्यैव विरूपाक्ष लेभिरे दिक्पतित्वताम्।समर्चयन्ति त्वल्लिङ्गंभक्त्या सर्वेसुरासुराः
सहस्रभुजतां प्राप्तो बाणो भक्त्या तवेश्वर। पौलस्त्यतनयश्शम्भो रावणो लोकरावणः॥
जिग्ये सुरान्नृपवरांस्त्वद्भक्त्यैव महेश्वर। घटोद्भवेन त्वद्भक्त्या समुद्राश्चुलुकीकृताः ॥
दधीचिनापित्वद्भक्त्याविष्णवे रूपमद्भुतम्। दर्शितंमायिने शम्भोभृगुणाशापितोहरिः
उपमन्युनाचबालेनलब्धःक्षीरैकवारिधिः। त्वद्भक्त्याकालपाशैश्चपाशितोऽपिमृकण्डुजः
जिगाय मृत्युं तरसा श्वेतोऽपि नृपनन्दनः। शिलाशनेन त्वद्भक्त्यापुत्रःप्राप्तोह्ययोनिजः
त्वद्भक्त्यानन्दिकेशोऽपिगाणापत्यमवाप्तवान्। चण्डीश्वरोऽपिपितरंहतवांस्तवभक्तितः॥
मङ्कणोऽपिपुरासिद्धस्सिद्धिंप्रापत्वदर्चनात्। सोमोऽपिमुक्तवान्राजयक्ष्मतस्त्वत्प्रसादतः
दक्षोऽपि दीक्षितो यज्ञे शिक्षितोऽनुग्रहीकृतः। शतर्चनादयोऽपीशव्याघ्रपादादयस्तथा॥

दूर्वासाद्या महाभागा दत्तात्रेयादयस्तथा। रामोऽपि भार्गवश्शम्भो नृपाणांकुलघातकः॥
तथैवान्ये नृपतयस्सोमसूर्यान्वयोद्भवाः। आदितेयाश्च दितिजा गणा रुद्रा मुनीश्वराः॥
भूता भव्या वर्तमाना भक्तास्त्वद्भक्तिभाविताः। तव भक्त्यैव सर्वेषां स्वर्गमोक्षौ हि शङ्कर
त्वद्भक्तिमेव याचेऽहं त्वनन्यगतिरीश्वर। हिमाद्रौ स्थापिते लिङ्गे जैगीषव्येश्वराभिधे॥
केदारात्पश्चिमे भागे तस्मिन्नित्यं त्वमावस॥ २७॥

सूतः—

इत्युक्तो मुनिना तेन महादेवो गिरीन्द्रजाम्। सुराणाञ्चमुनीनाञ्च शृण्वतां प्राहशङ्करः

ईश्वरः—

कथामाकर्णयापर्णे कर्णाभ्यर्णविलोचने। तूर्णं पूर्णपदप्राप्त्यै भवार्णवनिवासिनाम्॥
कृतलिङ्गमहासद्म पद्मसद्मापि सद्मगा। तेषां नित्यं भवेदेव यैर्वाकारि शिवालयः॥
तपांसि तेन तप्तानि जीर्णपर्णाशनान्मुने। तेनेष्टास्सकला यागास्तेनाधीतं श्रुतं शिवे॥

केदाराख्यं त्वत्पितुर्मौलिसंस्थं लिङ्गञ्चैतत्सर्वदा मुक्तिबीजम्।
केदारेऽस्मिंस्त्वत्पितुश्चारुमौलौ भूमानन्दश्चाङ्कुरं तच्चमुक्त्याः॥ ३२॥
एतल्लिङ्गात्पश्चिमे चामुना मे नाम्ना स्वेनाप्यर्चितं पश्य लिङ्गम्।
प्रतिष्ठिते येन केनापि लिङ्गे तिष्ठामीशे सर्वथैवातितुष्टः॥ ३३॥
तस्मिंत्सदैवावहितो भवामि भवानि नित्यं सुखदोऽतिहर्षदः।
भवानि मुक्त्यै प्रथिते प्रदोषे प्रकाशने पूजनभावनेऽपि॥ ३४॥
समानचित्तोऽर्चनकृद्विभाति नरो वरो मे स वरोचितस्स्यात्।
यः कश्चिद्भुवनेश्वरि त्रिभुवने चोत्तुङ्गलिङ्गालयं
　रम्यं द्वारकवाटतोरणमहाप्राकारसद्गोपुरम्।
विद्युत्पुञ्जसमप्रभामलमहाहेमैककुम्भोल्लस-
　त्कृत्वा जन्मशतार्जिताखिलमहापापैर्नरो मुच्यते॥ ३५॥
रम्ये शैलवरे सरित्तटवरे ग्रामे पुरे पर्वते
　तीर्थे वापि वने गिरीन्द्रवरजे गङ्गातटे नार्मदे।

तीरे वापि महेश्वरेश्वरि महाक्षेत्रेषु लिङ्गं दध-
त्सर्वत्रापि शुचौ शुचिस्समहिमा तस्यातिपारो दिवि ॥ ३६ ॥

अढ्योवापि दरिद्रशेखरनरोभक्तिः परं कारण-
ङ्कृत्वा चापि शिवालयं सुखयुतो भूमौ विमुक्तस्ततः ।
मृदारुप्रभवं शिलेष्टककृतं रम्यं सुधाच्छादितं
दिव्यं सन्मणिकल्पितं भवहरं सद्यो विजायेत मे ॥ ३७ ॥

कृत्वं चारुशिवालयोत्तमलसत्तुङ्गं हि लिङ्गम्मम
प्रातिष्ठाप्य सुवस्त्रचन्दनघनासारैश्च विल्वार्चकः ।
किं मत्तेभसुहेमभूमितुरगैर्गोभिश्च रत्नोद्भवै-
र्दानैर्यागवरैश्चिरार्जितमहाधर्मैश्च किं वा शिवे ॥ ३८ ॥

योगैर्वा नियमैर्व्रतेन तपसा तीर्थाटनेनापि किं
कन्यान्नादिकदानतोऽपि हि वरं लिङ्गालयं यैः कृतम् ।
पातान्तावधिसुन्दरं कृतमहाधर्मैकजालं शिवे
मल्लिङ्गालयकल्पकस्य सुतरां पाताद्भयन्नास्ति वै ॥ ३९ ॥

यावच्चन्द्रसुतारकागणमुमे यावत्सरिच्छैलका-
स्तावन्मे गणपोत्तमो हि स भवेत्कैलासमौलौ मम ।
खण्डं वा स्फुटितं तथा परकृतं जीर्णं विशीर्णं तथा
तस्योद्धारमुमे करोति सुकृतैर्यश्श्रद्धया केवलम् ॥ ४० ॥

किं वक्ष्यामि सदैव तस्य हृदये नित्यं निवासो मम
तस्यान्ते वितरामि मुक्तिमतुलां वक्ष्ये रहस्यन्तव ।
को वा लिङ्गवरं प्रदोषसमये येनार्चि विल्वैश्शुभै-
रेवञ्चापि चराचरं त्रिभुवनाभ्यध्यक्षतामावहेत् ॥ ४१ ॥

भूमौ पुत्रकलत्रमित्रसहितो धान्यैर्धनैस्संयुत-
श्चान्ते चापि विमुक्तिमेति नितरां लिङ्गार्चनादेव मे ।

तैलैर्वा विविधैर्घृतैः पशुभवैर्गव्येन वा केवलं
चोद्बोध्योज्वलदीपजालमगजे कृत्वैव दीपावलिम् ॥ ४२ ॥
पद्मेभोत्तमहंसतारकगणाकारावलिं मद्गृहे
रम्यामुज्वलवर्तिकामघकुलं ज्वालीकृतं तेन वै ।
धूपैर्वा त्वगरूद्भवैरपि महासाम्राणिसद्गुग्गुलू-
बिल्वत्वक्कृतयुक्तगन्धसुभगामोदैश्शिवे केवलम् ॥ ४३ ॥
दग्ध्वा याति पदं मम त्वघकुलं सर्वं कृतार्थो भवे-
ज्ज्ञानञ्चापि समाप्नुयात्सुनिशितं वेदान्तवाक्योद्भवम् ।
कर्पूरोद्भवखण्डषण्डजमहाज्वालालसद्दीपकै-
रुज्वाल्य प्रमथाधिनाथजमहालिङ्गेतमोलिं भिनत् ॥ ४४ ॥
पापाद्रेः कुलिशं भवत्यथ शिवे तद्दीपदाने मयि
प्राप्नोत्येव कुलोन्नतिं वरसुतान्प्राप्नोति शम्भोः पदम् ।
गव्यैः कापिलजैस्तथेतरगवां सारैः पयोभिर्घृतै-
र्दध्ना चाप्यधिकं फलेन शतशः क्षौद्रेण चाक्षुद्रताम् ॥ ४५ ॥
प्राप्नोतीक्षुरसेन गन्धसलिलैः पुष्पोत्थरत्नोदकै-
स्स्वर्णोत्थैरभिषिच्य लिङ्गममलं प्राप्नोति मुक्तिं शिवे ।
पुण्ड्रेक्षुप्रभवैश्च सद्रसवरैर्मोचाफलानां गणै-
र्नारेलांबुरसालसारजरसैर्जंबीरनीरैरपि ॥ ४६ ॥
उत्कोचैः पनसोद्भवैर्मम महालिङ्गेऽभिषिच्यादरा-
त्प्रातस्सङ्गवकालतोऽप्यतितरां सायं विमुक्तो भवेत् ।
भक्तेषु प्रवरो ममैव सदने सद्गोत्रजोऽसौनरो
भुक्त्वा सर्वसुखं भुवि प्रियतमो यात्येव देवि प्रिये ॥ ४७ ॥
ग्रीष्मर्तौ मम लिंगसङ्गतमहामौलौ गलन्ती झरी-
धारासारसुपाटलागरुरसैः पुष्पांबुभिः पूरितैः ।

धाराकल्पनजेन यत्फलमुमे तत्केन वा शक्यते
वक्तुं जन्मशतायुतार्जितमहापापैर्विमुक्तो भवेत् ॥ ४८ ॥
उत्फुल्लैः कमलैस्सिताभितवरैस्सन्मल्लिकमालती-
जाजीकुन्दसुपाटलैर्वकमहाधुर्तूरद्रोणार्ककैः ।
कल्हारैः कुमुदैर्जपादमनकैरुत्फुल्लदाडिम्बकैः
पुन्नागार्जुनचम्पकैर्वकुलकैर्मन्दारवाल्हातकैः ॥ ४९ ॥
नीलोग्रद्विकचोत्पलैः कुरवकैस्सत्कर्णिकारैश्शिवं
नन्द्यावर्तशिरीषबिल्वकुसुमैरक्ताश्वसारैश्शिवैः ।
जंब्वाम्रैश्च पलाशकैश्शमिसुमैर्दूर्वापमार्गादिभि-
र्विष्णुक्रान्तकुशैश्च काशजनितैरभ्यर्च्य मुक्तोऽम्बिके ॥ ५० ॥
प्राप्नोतीष्टमहेतुकं भगवतश्शम्भोः कटाक्षाङ्कुरै-
र्लिङ्गे पुण्यतमे प्रदोषसमये पुण्येषु कालेष्वपि ।
मौद्गल्योऽथ शतर्चनात्रिभृगवो धौम्याग्रजो गौतमो
मार्कण्डेयदधीचिगर्ग उशना मुञ्जो करिश्शौनकः ॥ ५१ ॥
दूर्वासा जमदग्निजोङ्गिरवरा दत्तात्रिजो व्याघ्रपा-
ज्जाबालिश्च दधीचिमित्रजनितः कुंभोद्भवश्शैलजे ।
देवेषु पृथितो विधिश्च मुरभिच्छक्रोऽर्यमाग्निर्मरु-
त्पाशी यक्षपतिर्यमोऽथ निऋतिश्चेशानमुख्या गणाः ॥ ५२ ॥
स्कन्दश्चेभजवक्त्रको गणवरो नन्दीशभृङ्गीश्वरा-
स्तण्डुश्चण्डिरिटी सुभद्रकवरो वीरो महाभैरवः ।
शैवेन्द्रा भसितत्रिपुण्ड्रनिटिला रुद्राक्षमालाङ्गदा
रुद्रावर्तनलोलशीलमनसो लिङ्गार्चका मे शिवे ॥ ५३ ॥
अन्येऽमी मुनयो ग्रहाश्रमरताश्श्रान्ताः परं संसृते-
र्नानादैवतपूजनेन कुधियो जानन्ति नो मां शिवे ।

कानीनस्त्वयमप्युमे विधिवशात्संप्राप्य मे काशिकां
मत्सान्निध्यगतोर्ध्ववाहुरसकृद्व्याचष्ट दैवं हरिम् ॥ ५४ ॥
तस्मान्नार्हति वक्तुमप्यतितरां श्रोतुं मदीयं रहः
पुण्यंमुक्तिरहस्यमेतदनघं शिष्येषु पात्रेष्वहो ।
त्वं सम्यक्प्रतिपादयाशु भसितोद्धूलेषु मत्प्रेमजा-
पारावारमहांबुमग्नमनसां पुण्येषु शैवेषु च ॥ ५५ ॥
जैगीषव्यमुनीन्द्र दापय परं शैवं रहस्यं मम
नाख्येयं शिवभक्तिवर्जितमुनौ पुण्यन्त्विदं मुक्तिदम् ।
दत्वा भक्तिविहीनमानववरे पापं महत्प्राप्नुया-
त्किञ्चाप्नोति वृथाश्रमं सुनिशितं पात्रे यथा मे जलम् ॥ ५६ ॥
प्राज्ञा ज्ञानकलाप्तये सुमनसो वेदान्तशिक्षारता-
श्शान्ताश्शान्ततरेन्द्रियाश्च जनतापारभ्रमासंभ्रमाः ।
ये ये भक्तवरा ममेश्वरि वरैः पाल्यास्सदा ते त्वया ॥ ५७ ॥

सूतः—

देव्या दृष्ट्वा मुखाब्जं त्रिणयननयनानन्दसन्दोहवीज-
ञ्चोत्फुल्लामलकैरवोपममुखश्श्रीपार्वतीनायकः ।
दृष्ट्वाचापि मुनिं विशिष्टमनसं शिष्टातिशिष्टन्तदा
चाष्टांगाखिलयोगजालनिकरैः पूतैकसन्मानसः ॥ ५८ ॥

ईश्वरः—

पूतोऽयं भुवनेश्वरि त्रिजगतामीशो मुनिश्शाङ्करः
पुत्रस्ते निखिलागमैकरसिको भूयास्त्वयाऽऽलोकितः ।
संपूत्येष तवाननाब्जविकसत्सूर्यस्य षड्वक्त्रतः
प्राप्नोतु प्रसभं मदीयमहसां सारं जगत्पावनम् ॥ ५९ ॥

१. एतस्मिन्नेकः पादो न कस्मिन्नपि कोशे दृश्यते ।

स्कन्दस्स्कन्दिततारकस्तव शिवे पर्यङ्कभूताङ्कक-
　　श्शुश्रावाखिलमंगलं त्वयि मया संप्रोक्तमेतच्छुभम् ।
षड्भिस्स्वैर्वदनच्युतामृतरसैः पुष्णातु चैनं मुनि
　　शैवैरद्य रहस्यसम्भवकथाधारासुधाशीकरैः ॥ ६० ॥
जैगीषव्यमुखाब्जतो मुनिवराश्शृण्वन्तु शैवं रह-
　　श्शैवा एव भवन्ति तच्छतमहानन्दैकवोधास्सदा ।
नान्येषाम्मतिरस्ति शङ्करकथापीयूषपानोत्सवे
　　भक्त्युत्थामृतपानपीनमनसो देवि स्फुटं केचन ॥ ६१ ॥
वेदान्तार्थविचारसारसुगमं शैवं रहस्यं मया
　　देव्यै दत्तमतस्तया वलवता स्नेहेन दत्तं मुने ।
स्कन्दायासुरशिक्षकाय दद तां गच्छाधुना तं प्रती-
　　त्युक्तोऽसौ गिरिजामनोहरवचश्श्रुत्वा मुनिर्निर्ययौ ॥ ६२ ॥
नत्वा शंभुपदं जगाम रभसा युक्तो मुनीन्द्रैरपि
　　देवश्चापि मुदा ययौ पशुपतिर्देव्या सुराद्यैर्वृतः ।
कैलासं गणपोत्थवाद्यनिकरैर्देवैस्स्तवैस्संस्तुतो
　　भक्तानां पुरुषार्थसाधनपरस्स्वानन्दकैस्संयुतः ॥ ६३ ॥
इलामिलन्मौलिरथो महात्मा जैगीषविप्रोऽध्वरराजमीशं
　　संपूज्य नत्वाभिजगामशंभुं स्कन्दाय च स्कन्दमुदार्थवेदने ॥ ६४ ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यागमनन्नाम
षष्ठोऽध्यायः ॥ ६ ॥

---

## जैगीषव्यस्कन्दसमागमो नाम सप्तमोऽध्यायः.

सूत उवाच—

इत्युक्त्वा प्रययौ देवः कैलासं शङ्करालयम् । नन्दिभृंगिगणौघेन सुरासुरवरार्चितः ॥
जगज्जनिन्या देव्या च महावृषभवाहनः । जैगीषव्यो मुनिर्नत्वा महादेवपदांबुजम् ॥

ध्यायन्नभिजगामैव स्कन्दं क्रौञ्चविदारणम् । उपाययौ मुनिवरैश्शैवेन्द्रैर्भक्तितत्परैः ॥
मार्कण्डेयोऽथमौद्गल्यो जमदग्निर्भृगुस्तथा। दूर्वासाश्च्य वनोगर्गो वीतहव्योऽनलाशनः॥
गौतमोऽत्रिर्भरद्वाजो दाल्भ्योहयशिरामनुः । उचथ्योऽग्निध्वजश्चैवदधीचिर्मौनिमार्गवः
व्यासः पराशरोऽकुण्डः कविरंगिरसो मधुः । उपमन्युर्विशाखश्च तुहण्डः कवषोध्रुवः ॥
जाबालिकाश्यपौ मित्रो नारदस्तुंबुरुस्तथा।पर्वतोऽथाणिमाण्डव्यो दण्डोव्याघ्रपदोहनुः
वेदगर्भो वीतिहोत्रः कण्वो मेधातिथिर्धनुः । शौनकस्ताण्डकश्चैवमित्रविन्दोऽनमित्रकः॥
हयग्रीवः पिप्पलादो दत्तात्रेयोविकत्थनः। अगस्त्यश्चानिलाशश्चशतर्चाआश्वलायनः ॥
सनन्दस्सनकश्चैव कुमारश्च सनातनः। एवमाद्याश्च मुनयश्शैवेन्द्राश्शिवसम्मताः॥१०॥
अग्निरित्यादिभिर्मन्त्रैर्भस्मोद्धूलनतत्पराः। त्रियायुषैस्त्रिपुण्ड्राङ्का रुद्राक्षांगदकङ्कणाः॥
पञ्चाक्षरजपासक्ताः पञ्चास्यद्ध्यानतत्पराः। अथर्वशिरसा देवं पूजयन्तिस्तुवन्तिच॥

केचिच्छिखाजपासक्ताःकेचित्कैवल्यजापकाः ।
प्रणवाभ्यासनिरताःकेचिज्जाबालजापकाः ॥

बृहद्रथन्तरं वामदेवसामादिजापकाः। संहिताभिस्तथा साम्नामृचाञ्च यजुषान्तथा ॥
रुद्राध्यायजपासक्ताः पञ्चब्रह्मपरायणाः।सर्वे लिंगार्चनपरास्त्रिकालम्मुनिसत्तमाः ॥
पञ्चरुद्रजपासक्ताःपञ्चास्यद्ध्यानतत्पराः। शिवनैवेद्यभोक्तारोनियमाद्बिल्वपूजकाः॥
वैराग्यभाग्यनिरता नित्यानित्यार्थकोविदाः। वेदवेदार्थतत्वज्ञा दृढप्रज्ञामनीषिणः॥
तपसां राशयस्सर्वे सदाराश्शिवतत्पराः। शिवनामजपासक्तास्सर्वदा शिवचिन्तकाः ॥
अग्निहोत्रपरास्सर्वे यज्ञाद्यैर्दग्धकिल्बिषाः। शिष्यप्रशिष्यसहिता आगतास्ते नभोध्वना॥
स्कन्दाश्रमं सरस्वत्यास्तीरे पावनपावनम्। नानास्कन्दगणोपेतं देवगन्धर्वशोभितम् ॥
नीलाद्रिशिखरे पुण्ये नानातरुवराश्रितम्। वर्हिनृत्तारवैश्चैव पुंस्कोकिलविनादितम् ॥
शुकशारिकसङ्घुष्टं कपोतकृतहुङ्कृतैः। मृदंगमुरजोद्घोषैर्वीणातालल्यानुगैः ॥ २२ ॥
प्रनृत्यत्किन्नरानीकमुत्फुल्लकमलाकरम्। स्कन्दालयमपश्यंस्ते नानारत्नविराजितम् ॥
गोपुराट्टालवलभीवप्रप्राकारशोभितम्। सुवर्णखचितानेकनवरत्नविराजितम् ॥ २४ ॥
पर्यंकास्तरणैर्दिव्यैस्सिह्मनादवरैर्युतम् । गन्धर्वनीतवकुलैरुपेतं गीतवादनैः ॥ २५ ॥
सिह्मासनस्थं वरदं पङ्क्क्लं मुकुटोज्वलम् । हेमपीतांबरधरं चलच्चामरवीजितम् ॥

कनत्कनकरत्नैश्च चित्रकुण्डलशोभितम् । महार्हरत्नमालादिमुक्ताहारसुकन्धरम् ॥२७॥
शक्तिहस्तं महाशक्तेस्तनूजमतिसुन्दरम् । ददर्शुर्मुनयस्सर्वे स्कन्दं क्रौञ्चविदारणम् ॥
प्रणम्य जैगीषव्याद्या मुनयस्स्कन्दमव्ययम् । तेन निर्दिष्टविष्टब्धविष्टरा मुनयस्सुखम् ॥

नभस्स्पृगायाति समीरगत्या भस्मावधूताखिलपापसङ्घः ।
शरन्नभाभः परिपूर्णचन्द्रभासस्समालुलोकेऽद्रितनूभवाभम् ॥ ३० ॥
जैगीषव्यमुखाब्जलोकनमहानन्दांबुधेर्मध्यग-
स्स्वस्यैवान्तिकमागतं पुरभिदा संप्रेषितं ज्ञातवान् ।
पात्रं वीक्ष्य महेशमित्रहृदयग्रन्थार्थसंवोधने
हृष्टः पुष्टतनुः प्रकृष्टवचसामुद्बोधबोधे मुनिम् ॥ ३१ ॥
जैगीषव्यांगसंगस्फुटपुलकततिश्शैववर्यषडास्यो
नेत्रैर्व्यालोक्य तुष्टो भसितधवलितस्वान्तगात्रो मुनीन्द्रम् ।
मेनेमेनातनूजात्मजवरवरणे धारणे वीतरागम् ॥ ३२ ॥

स्कन्दः—

त्वदागमनसंभ्रमाद्भ्रमततिः प्रणष्टा मम शिवेन कथितं पुरा शिवरहस्यधर्माभिधम् ।
समुद्रमिव सिन्धुभिश्शिवकथासुधावारिधौ समुल्लसति मन्मनस्तदपि बोधहेतुस्त्वयि ॥
पचेलिमतपःफलैरमितपुण्यसङ्घार्जितैर्भवानपि समागतस्त्रिपुरवैरिसंप्रेषितः ।
मुनिष्वपि विशेषतस्त्वयिदया महेशस्य या नकोऽपि भुवनेषु वा प्रमथनाथलिंगार्चकः ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्य स्कन्दसमागमोनाम
सप्तमोऽध्यायः ॥ ७ ॥

---

## स्कन्ददर्शनन्नाम अष्टमोऽध्यायः.

सूत उवाच—

उपोपविविशुर्हृष्टाष्षडाननविलोकनात् । हृष्टास्ततस्ते शैवेन्द्रा अष्टमूर्तिकृपास्पदाः ॥
ऊचुः प्राञ्जलयस्सर्वे जैगीषव्य पुरोगमाः ।

मुनय ऊचुः—

स्कन्द त्रिपुरसंहर्तृतनूभव सुखास्पद ॥ २ ॥
क्रौञ्चोन्माथ गिरिश्रेष्ठ शूरादीनां विदारण। शिवज्ञानसुधांबोधे सशक्तेचाखिलार्थद॥
कुमार मारसङ्काश प्रपन्नजनवत्सल। शिवाङ्कभूतपर्यङ्क सर्वभूतहृदन्तर ॥ ४ ॥
वीरबाहुमुखानेकगणोत्तमनिषेवित। शिखिवाहामरेन्द्रादिसेनापालन हे प्रभो ॥ ५ ॥
प्रणवादिमहावाक्यसारासारविचारक। भक्तहृत्पद्मसन्देहतमस्तोमनिवारक ॥ ६ ॥
ज्ञानोदयोद्यन्मार्ताण्ड प्रचण्डतरविक्रम। तव पादांबुजद्वन्द्वविलोकनहताशुभाः ॥ ७॥
जैगीषव्यस्य तपसा दृष्टोऽस्माभिर्महेश्वरः। तेनाज्ञप्ता वयं सर्वे जैगीषव्यपुरस्सराः ॥
त्वद्वाक्पङ्कजनिष्यन्दमकरन्दमधुव्रताः। पातुं शिवरहस्याख्यममृतं भवनाशकम्॥ ९ ॥
प्रयाताः पुण्यभारेण तव सन्निधिमुत्कटाः। सन्तप्तान्भवदावाग्निमध्यस्थानधुनामुनीन्॥
सुधाशीकरयादृष्ट्याशीतयाशुप्रसीद नः। इत्थम्मुनीनां वचनं श्रुत्वा स्कन्दो हरात्मजः
प्रसन्नचेतास्तानाह शांभवान्हरनन्दनः ॥

स्कन्द उवाच—

जैगीषव्यमुखा यूयं मुनयो भावसत्तमाः। भवभावैकसंपन्ना भक्तास्सर्वे महेश्वरे ॥
भवतां दर्शनेनैव भावनानन्दितं मम। मनसः पद्ममुत्फुल्लं मुनेश्श्रुत्वा तपःक्रियाम् ॥
प्रसादोऽपि महादेवाज्जैगीषव्यस्य सत्तम। शिवाज्ञया समायातो जैगीषव्यो महामुनिः॥
भवद्भिश्शांभवैस्सार्धं मया ज्ञातं हृदैव हि। पात्रभूता भवन्तो हि त्रिणेत्रपदपूजकाः ॥
यद्गोप्यमपि तद्वक्ष्ये रहस्यं शिवहृद्गतम्। शिवाङ्कसंस्थेन मया श्रुतमेतत्पुरातनम्॥ १६ ॥
द्वादशांशसमायुक्तं देव्यै देवेन दर्शितम्। पुण्यं पापहरञ्चै तत्सर्वश्रुतिशिरोगतम् ॥ १७॥
भवान्यै च भवेनैव कथितं भवनाशनम्। कथानकं श्रुतिशिरः प्रणवार्थं महाघभित्॥ १८॥
जैगीषव्याग्रगा यूयं शृण्वन्तु परमार्थतः। धर्मकामार्थमोक्षाणां सारभूतमिदं शुभम्॥ १९॥
श्रुत्वेदं हि कथारत्नं शङ्करस्य परात्मनः। श्रोतुमन्यन्नरोचेत यथान्याः प्राकृताः कथाः ॥
सृष्टिस्थित्यन्तकथनैर्नृपाणाञ्चरिताश्रयैः। वर्णाश्रमैककथनश्रमभारैः कथानकैः॥२१॥
धर्माभासकथाभिः किं यथा शंभोः कथारसम्। किमन्धकूपमध्यस्थस्तमसा परिवेष्टितः
अन्यानन्धान्पूरयेत तथैवान्यकथा मुने। पुराणेषु प्रकथितैः किन्तु चर्वितचर्वणैः॥२३॥

जन्ममृत्युयुतानाञ्च सुराणां मुनिपुंगवाः। कथाः कथन्तारयन्ति जन्ममृत्युजरायुतान्
श्रीमन्मृत्युञ्जयस्यैव कथा मृत्युविवर्जितान्। करोति जगतां विप्राश्शैवाश्शिवरहस्यगाः॥
सुधासागरमध्यस्थः किं नु कूपोदकं पिबेत्। कणद्वीणादिनिनदं श्रुत्वा काकरवं यथा॥
यथा रत्नाकरं प्राप्य काचखण्डमपेक्षते। यथा मत्तेभसदृशः किंमलाशनक्रित्किटिः॥ २७॥
यथा मृगेन्द्रसदृशोवानरः किं द्विजोत्तमाः। तथाचान्यकथासक्तास्त्यक्त्वाशिवकथारसम्
यथा शिवो महादेवस्सर्ववेदान्तसंस्तुतः। तथा शिवरहस्याख्यमितिहासवरम्मुने॥२९॥
शिवकण्ठमणिश्चायं पापमोचकमोचकः। पुरा कैलासशिखरे देव्यै देवेन कीर्तितम्॥३०॥
प्राह देवं विरूपाक्षमम्बिका परमेश्वरी ॥ ३१ ॥

श्री देव्युवाच—

शंभो विश्वेश भर्ग त्रिणयन पुरहन्कालकालान्धकारे
पापारे फालनेत्र स्मरहर गरप त्राहि देवान्द्विजांश्च ।
कथय तव रहस्यं येन मुक्ता त्रिलोकी निगमशिरसि निष्ठा का गरिष्ठा वदाद्य॥
यदि तव करुणाब्धे शीकरासारपातं मम श्रुतिवरपातं त्वं कृतार्थी कुरुष्व ।
तव चरितमशेषं लोकदुःखापनुत्यै पुरहर कुरु कर्णे मामकीने दयस्व ॥ ३३ ॥

सुगोप्यमपि शङ्कर प्रमथनाथ विश्वाधिक
निधेहि मयि तत्स्थिरं चिरमपि प्ररूढं त्वयि ।
त्वदीयदयया परं प्रकटितान्तरंगं मम
त्वदीयचरणांबुजे सकलभक्तिभावैर्युता ॥ ३४ ॥

इति देव्या वचश्श्रुत्वा प्राहकामप्रभञ्जनः। स्वाङ्कसंस्थाम्महादेवीं तदङ्कस्थेन यत्पुरा॥
मयाश्रावि कथासिन्धुरहस्यं तद्ब्रुवेऽधुना। भवानां भवनाशाय भवभक्तिविवर्धनम् ॥

ईश्वर उवाच—

नादेयन्तव विद्यते त्रिभुवने शैलेन्द्रजे केवल-
न्देहार्धेऽधिकृतासि विश्वजननी नीरूपरूपस्त्वया ।

विश्वं पासि तथात्सि शक्तिरखिला देवि त्वया शक्तिमा-
नुक्तोऽहं श्रुतिभिर्निरिन्द्रिय इति त्वत्तोऽस्मि देहं गतः ॥ ३७ ॥
अपाणिपादोऽहमलुप्तशक्तिः पश्याम्यचक्षुः पूशृणोम्यकर्णः ।
अहं विजानामि समस्तमेतत्सहैव सन्तं न विजानन्ति देवाः ॥ ३८ ॥
शीर्णेष्वशीर्णोऽहमजः पुरातनश्शरीरहीनोऽस्मि सदाह्यसंगः ।
वेदाश्च वेदान्तवचो यतो मे निवृत्तभावा मनसा सदांविके ॥ ३९ ॥
कथं पामरा वानराकारचेष्टास्सदाकामलोभादिमात्सर्ययुक्ताः ।
वराकाश्शरावादिहस्ता रटन्ति सुराश्चासुराश्चासुरा भूसुराः किम् ॥ ४० ॥
लभन्ते त्वमेकाकिनी स्कन्दनन्दीशमुख्या मदीयपूकृष्टपूभावैकतर्षाः ।
यतो भावलभ्यैकमूर्तिं महेशं सदावेदवेदान्तवाचां दुरापम् ॥ ४१ ॥
विजानासि देवि त्वमाद्यं ममाद्यं सदा शुद्धबुद्धं चिदानन्दरूपम् ।
तॄणेतूं गराधीशकण्ठं सहांवं पूपश्यन्ति योगीन्द्रमुख्या हराजाः ॥ ४२ ॥
अहं लोकमुक्त्यर्थमीशानि देहं सृजाम्यद्य कामं निगृह्णामि चान्ते ।
शिवे व्यक्तरूपं सुराद्यैर्दुरापं नजानीयुरेतत्कथां पामरा माम् ॥ ४३ ॥
शृणु श्रवणभूषणं निगमपारसारं स्फुटं सुगोप्यमपि वर्तते हृदि सुगोप्यमेतत्त्वया ।
अशांभववशेऽर्पितो न भवति पूरूढस्तरुर्यथैव मरुभूमिगश्शिवरहस्यमेतत्तथा॥ ४४ ॥
सुशांभवसरोवरपूथितरक्तफुल्लाब्जिनीविकासनदिवाकरश्शिवजनैकतोषपूदः ।
हृदन्तरतमोगणोन्मथितपापमेघानिलो विशोषयतु दुष्पथपूभवकामपंकं सदा॥ ४५ ॥
भजन्तु सुधियस्सदा श्रवणराशिसन्मंगलं न हीनजनमानसाऽश्रवणमेतदेव स्फुटम्।
धूवं भवति शैलजे निगमसारभूतं मधु शिवार्चकजनपूियं मधुलिहस्तएवपूिये॥ ४६॥
पूकृष्टरसभावुका भवभवाब्धिसंशोषकाः ॥

इति श्रीशिवरहस्ये प्रथमांशे स्कन्ददर्शनन्नाम

अष्टमोऽध्यायः ॥ ८ ॥

---

स्कन्दशिवगणसंवादो नाम नवमोऽध्यायः.

सूत उवाच—

एवमभ्यागतान्त्सम्यक्सदसस्पतिशासनात् ।

स्कन्दास्यविमलोदारनिर्गच्छन्त्यश्शिवाश्रयाः ॥ १ ॥

कथाःकापथदुश्राव्या नारदोऽथसुरान्ययौ। चक्षुश्रवाकन्यकाश्च श्रवणार्थंदिवस्पतीन् ॥

ब्रह्मेन्द्रविष्णुलोकेशांस्तदुदन्तकथाभुवि। विष्णवे ब्रह्मणे चैव दिक्पालेभ्योऽमरेश्वरे ॥

तच्चाकथयदीशेभ्यो जैगीषव्यप्रसादजम्। महेश्वरस्य श्रुत्वा ते देवास्संभ्रममानसाः ॥

कथाश्रवणलोलाक्षा नारदेन समागताः। विनतानन्दनारूढो लक्ष्मीपतिरतन्द्रितः॥ ५ ॥

धवलाभ्रनिभात्युच्चहंसारूढो विधिस्तदा। अभ्यगाद्भारतीनाथो नागारूढस्सुरेश्वरः ॥

स्वं स्वं वाहनमारुह्य ययुर्देवास्तदामुदा। तारकारिसदः प्राप्ता नानाभरणभूषिताः॥ ७ ॥

प्रणम्य ब्रह्मविष्ण्विन्द्राः कृताञ्जलिपुटा जगुः॥

देवा ऊचुः—

स्कन्दनन्दितवन्दारुवृन्दवन्द्यपदांबुज। शिवभावामराध्यक्ष श्रोतुं तव मुखाच्छुभाः ॥

शंभोश्शंभुज सर्वस्वाः कथाश्शिवरहस्यगाः। श्रोतुं प्रवृत्ता मुनिभिर्जैगीषव्येन सादराः ॥

तस्मात्प्रवर्तय शुभाः पापतापनिवारकाः। तदा सुरमुनीन्द्राणां वचसानन्दनिर्भरः ॥

जगाद संप्रणम्येशमंबां विघ्नाद्रिभेदनम्। ध्यात्वा स्वहृत्पद्मगतं जैगीषव्यमुदैक्षत॥ ११ ॥

शैवेन्द्रानमरेन्द्रांश्च प्रोत्फुल्लनलिनास्यकः। उवाचप्रसभं सभ्यान्त्सदसस्पतिपूजकान् ॥

भस्मत्रिपुण्ड्रनिटिलान्रुद्राक्षांगदकङ्कणान्। शिवपादांबुजव्यग्रचेतसस्तानभाषत॥ १३ ॥

स्कन्द उवाच—

त्वमेव भवभक्तोऽसि जैगीषव्यशृणुष्वमे। सहैभिर्मुनिभिस्सार्धं देवैश्शिवरहस्यकम् ॥

देव्यै देवेन कथितं पापतापविशोषणम्। एवं संवदतान्तेषां सिन्धूरारुणगण्डभृत्॥ १५ ॥

वारणेन्द्रमहावक्त्रो विघ्नपूगनिवारकः। स्कन्दाश्रमन्तदा प्राप गणबृन्दनिषेवितः ॥

विमानवरमास्थाय कैलासाचलतस्तदा। नन्दिभृंगि महाकालबाणचण्डीश्वरादयः ॥

तुहुण्डहुण्डसानन्दमहानन्दाश्च भैरवः। तुन्दः कालाग्निरुद्रश्च ये चान्ये गणपोत्तमाः ॥

सोमनन्दिप्रभृतयो गणकोटिवरप्रदाः। समागता महेशेन प्रेषिता गणनायकाः ॥ १९॥

मस्तकान्तजटोद्भासिधृतबालेन्दुशेखराः । त्रिपुण्ड्रविलसत्फाला रुद्राक्षांगदकंकणाः ॥
महाडमरुनादोत्थहुंकारितदिशामुखाः। तान्दृष्ट्वा सहसोत्तस्थौ मुनिभिश्च सुरासुरैः ॥
नत्वा द्विरदवक्त्रं तं दत्वार्घ्यासनमुत्कटम्। संपूज्य मोदकापूपदूर्वागन्धाक्षतादिभिः ॥
तारकारिर्गणेन्द्रांस्तान्पर्यष्वजत गाढहृत्। नन्दीश्वरादीन्त्ससस्नेहं पूजितास्ते महार्हणैः॥
निषेदुस्स्कन्दमभितो मुनीन्द्रास्सुरपा गणाः। पश्यन्तस्तेप्राञ्जलयष्षडाननवराननम्॥
ऊचुस्ते नन्दिकेशाद्यास्स्कन्दं क्रौञ्चविदारणम् ॥ २९ ॥

नन्दिकेश्वरः—

जैगीषव्यस्य तपसा प्रसन्नेन शिवेन च। त्वद्वागमृतनिष्यन्दकथाश्रवणलालसान् ॥
अस्मान्त्संप्रेषयामास त्वदन्तिकमुमापतिः। उमांकसंस्थेन पुरा त्वयाऽश्रावि मनोहरम्॥
शैवं शिवायै कथितं रहस्यं पापभेदनम्। द्वादशांशयुतं साक्षात्पशुपाशविमुक्तिदम् ॥
वेदस्मृतिपुराणेषु भारतेष्वागमेष्वपि। पशुधर्माश्च मुनिभिः प्रोक्तास्संसारदायकाः ॥
पतिधर्मैककथनं विमुक्तिदमुमापतिः। वेदवेदान्तसारोत्थकथाः पापनिकृन्तनीः॥
कथयामास तद्देव्यै रहस्यं श्रुतिसम्मितम्। जाबालोपनिषत्सारं साक्षाद्धरमुखोदितम्॥
तदन्तिकप्रदेशेऽपि नैवास्माकमवस्थितिः। सप्तप्राकारबाह्ये वै गोपुराग्रे व्यवस्थिताः ॥
देव्युत्संगगतेनाद्य त्वया तच्छ्रुतमुत्तमम्। तद्वदास्मभ्यमधुना गोप्यं देवेन कीर्तितम् ॥
अपर्णायै मुदा तत्र कैलासे शंकरालये। हारेन्द्रस्यानुषंगेण फणीन्द्राश्च प्रसादिताः ॥
सुरेन्द्राश्च मुनीन्द्राश्च जैगीषव्य तपस्यया। त्वयि प्रेमास्पदे शंभोश्शंभुना प्रेषितावयम्॥
जैगीषव्यं पुरस्कृत्य वदास्माकं कृपानिधे। निधानभूतं सद्रत्नं शिवधर्मैकसादरम् ॥
इत्थन्नन्दीशवाक्येन चन्द्रोदय इवांबुधिः। प्रहर्षमतुलं लेभे नगाधीशसुतासुतः॥ ३७॥
वचसाह्लादयन्त्सर्वान्गणेन्द्रानमरेश्वरान्। मुनीश्वरान्गजेन्द्रास्यं जैगीषव्यं महामुनिम्
उवाच चाग्रजन्नत्वा महेशश्चांबिकामपि। गजाननन्तदास्तौषीत्स्तोत्रेणाथषडाननः ॥
कृतांजलिपुटो भूत्वा गणेन्द्रसुरभूसुरैः॥

स्कन्द उवाच—

पयोदधिपयेभवद्विकचपुष्करैः पुष्करं मदान्धकरटित्वचोवसनपुत्रमिन्द्रप्रभम् ।
त्रिपुण्ड्रतिलकोज्वलं द्विरदवक्त्रकुंभोज्वलं महेशजनिमर्चकं प्रणतविघ्नराजं सुराः ॥

सिन्धूरदूर्वाचितकुंभमौलिं गण्डस्थलीलंबितचामरौघम् ।
कर्णावतंसीकृतपद्मकोशं नमामि विघ्नार्तिहरं प्रसन्नम् ॥ ४१ ॥

करटजमदधारागन्धसन्दोहबन्धद्विजदलिकुलमालं कर्णसंवीततोद्यैः ।
भजत निगमसारं नागयज्ञोपवीतं पशुपतिवरपुत्रं विघ्नराजन्नतोऽस्मि ॥ ४२ ॥

सृणिपरशुकराब्जं नौमि विज्ञानहेतुं गणपतिमगजान्तःप्रेमधारारसाप्तम् ।
फलकुलगुडमाद्यं मोदकौघप्रियं त्वां पशुपतिवरपुत्रन्नौमि नागेन्द्रवक्त्रम् ॥

आखुवाहमजशौरिसुरेशैस्सिन्धुरेन्द्रवदनं मुनिवन्द्यम् ।
वेदवृन्दनिवहैस्स्तुतमाद्यं गद्यपद्यवचसा प्रणतोऽस्मि ॥ ४४ ॥

सूत उवाच—

गजास्यमित्थं संस्तुत्य षडास्यस्तुन्दिलान्तरः ।
प्राहतान्प्रमथाधीशान्त्सुरेशान्भूसुरांस्ततः ॥ ४५ ॥

जैगीषव्यम्मुनिश्रेष्ठंविशिष्टंशिवसम्मितम्। स्कन्दोऽग्रजस्यानुमतेश्शिवयोःप्राहतन्मतम्

स्कन्द उवाच—

ईशानांबुनिधेस्सुशीकरगणा ब्रह्मेन्द्रनारायणा-
स्ते शक्त्यादिमरुत्प्रचारचलितास्तत्सूनुजास्सृष्टयः ।
तत्सूनुप्रभवा नृपादय इमे किन्तत्कथाभिः फलं
संप्राप्नोति विसृष्टयोऽत्र हि महाभूतादिभिस्ता मृषा ॥ ४७ ॥

मिथ्याभूतजगत्प्रचारविहितो धर्मोऽत्र वर्णाश्रमा-
पारावारविचारसारहृदयास्तेषां श्रमः केवलम् ।
किन्तच्चर्वितचर्वणेन विदुषां विद्योद्भवो जायते
यं धर्मोत्तममामनन्ति तपसा संवेद्य एकश्शिवः ॥ ४८ ॥

जैगीषव्यमुखाश्च भूसुरगणा यूयं गणाश्शाङ्करा
विष्णुब्रह्मसुरेश्वरा मुनिगणाश्श्रीमद्गणेशाग्रतः ।

वक्ष्ये तच्छिवयोरपारचरितं कैलासमत्यादरा-
दप्राप्यं त्वतिदुर्धियाञ्च सुधियां श्रीमन्महेशालयम् ॥ ४९ ॥

इति श्रीशिवरहस्ये प्रथमांशे स्कन्दशिवगणसंवादो नाम
नवमोऽध्यायः ॥ ९ ॥

जैगीषव्यस्कन्दसंवादे दशमोऽध्यायः.

स्कन्द उवाच—

शिवपादारविन्दश्रीर्य्याश्रियंश्रीपतिंविधिम्। इन्द्रंचन्द्रंसुरानन्यानुत्पादयतिसाशिवा
ढुण्ढिश्च नन्दिकेशश्च तथा भृङ्गिरिटिं मुनिम्। मार्कण्डेयं दधीचिश्च दूर्वासंजामदग्निकम्

जय जय मंगलतरसुन्दरतममंगलापते जय जय विश्वविधानसंस्थितिनिध-
नशिक्षणचण वन्धुतर सुन्दर वरकृत्तिवसन मुनिवृन्दविनुत निन्दितमखसंहृते सु-
रनन्दितगण पुरमारक भवशोषण गरलाशन शमनभयकंपितमुनिपोतकशरण अरु-
णाधिप करुणाकर जनतारण तरणिस्थित सुरकारण मारशोषण त्रिगुणनिगमगण-
पोषणचरण शरणं भव शरणं भव शरणं भव दयया ॥ ३ ॥

निगमागमवचनातिग यमिमानसगगनान्तर वयुनस्थितिसुरकारण मारशोषण
भवनाशन वरहारक दहनामलनयन मननातिग वृषवाहनगमन भवनाशन वसिताश-
क सुरभूसुरनिकरावन पितृकाननविहृते दहराकृतिकुहरातिग वरभूधरशयन खर-
शीतजकरसंस्थित मुरभेदनशरधारण पुरनाशन निगमव्रजतुरगोत्तम उरगाधिपकृत-
शिञ्जनिवरकार्मुक मृगधृक् कुलिशायुधमुखदैवतभटरक्षणचतुर शरणं भव शरणं
भव शरणं भव दयया ॥ ४ ॥

दहनानिलतपनामरवरभूसुरजलनायकशमनाकृतविनते कलिताखिलचरजङ्ग-
मजगतामवन जननादिक ललितोत्तमचरित भरितानलवरतात जनतापहृते विन-
तात्मजवाहनार्चनजनितातुलदयया विकचांबुजनिभलोचनरथसंवहनप्रद विधिमौलि-
जफलकामलशयभूषित भगवन् पवनानलवलमारणवलशोषण तृणचालनमपि कृते
कृणुते न हि निखिलागमशिरसंस्तुतचरित शरणं भव शरणं भव शरणं भव दयया॥

वरुणालयमथनोद्भवगरलोत्थितमहसा सुरकिन्नरहरवलान हरिनायक रभसा कवलीकृतगरसम्भवनलिनामलशुभकन्धर जलदोपम भगवन् मधुमारणनयनामलनलिनार्चितपदपंकज लुलितांबुधिचुलुकीकृतघटसम्भवनुतितोपित यतिमानसवरभूपण फणिकंकण भगवन् दुरितापह चलितामलललितेन्दुकलालयविमलीकृतजगते शरणं भव शरणं भव शरणं भव दयया ॥ ६ ॥

मखसन्मुखहव्यनाशनमुखतर्पितहविभक्षणविबुधव्रजनलिनोत्थितमहिमातिग परिपूजनरहितातुलमन्युकृते मननोत्थितगणगर्जन परितर्जन सुरभर्जन विधिनन्दन कृतशिक्षण परिपूरितदुरितान्तक गजमारणकरण अगजाधिप भुजगाधिपशयनार्पितविधिमौलिजकलितस्रज वलभिन्मतभगदैवतनयनांबुजनाशकृते शरणं भव शरणं भव शरणं भव दयया ॥ ७ ॥

जटिलालक मृगनायकमदपाटनजनितांबरकटिशोभित वटसंस्थित निगमागमभटगोपक सुरनायकत्रुटिताखिलजगदुद्भवघटकर्परहरिशरकर्प पुरदाहन भगवन् पटुताकृतिनिखिलस्थितिकटुकीभवजलधे भवदागमजगदुद्रुमजलदालयवहन त्रिपुरान्तक शमितान्तक शमितान्धक शमिताखिलदुःख विभो शरणं भव शरणं भव शरणं भव दयया ॥ ८ ॥

पवनाशनमणिकंकण गरलाशनमधुसूदनवलनाशनयमुनानुजभवनाशन सिकताशनतनयामलगणसत्तमगुणवन्धुरहृदयानन मुनिसत्तमविनुत गणगर्जितवदनायितशशिधामककृतनेत्रक उडुनायकशिखरामरवरनायककुमुदाकरसमुदायजततलोचन द्विरदाननसुतहर्षद तरुणेन्दुललाममसृणारुणनखजोत्पलकलिकायितसुरजालकमकुटीतटघटितांबुजपाद शरणं भव शरणं भव शरणं भव दयया ॥ ९ ॥

अखिलाण्डग शुकतुण्डजघटनोत्थितमधुरायितसुखतन्द्रिजरससारसपदनामजमुनिगीतविनोद कनकांबुजजनिताखिलगजखण्डन यमखण्डन शशिखण्डनकलितामलशिरसे मृदुमण्डित उरगेश्वरकृतकुण्डल विधिखण्डन शिखण्डवरलोचन वडवानलकृतजिह्वक शिखिवाहनकृतबोधन श्रुतिमण्डलशिरसे पुरदण्डन नगकोदण्डजहरिशरकर्पणाखण्डलकरभञ्जन मुनिमण्डलकृतरक्षण खण्डपरशो तण्डुनन्दिगणभृंगि-

चण्डिकृततालमर्दलजघुङ्घुमध्वनिजमड्डुघर्घरितरंगनाट्यपर जह्नुजाविततनीरतीरविलसच्छिवलिंग शरणं भव शरणं भव शरणं भव दयया ॥ १० ॥

इत्यष्टपद्यैस्स्वान्तस्थं तुष्टावाष्टाकृतिं हरम्। स्कन्दो नत्वाथ जगतांमातरंस्तोतुमारभत् ॥
उदारतरगंभीरपद्यैर्हृद्यैर्महेश्वरीम्। देववामांकभागस्थां तारकारिस्स्वमातरम् ॥ १२ ॥

स्कन्द उवाच—

नौमि स्तौमि जगत्प्रसादघटनासंस्थानसंपादितां
लोकालोकनतत्परां भगवतीं मायां महेशाश्रयाम्।
विष्णुब्रह्ममरुद्गणेश्वरमहासाम्राज्यदानक्षमा-
मीशांकाधिकृतां प्रसादमुखरां कायेन वाचा सदा ॥ १३ ॥

इन्दुकुन्दकरिमत्तजविवस्फारधारविजिताखिलवृन्दाम्।
नीलमेघनलिनामलकान्ति केसरीन्द्रवरभूधरकूर्माम् ॥ १४ ॥

वक्त्रदन्तगमनाधरकेशैर्लोचनेन जघनेन कुचाभ्याम्।
पादपंकजरजःपरिभूता नागयक्षसुरमानवकन्याः ॥ १५ ॥

अम्बामम्भोरुहाक्षीं सकलसुरकदम्बैकशालिप्रपूर्णां
काशीशेशान्नपूर्णां विधिहरिहरसत्संस्तुतां भर्गकान्ताम्।
शान्तां शान्तान्तरंगां भजदघपटलीव्यालनागान्तकान्तां
कान्तान्देवस्य देवीमगवरवरजान्नौमि चिन्नित्यसंस्थाम् ॥ १६ ॥

नलिनजवनितापद्मसंस्थाकरस्थैः।
विधिवहगरुदाभैश्चामरैर्वीज्यमानां शशिमुखनिजभर्तुर्भार्यया छत्रवत्या।
सितनभसटसिंह्मस्कन्धसिंह्मासनस्थां गजमुखशिखिवाहप्रेमजानन्ददृष्टिम् ॥

रक्तवीजतुरगारिधूम्रजाचामरारिवरशुंभनिशुंभान्।
चण्डमुण्डवरभण्डजमुण्डैराजिभूमिकमलैरिवदेवी ॥ १८ ॥

कोदण्डाकृष्टदण्डोच्चलितवरशरासारधारादिभिर्या
तस्तारामरवीरसंस्तुतपदा सा पातु नश्श्रेयसे ॥ १९ ॥

सूत उवाच—

एवंसंस्तुवतस्तस्य स्कन्दस्यामलचेतसः। प्रादुरासीद्वृषारूढोभगवाञ्छ्रीवृषध्वजः ॥
नीलकण्ठस्त्रिणेत्रश्च भोगीभोगविभूषणः। कोटिप्रभाकरोद्भासिमयूखावलिभासितः ॥
दिशामुखतमस्स्तोममौलिसोमनिवारितः। चलच्चामरवालोत्थवातप्रोच्चलितांबरः ॥
छत्रछायावारितोग्रद्धानुभानमरीचिमान्। सोमस्सहोमया भ्यागाद्गणसङ्घसमावृतः ॥
सुरासुरकरोन्मुक्तसुमवर्षौघसन्ततिः। तद्गन्धबन्धसंबन्धमरुदामोदमोदितः ॥ २४ ॥
विकचत्कमलामोदमालया शोभिविग्रहः। विलसन्मणिमुक्तादिमालावलितकन्धरः ॥
फणामणिकृतानेकमाणिक्यवरकङ्कणः। जङ्गमाद्रिप्रतीकाशवृषारूढोऽभ्यगाच्छिवः ॥
मुनिकिन्नरगन्धर्वगानधारास्तुतस्तुतिः। दृष्ट्वादेवन्तदोत्तस्थौस्कन्दस्सिह्मासनात्तदा॥
मुनीन्द्रैश्च गणेन्द्रैश्च सुरेन्द्रैर्गणपेन च। जैगीषव्येन मुनिना प्रणनाम महेश्वरम्॥ २८॥
दृष्ट्वा नमन्तन्तं स्कन्दं सगणं समुनिंसुरान्। द्विरदास्यम्मुनीन्द्रञ्चजैगीषव्यं कृपांबुधिः
करुणापरया दृष्ट्या चाल्लुलोके सहांबया। पुत्रौ गाढं परिष्वज्य मूर्ध्निचाघ्रायशंकरः ॥
उवाचसर्वदेवानां सन्निधौ स्कन्दमीश्वरः ॥

ईश्वरः—

वत्सानयातवस्तुत्यासन्तुष्टोऽस्मिसहांबया।धन्ययामान्ययास्कन्दत्वम्ममातीववल्लभः॥
त्वयामद्वदनांभोजाच्छ्रुतं सारमैश्वरम्। शैवं शिवरहस्याख्यं वरमोक्षकथाश्रयम् ॥
गणानाञ्च सुराणाञ्च मुनीनां भावितात्मनाम्। जैगीषव्यंपुरस्कृत्यममभक्तंजितेन्द्रियम्
मारिष्टं माच ते विघ्नं मम भूयात्कथारसे। यतोविघ्नहरस्तेऽद्य सन्निधौ वर्ततेऽग्रजः॥ ३४॥
इत्युक्त्वा च महादेवीमालोक्य च हसन्हरः ॥ ३५ ॥

नानास्थावरजङ्गमादिजनिभिर्भ्रान्तस्य मानुष्यता
मानुष्ये सति विप्रता श्रुतिगता चाचारता तत्परम्।
इष्टापूर्तिवशक्रियादिशतशो वृत्या परं शांभवो
लिंगालिंगनचेतसा स हि भवेन्मुक्तस्त्वलिंगस्सुखी ॥ ३६ ॥
श्रुतिशतविधिजालकर्ममूलास्त्रिगुणगतागतिसौख्यदुःखशीलाः।
मनसिजसुखमानसंगलीलामननविचारविवर्जनेन वालाः ॥ ३७ ॥

नरकमुखमवाप्य चेन्द्रलोकं भवभुवनं समवाप्य मर्त्यलोकम् ।
पुनरपि जननेन कर्मशेषैर्मतिमपि घोरतरां समाप्नुवन्ति ॥ ३८ ॥

किं वेदैरखिलैः पुराणनिचयैरन्योन्यनिन्दापरैः
किं वा भारतयुद्धकीर्तनमुमे किं क्षुद्रधर्मादिभिः ।
यत्रेशानकथाप्रचारविधुरानिस्सारभूला कथा
काव्येनापि किमत्र रामकथया दुःखोत्कटायाः फलम् ॥ ३९ ॥

सूतः—

कृताञ्जलिपुटा देवी प्राहशंभुं सनातनम् । महेशं जगदाधारमनाधारं महेश्वरम् ॥

देव्युवाच—

त्वत्कृपापात्रभूतानां नाशुभं विद्यते हर। मत्तश्शुश्राव वेदार्थसारं शैवरहस्यकम्॥ ४१ ॥
स्कन्दोऽयं स्कन्दितारातिर्विनीतो वीतमत्सरः । रहस्यं यत्त्वयाप्रोक्तंमुनीन्श्रावयतुप्रभो
सुरभूसुरसङ्घेषु गणेन्द्रेषु महेश्वर । प्रसादः क्रियतामत्र श्रवणाय मुनिर्धृतः ॥ ४३ ॥
जैगीषव्योऽपि मतिमांस्तव भक्तस्त्वनन्यधीः। तदा देव्या वचश्श्रुत्वाकरपंकजमुत्तमम्॥
निदधौ स्कन्दशिरसि जैगीषव्यस्य शंकरः। शंकरश्रीकरस्पर्शाज्जैगीषव्यकुमारकौ ॥
नेमतुश्शिवपादाब्जं प्रोत्फुल्लहृदयाननौ।स्कन्दश्शिवपदाब्जन्तत्कराभ्यांसंस्पृशञ्जगौ॥
अयस्मेहस्तमन्त्रेण स्वनेत्रकमलस्रवैः। अभ्यषिञ्चन्मुदा भक्त्यानान्यत्किञ्चिदमन्यत॥
स्कन्दं प्राह महादेवो जैगीषव्येक्षणस्तदा ॥

ईश्वर उवाच—

शिवे किलैषतोपकृन्मुनीश्वरेषु यत्प्रियो
विशेषतः कृपाझरीभरीकुलेन लोकितः ।
कलाकुलेन तर्पितो यथैणवाललाञ्छन-
स्तथैष जैगिषव्यकः कटाक्षतो भवेन्मम ॥ ४८ ॥

प्रसाद्य सर्वानमरान्मुनीन्द्रान्गणेश्वरान्स्कन्दमुनीन्महेश्वरः ।
जगाम गौर्या जगतां विधाता संस्तूयमानो मुनिदेवसङ्घैः ॥ ४९ ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यस्कन्दसंवादे
दशमोऽध्यायः ॥ १० ॥

स्कन्द जैगीषव्यसंवादे द्वादशांशसंख्याकथनं नाम एकादशोऽध्यायः.

सूत उवाच—

शिवदर्शनजानन्दसन्दोहानन्दनिर्भरः। प्राहशूरारिरित्थन्तं मुनिमालोक्य शांकरम्॥

स्कन्द उवाच—

जैगीषव्यशृणुष्वात्र रहस्याख्यानमुत्तमम्। शैवे रहस्ये देवेन देव्यै कथिकथानकम् ॥
तद्वक्ष्यामि समासेन शृणुत्वं मुनिभिस्सह। गणेश्वरैस्सुरैशैश्च तत्रादौ कथयाम्यहम् ॥
नमस्कृत्वाप्रमेयाय महादेवाय शम्भवे। देवीं गजाननं देवं शैवाचार्यानकल्मषान् ॥
माहेशांशः प्रथमतो नाम्नासौ मुनिसत्तम। जैगीषव्य प्रसादन्ते महेशस्य समागमः ॥
गणानान्देवसंङ्गानां मुनीनाञ्च समागमः। मया प्रसादितो देवस्तोत्रवर्येण सत्तम ॥
कैलासवर्णनञ्चैव विचित्रं श्रीमहेशितुः। देव्या महेशसंवादः कौतुकेन नगोत्तमे ॥ ७॥
चरित्रं शिवयोस्तत्र विचित्रं भूधरोत्तमे। कैलासेश्वरपूजा च महेशेन प्रकल्पनम्॥ ८ ॥
द्वारप्राकाररचना गणानां स्थानकल्पनम्। मम देव्याश्च विप्रेन्द्र गणेशस्य महात्मनः॥
सहस्रलिंगाध्यायश्च कैलासस्य तपः क्रिया। तत्प्रसादनमीशेन तन्मौलौवसतिस्तथा ॥
कैलासस्याभिषेकश्च शंभुना कल्पितोनगैः। जिज्ञासा चैवदेवानांदेव्याःप्रादुर्भवात्सुराः
ज्ञानार्थकथनञ्चैव चात्मलिंगस्य पूजनम्। माहेशेऽस्मिन्महेशेनकथाःप्रोक्ताश्शिवेनहि॥
दिक्संख्यया मुनिश्रेष्ठ कथितोऽयं सहस्रतः। द्वितीयोंशोभवोनाम्नातस्मिन्प्रोक्तंहरेणहि
देव्याश्चैव तपश्चर्या मणिद्वीपागमस्तथा। कल्पवाटीरम्यनीपवनद्वीपोपवर्णनम् ॥ १४ ॥
चिन्तामणिमहासौधवर्णनं श्रीपुरस्यच। तस्मात्कैलासगमनं कामेशस्य वपुर्धरः ॥
कामेशया च देव्याच तत्र नित्यमवस्थितिः। हिमाचलगमश्चैव देव्यास्तत्र गतिर्मुने ॥
दूर्वाससोमहिम्नश्च कथनं तत्तपःक्रिया। द्वितीये भवसंज्ञेऽत्र कथितं शंकरेणहि ॥ १७ ॥
सहस्रत्रितयेनैव श्लोकसार्धेन शंकरः। हरस्त्रितीयो देवेन कथितोंशो मुनीश्वराः ॥
तस्मिन्मुनिप्रार्थनया व्यासेनपरिकीर्तनम्। गायत्र्याश्च तपश्चर्या देव्यागमनमुत्तमम् ॥
गणानांप्रेषणश्चैव तीर्थेशमहिमा तथा। श्रीशैलमहिमा चापि मानसार्चनकल्पनम् ॥
जनकस्य च संवादो याज्ञवल्क्येन शंकर। पद्मावत्या रत्ननिधेस्संवादः परमाद्भुतः ॥

१. श्लोकसार्धेन साहस्र त्रितयेनैव शंकरः इति पाठः।

तस्योत्तरार्धे चांशस्य पूजारत्ननिधेस्तथा। शिवस्य देवदेवस्य महादेवस्य शूलिनः ॥
यमलोकस्य वृत्तान्तो दर्शनं शिवयोस्तथा। संवादो भस्मरुद्राक्षधारणे महिमापि च ॥
गंगाया नर्मदायाश्च वरप्राप्त्युपवर्णनम्। माहेश्वरव्रतश्चैव वर्णनं श्रीमहेशितुः ॥ २४ ॥
शैवार्चनादिकथनं शिवडुण्डिचरित्रकम्। त्रयस्त्रिंशत्सहस्रेण सङ्ख्यया प्रोक्तएवहि ॥
चतुर्थश्शिवसंज्ञोहि चांशस्साक्षाच्छिवोदितः। बृहज्जाबालधर्मादिकथनं दशकस्य हि ॥
भस्मरुद्राक्षमहिमा शिवलिंगार्चनस्य च। महिमा शिवभक्तानां शैवानां भोजनेऽपिच॥
शिवक्षेत्रनिवासस्य कथनं बिल्वपूजनात्। पूजाप्रभावकथनं तस्मिन्नंशे प्रकीर्तितम् ॥
चतुस्सहस्रतस्सङ्ख्या देवदेवोदिता शुभा। भर्गोनाम्ना पञ्चमांशः कथितोऽत्रशिवेनहि॥
ज्योतिर्लिंगद्वादशानां महिमा तत्र कीर्तितः। वामदेवोपदेशश्च श्रुतिसिद्धान्त कीर्तनम् ॥
गंगासागरमाहात्म्यं प्रभासे पुष्करस्यच। हरिद्वारप्रभावश्च बिल्वमूलार्चनस्य च ॥
सहस्रनामकथनन्देवदेवस्य शूलिनः। महिमा देवदेवेन कथितोऽस्ति विशेषतः॥ ३२॥
शिवायैषट्सहस्रोऽत्र कथितो मुनिसत्तम। शंकरांशस्ततष्षष्ठो दिक्सङ्ख्या क्रमसङ्ख्यया
कथितश्श्रीमहेशेन तस्मिन्रुद्रोपवर्णनम्। शिवलिंगार्चनस्यापि भस्मरुद्राक्षधारिणाम्॥
महिमा शांभवानाञ्च कथितो विस्तरेणहि। निदाघऋभुसंवादष्षष्ठांशो ज्ञानविस्तरः॥
उग्रो नाम्ना सप्तमोऽत्र कथितश्शंकरेण हि। देवस्य देव्या संवादो नामसाहस्रकीर्तनम् ॥
अविमुक्तप्रशंसा च शतर्चनतपःक्रिया। नाम्नामष्टोत्तराख्यानं महिम्नमथवैहरेः॥ ३७॥
पुष्पदन्तमहिम्नाख्यकथनं तत्र सत्तम। काटकोटरजाख्यानं क्षेत्राणां महिमा तथा ॥
श्रीशैलस्यारुणाद्रेश्च तथावृद्धाचलस्यच। श्रीमद्दक्षिणकैलासमाहात्म्यमपि विस्तरात् ॥
पुण्डरीकपुरस्यापि काञ्च्याश्श्रीमहिमाद्भुतः। कुंभघोणप्रशंसाचतथामध्यार्जुनस्यच ॥
चतुर्दशसहस्रेण कथितोऽत्रशिवेनहि। भीमोऽष्टमोमहांशोऽत्रकथितोविस्तरेणहि॥४१॥
दिङ्नागसङ्ख्यया चैव सहस्रेण मुनीश्वर। पाताललोकलिंगानां महिमाकथनंमुने॥४२॥
श्रीहाटकेशमहिमा शेषस्यात्रतपःक्रिया। प्रसादश्च महेशेन तस्य भूभारधारणे ॥ ४३॥
सदाशिवोंशो नवमस्तस्मिञ्छंभोःकथानकम्। शिवेनोक्तं महादेव्यै नामसाहस्रमुत्तमम्
कलौ शैवसमाचारप्रमाणेन विमुक्तिदम्। महाशांभवधर्माणां कीर्तनं परिकीर्तितम् ॥
षड्वक्त्रसङ्ख्यया मेऽद्य सहस्रेणैव कीर्तनम्। ईश्वरांशोऽत्र दशमो दशधर्मानुकीर्तनम्॥

बिल्वार्चनं रुद्रजपः पञ्चाक्षरमहोदयः। शिवलिंगार्चनस्यापि भस्मरुद्राक्षकीर्तनम् ॥
शांभवानां शिवक्षेत्रेशैवभक्तार्चनन्तथा। शिवनाम्नस्स्मृतेश्चापि दशमे महिमातु यः ॥
तस्मिन्प्रकीर्तितोविप्रशङ्करस्याख्यसङ्ख्यया। एकादशो महादेवः प्रोक्तोंशश्शंभुनातदा
मन्त्रेत्रक्रमसङ्ख्यातश्शिवपूजाक्रमात्मकः। अभिषेचनिकानाञ्च फलं पुष्पेषुकीर्तनम् ॥
भक्तीनांदशकानाञ्च कीर्तनं पूजने तथा। मुनिसङ्ख्या ग्रन्थतश्च ईशो नाम्नात्र द्वादशः॥
शिवनाम्नां सहस्रस्य कीर्तनं तत्र कीर्तितम्। प्रसादश्शंकरस्यापि ममैवानुग्रहात्मकः ॥
शिवरत्नाकरकथामाहात्म्यं मुनितोषणम्। एतदध्यायसाहस्रैः कीर्तितं श्रीशिवेन हि ॥
देव्यै देवेन कथितं रहस्यं शिवसम्मतम्। सदाशिवसमो देवो नास्ति लोकत्रयेष्वपि ॥
तथा शिवरहस्येन तुल्यमन्यन्नविद्यते। शैवसारमहारत्नकोशोऽयं मुनिसत्तम ॥ ५८ ॥
पुण्योऽयं पावनश्चायं भक्तिसारकथाश्रयः। संसारायासधर्माणां कथनेन विवर्जितम् ॥
वर्णाश्रमविचारादिकथाश्रमविवर्जितः। अत्याश्रमोक्तधर्माणामाकरोऽयं महामुने ॥
नानाकथासुधाश्शैवाः परमानन्दनिर्भराः। देव्यै देवेन कथिताश्शतसाहस्रतोऽधिकाः॥
भक्तैश्श्राव्योऽयमतुलश्चेतिहासवरोत्तमः। शैवसारकथारत्नं सर्वस्वोऽयं मुनीश्वराः॥
स्कन्दे गजानने गौर्यां यथाप्रीतिर्महेशितुः। तथा शिवरहस्येऽपि गोप्यं गोप्यमिदं शुभम्
नदेयं नैव वक्तव्यमादौ तेभ्यस्त्वया मुने। शप मत्पदयोर्विप्र नचेन्मूर्धात्र ते पतेत् ॥
वेदान्तसारसर्वस्वं शिवभक्तिप्रकाशकम्। देयं भक्ताय विप्राय पुत्रायात्यन्तरागिणे ॥
वक्तव्यमनहंकारचित्तायात्मगुणाय च। शैवाय शंभोरुत्कर्षभक्तियुक्ताय ते मुने ॥
संवत्सरोपितायत्वं भक्तायान्तेनिवासिने। त्रिणेत्रचिन्तापात्राय नान्यस्मै सत्यमुच्यते

स्कन्दः—

जगाद जगतां गुरुस्त्रिजगतां जनित्रीं मुदा
  जगत्त्रितयजन्तुहृत्त्रिविधतापदुःखापहम्।
जडाजडगतस्थितिप्रलयभावभावं भवं
  विशोषयदिदम्मुहुश्शिवरहस्यरत्नांशुमान् ॥ ६९ ॥

१. शंकरस्य क्रमात्मकः इति पाठान्तरम्।

तदेव भवतां वदे भवदवाग्निसंशोषकं
विधुन्तुदमुखोत्थितप्रकटसोमधामप्रभम् ।
विकासितदिशामुखप्रथितपाण्डिमानोपमं
सुधामपि बुधाः परं हवनवक्त्रहव्याशनाः ॥ ६६ ॥

विधूय सुरलोकगाः परिपठन्ति शंभोः कथा-
मनाथजननाथ ते प्रमथनाथ नाथोऽस्म्यहम् ।
गिरीन्द्रवरकन्यकाहृदयनाथ पादांबुजं
मनोरथपथातिगं प्रथय भक्तिभावं त्वयि ॥ ६७ ॥

क्षमारथरथांगकस्स्फुटसुपाणिबाणासनो
हिरण्यनगकार्मुकस्सकलविश्वनाथाधुना ।
स एव सुखसंपदान्निधिरपारपुण्यास्पद-
स्स एव सुकृती सदा यजति वेदमध्येति च ॥ ६८ ॥

स दाननिचयार्जितप्रभवधर्मसाराधिक-
स्स उत्तमससागरावसन उर्वरादानकृत् ।
क्षणार्द्धमधिकादरश्शिवरहस्यधर्मश्रवा-
स्स एव गणनायकश्शिवपदाब्जयुग्मार्चकः ॥ ६९ ॥

सुरासुरचराचरप्रभवनाशरक्षाक्रमै-
र्नवायुतरणांकणप्रभवयुद्धदुःखोद्भवैः ।
श्रमैकरसभूर्गतैर्विविधवर्णधर्माश्रमैः
कथाभिरिह नश्वरं न भवति श्रुतीशेखरम् ॥ ७० ॥

तुषाद्रिरभिखण्डनैः किमिह लभ्यते तण्डुल-
स्तथा शिवकथां विना न हि शमाय जन्तोर्मनः ।
शैवानन्दरहस्यसागरमहाद्वीपोपमा द्वादशा-
स्ते चांशाः खलु शंकरेण विहिता नामानि तेषां वदे ॥ ७१ ॥

माहेशः प्रथमस्ततोऽपि हि भवो हारश्चतुर्थश्शिवोभर्ग-
श्शंकर उग्रो भीमसदाशिवेश्वरमहादेवेशसंज्ञा क्रमात् ।
ग्रन्थैः पद्यमहाद्यमौलिभिदुरैर्वेदान्तसारातिगै-
श्शब्दैस्सुन्दरवाग्विलासमधुरैरध्यायवृन्दैश्शिवः ॥ ७२ ॥
साहस्रैश्च शतैस्सहस्रकिरणाकारैस्तथा शंकरो
दिग्लोकामरब्रह्मवेदक्रतुभिर्दिङ्गागतस्सङ्ख्यया ।
मद्वक्त्रामलनीलनीरजसमं नेत्रक्रमं शंकर-
स्यास्याक्षिक्रमशोमुनिक्रममयो देव्यै शिवेनाकथि ॥ ७३ ॥

इति श्रीशिवरहस्ये प्रथमांशे स्कन्दजैगीषव्यसंवादे द्वादशांशसंख्याकथनं नाम एकादशोऽध्यायः ॥ ११ ॥

---

## कैलासवर्णनन्नाम द्वादशोऽध्यायः.

सूत उवाच—
जैगीषव्याय यत्प्रोक्तं स्कन्देनामिततेजसा । कैलासापारसौधानां गोपुराणां नगस्य च॥
प्रमाणं लिंगसङ्घानामालयानाञ्च निर्मितिः । शिवेन निर्मितं साक्षान्मनसैवातुलप्रभम् ॥

स्कन्द उवाच—
जैगीषव्य शृणुष्वाद्य कैलासस्थानमुत्तमम् । शृणुष्व शैलं शिखरैश्शंभोरावासमुत्तमम् ॥
सर्वगस्यापि देवस्य महादेवस्य शूलिनः । महाकैलासमित्युक्तं शिवतत्वार्थवेदिभिः॥४॥
ईशानगणमुख्यस्य कैलासं दक्षिणाश्रमम् । अयं मुनेऽमरेन्द्राणां निवासो मेरुरुन्नतः ॥
प्रविष्टष्षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विश्रुतः । वृषपस्तम्भमयो भाति महाकैलाससन्निधौ॥
कैलासादपि पूर्वस्यां पञ्चाशच्च सहस्रकैः । योजनैः प्राक्स्थितो मेरुर्नानासुरगणाश्रयः ॥
ज्वलज्ज्वलनसंकाशः कनकोत्तमपर्वतः । सहस्रयोजनोत्सेधं विद्धि मेरुं सुरालयम्॥८॥
षट्षष्टिः कथितो योगिन्नूर्ध्वायामैकमूलतः । लक्षयोजनमानेन कैलासो धरणीधरः॥ ९॥
कुलाचलास्सप्तशतं प्राकारपरिघास्तथा । प्राकारस्यान्तरालस्य सप्तद्वीपास्ससागराः ॥

---

१. दिग्लोकामरवृन्दवेदक्रतुभिरिति पाठान्तरम् ।

सप्ताब्धयस्सुधांभोधिकल्लोलामलवीजितः। कोटियोजनमानेन कैलासो भूधरो महान् ॥
राजतो राजतेऽत्यन्तं पञ्चाशल्लक्षमानतः। सप्तपातालमूलान्तस्सप्तलोकान्त उच्छ्रयः ॥
महाराजतभूभागश्चन्द्रकोटिसमप्रभः। नाग्निर्नविद्युर्नोसूर्यस्तत्तेजस्सदृशो भुवि ॥ १३ ॥
चतुर्दश महालोकानुच्छ्रायश्शिखरैस्स्वयम्। मध्ये सुधासागरस्य फेनमण्डोपमस्स्थितः
न हरो न हरिर्धाता महेन्द्राद्याश्च देवताः। न सुपर्णोरगा यक्षा न गन्धर्वा दितेस्सुताः ॥
न वीक्षितुं शक्नुवन्ति किंपुनर्गन्तुमञ्जसा। तत्प्रभाभिहतालोका हराजहरिणो द्विज ॥
तत्तेजसा प्रतिहतास्सूर्येन्दुपवनानलाः। सुधासागरकल्लोलैः कैलासस्पर्शवायवः॥ १७॥
पुनन्ति लोकानखिलान्विष्णुब्रह्महरामरान्। सुरासुराणां गमनं न तत्र मनसापि हि ॥
न वेदवचनैश्शक्यो महाकैलासपर्वतः। तल्लेशलेशमहिमां कश्शक्तो वक्तुमप्यणु॥ १९ ॥
सहस्रवदनश्शेषस्सहस्राक्षोऽपि नेक्षते। किं पुनर्मानवाः क्षुद्रा वराकास्ते सुरासुराः ॥
शतं कुलाचलामुख्याःप्राकाराइवसंस्थिताः। महद्भिरुच्छ्रितैश्शृङ्गैःकेचिद्गोपुरवत्स्थिताः
तदन्तरान्तरालेषु परिघाकृतयोऽब्धयः। ततोऽपि सप्तप्राकारं शंभोरन्तर्गृहं परम् ॥
प्राकारभूतास्ते शैलास्ताञ्छृणुष्व द्विजोत्तम। कुमुदः पारियात्रश्च मैनाकः पूर्वदिग्गताः
दर्दरो मलयो विन्ध्यः पश्चिमे योगिपुंगव। उदयास्ताचलौ मुञ्ज उत्तरस्यां दिशिस्थिताः
नीलोदक्षिणकैलासोहिमवान्दक्षिणेस्थितः।विगाह्यावहितास्सर्वेचाब्धिभिस्सर्वतोदिशम्
द्वीपाब्धयस्ते परिघास्सप्तसप्तैव पर्वताः। तदन्तरान्तरालेषु विहरन्ति दिवौकसः ॥२६॥
गन्धर्वाप्सरसस्सिद्धानागयक्षास्सुपर्णकाः। किन्नराः पुरुषाःपुण्याविद्याधरसचारणाः॥
मुनयो गणसङ्घाश्च नानाभूमैकभूमयः। ततोऽपि विष्णुब्रह्माद्या ईशाना रुद्रमूर्तयः॥
विहरन्ति पयोंभोधिप्राकारवरमाश्रिताः। स्वादूदकाब्धितीरे च ततोऽपि प्रमथाधिपाः॥
ततोऽपि रत्नप्राकारो दशसाहस्रयोजनः। तद्रत्नकान्तिधाराभिर्मण्डितं भुवनत्रयम् ॥
मत्तकोकिलनेत्राभस्तत्रास्तेरत्नपर्वतः। शतयोजनकोच्छ्रायः पद्मरागनगोत्तमः॥ ३१ ॥
मयूखमालावितततन्मयूखतिरस्कृतः। चन्द्रकान्तमणिप्रोद्यत्प्राकारोऽस्ति तदन्तरा ॥
पञ्चाशतं सहस्रञ्च योजनायामतो द्विज। सोमाच्छशतपीयूषनिर्यद्धारासमन्वितः॥
तत्कान्तिसारधाराभी रञ्जितास्तत्र भूमयः। हिमसारमहातारधाराव्यापिनगोत्तमः ॥
दशसाहस्रमानेन तत्रास्ते हीरको नगः। इन्द्रनीलामलमणिप्राकारोऽस्ति तदन्तरे ॥

पञ्चाशत्सोऽपि मानेन नीलनीलोत्पलद्युतिः। तन्नैल्यगर्भसौन्दर्यधाराधीरैकभूमयः ॥
तत्रास्ति पर्वतवरश्चेन्द्रनीलशिलोच्चयः। नीलनीरदसंश्लिष्टविद्युल्लेखान्वितच्छविः ॥
दशसाहस्रविस्तारः परिणाहेऽपि तादृशः। हरिन्मणीन्द्रप्रवरप्राकारोऽस्ति तदन्तरा ॥
तन्मणीन्द्रप्रभाभासिहरिता एव भूमयः। प्रवालपर्वतस्तत्र विंशत्साहस्रमुन्नतः॥ ३९ ॥
विद्रुमलसत्कान्तिकान्तो भूधरनायकः। तदन्तरेऽपि प्राकारो गोमेदमणिकल्पितः॥
त्रिंशत्साहस्रमानेन मधुपिंगलसुन्दरः। तत्रोच्चः पर्वतो विप्र कुरुविंदमणिप्रभः॥ ४१ ॥
पक्षसंख्यासहस्रेण शिखरैश्चापि तादृशः। तस्यान्तरेऽपि प्राकारः पुष्परागशिलाश्चितः॥
चत्वारिंशत्सहस्राणां योजनोन्नतमानतः। तस्यामलच्छविगणैस्सदृशास्तत्र भूमयः ॥
तत्रापि भूधरश्रेष्ठो मुक्तामणिशतैश्चितः। उन्मत्ताखुभुजोत्तुंगलोचनामलसच्छविः ॥
तदन्तरा त्विषाकारविंशत्साहस्रमानतः। तत्त्विषा चाभितस्सर्वपीतीभूतदिगन्तरः॥
वैडूर्यानेकसूत्राच्छधारारसविजृंभिताः। भूमयस्तत्र शोभन्ते विस्मयानां स्मयप्रदः॥
तत्रास्ति पर्वतवरो नवरत्नयुतच्छविः। क्वचिन्मरकतस्वच्छलहरीहरिताकृतिः ॥ ४७ ॥
क्वचिद्विद्रुमसंकाशस्सन्ध्याघननिभः क्वचित्। क्वचिद्धीरकजात्यच्छफलमूलसमच्छविः ॥
क्वचिद्वैडूर्यसूत्रोत्थभाभासितदिगन्तरः। उन्मत्तकोकिलाक्षाभकुरुविंदनिभः क्वचित्॥
पुष्परागसरागोद्यद्रागरक्तोऽरुणः क्वचित्। तृणग्राहिमहानीलनीलिम्ना च नभोपमः ॥
क्वचिद्गोमेदकापारमधुधारासमच्छविः। मुक्ताकान्तितिरस्कारिश्लक्ष्णनैर्मल्यभायुतः॥
स्वच्छाच्छस्फटिकोपांतविविताखिलदिक्तटः।नानारागमयूखौघश्चेन्द्रचापनिभः क्वचित्
तत्रास्ति मण्टपवरं नानाचित्रविचित्रितम्। पद्मरागमणिस्तम्भस्तम्भपीठमनोहरम् ॥
सिंह्मशार्दूलशरभगजहंससशुकाकृतिः। व्यालिशुण्डानलिन्यादिचित्रचित्रितविस्मयम्॥
एकैकरत्नसंक्लृप्तनीलोल्लायैकभासुरम्। पंक्तिशस्स्तम्भसाहस्रैर्नवरत्नपरिष्कृतैः॥५८॥
आपादपीठजश्लक्ष्णगोपानसिसुभित्तिकम्। स्वच्छादर्शतलप्रायभूमिभागैकरञ्जितम्॥
तत्र स्तम्भप्रभाज्योत्स्नाप्रभाकरशतप्रभम्। नसूर्यचन्द्रौ भासेते वह्निनक्षत्रविद्युतः ॥
तिरस्कृताः प्रभास्तत्र न रात्रिर्न दिवाक्वचित्। एवं लक्षस्तम्भयुक्तामण्टपास्तत्रकल्पिताः
पर्यन्तगोपुरोत्तुंगरत्नसौधायुतैर्वृतः। सहस्रलक्षफलकैस्स्तम्भकुंभैर्युतो मुने ॥ ५९ ॥
गोपुराणां प्रमाणन्तु मनसापि न शक्यते। नानारुद्रावतारादिमणिकल्पितविग्रहः ॥

मूर्तयो देवदेवस्य देव्या वाहनसंयुताः। स्कन्दहेरंबनन्दीनां सप्तलोकान्तमुच्छ्रिताः॥
गोपुराणांतलैर्दिव्यैर्विस्तारायामलक्षकम्। लिंगोद्भवस्ततः पार्श्वेवृषवाहस्ततः परम्॥
सिन्धुरत्वक्परीवीतः क्वचित्सांवस्सपुत्रकः। स्कन्दहेरंबसहितः क्वचिद्गणगणैर्वृतः॥
उमार्धविग्रहश्चापि नृत्ताटोपयुतः क्वचित्। वामांगदक्षिणांगोद्यज्जनार्दनविधिः क्वचित्॥
देवीपरिणयाकारः क्वचिद्भिक्षाटनाकृतिः। शूलासक्तकरश्चापि मृगपाणिः पुरादिहा॥
अन्धकासुरसंहारो दक्षिणामूर्तिरूपधृक्। मुनीनां ज्ञानदस्सिद्धिचिन्मुद्रापरिचिह्नितः॥
तत्पूरुषवामदेवाद्या ईशानाघोरसंज्ञकाः। बालेन्दुमुकुटास्सर्वे कपर्दवरशोभिताः॥
रत्नाभरणभूषाढ्या मूर्तयश्शंकरस्य हि। दिक्पालपालिकाभिश्च तत्तद्रागमणिप्रभाः॥
कल्पिताः परमेशेनशिवलीलाविचित्रिताः। पर्यन्तस्फटिकाभाश्च वृषा नीलविलोचनाः
महाशृंगैकमकुटघण्टामणिविभूषणाः। गोपुरोर्ध्वगतास्सर्वे महाहीरकशृंगकाः॥ ७०॥
प्राकारराजद्वृषभा महार्हमणिकल्पिताः। तलानां कोटिभिश्चापि गोपुराणां प्रकल्पनैः॥
गोपुराग्रमहारत्नकलशैस्त्यक्ततारकैः। दोधूयमानोच्चलितसमीरणपताककाः॥ ७२॥
तत्नगर्भगृहं शंभोर्नवरत्नान्वितोज्वलम्। तत्रास्ति मणिपीठोद्यच्चन्द्रस्फटिकसम्भवम्॥
महालिंगंमहाकारं रत्ननागफणान्वितम्। महारत्नवने जातफुल्लमालाविभूषितम्॥७४॥
सुवर्णखचितानेकविल्वचम्पकपूजितम्। शम्भुना च महादेव्या लोकानुग्रहकाम्यया॥
समर्चितं त्रिकालेषु प्रदोषेषु विशेषतः। तत्रस्थरत्ननिर्यातकान्तिभिर्दीपितन्तदा॥ ७६॥
तत्रातोद्यानि कुर्वन्ति गणाश्शम्भोर्महात्मनः। काहलीमुरजापारमड्डुडिण्डिमजर्झराः॥
शंखमद्दलभेर्यश्च निस्साणाः पटहानकाः। गोमुखास्स्वस्तिपातालावेणुवीणाविनादिताः
रुद्रकन्यासहस्राणि नाट्यं कुर्वन्ति तत्र हि। हावभावमनोज्ञानि पेशलालापवन्ति च॥
यौवनोन्मदधाराणि रणिताङ्घ्रिजनूपुरैः। क्वणद्रत्नजटाटंककपोलामलसच्छवि॥ ८०॥
धूपामोदैकबहलगन्धगन्धायिता दिशः। नन्दिप्रोत्सारितगणास्तत्रास्ते शंकरोऽव्यया॥
पूजितन्तं महालिंगं पश्यत्रत्नैस्सुपूजितम्। रुद्रकन्याकराब्जोत्थनरवक्वणनघट्टितम्॥
तन्त्रीमुखोत्थगन्धर्वगानं शृण्वन्तसदांबया॥

शिव शिव शिव शंभो चन्द्रमौलेऽमलात्मन् हर हर गुरुभारं शांभवान् मोदयस्व।
वितर परममुक्तिं संसृतिर्मा कदाचिद्भवतु भवभवाब्धेस्तारकं त्वां प्रपन्नः॥ ८३॥

एवं शंकरनामसारसुधया प्लाव्यन् गणाञ्छंकरः
पश्येशि प्रसभं शिवावदनजांभोजभ्रमत्पट्पदाः ॥ ८४ ॥

ईश्वरः—

कैलासेश्वरलिंगमेतदमलं दृष्टं सकृत्पूजितं
सामप्याशु सुधार्द्रसारहृदयं कर्तुं प्रवृत्तं शिवे ।
इत्यंबावदनन्निरीक्ष्य भगवान्प्रोवाच साक्षाच्छिव-
स्तल्लिंगालयदर्शनञ्च सुकरं पुण्यैरगण्यैरपि ॥ ८५ ॥
नो पश्यन्ति सुरासुराः प्रमथपा विष्णुर्विधिर्नेश्वरः
पश्यत्येव महेश्वरो गिरिजया स्वंलिंगमत्यादरात् ।
भोगीभोगफणामणिप्रविलसल्लिंगैकमौलीलस-
चन्द्रासारकरप्रचारजनितानंगप्रभावोज्झितम् ॥ ८६ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णनन्नाम
द्वादशोऽध्यायः ॥ १२ ॥

---

कैलासेश्वरप्रदोषपूजावर्णनन्नाम त्रयोदशोऽध्यायः.

श्री सूत उवाच—

कैलासेश्वरलिंगस्य महादेवस्सनातनः । वरिवस्यां स्वयं चक्रे सर्वपूज्योऽपि शंकरः॥ १॥

ऋषयः—

स कथं सर्वपूज्योऽपि भगवानगजापतिः । कैलासेश्वरलिंगस्य पूजनं कृतवान्वद ॥ २ ॥

सूत उवाच—

एवमेव पुरा पृष्टो जैगीषव्येन शंकरः । तमाह विनयानम्रं देवसेनापतिः पुरा ॥ ३ ॥

स्कन्दः—

साधु पृष्टन्त्वया विप्र तत्ते वक्ष्यामि सांप्रतम् । देवदेवस्य चरितं शृण्वतामघनाशनम्॥ ४॥
स सर्वगोप्यो धर्मात्मा सर्वाकारतया स्थितः । लिंगार्चनं हि सर्वेषां विमुक्तिदमिति द्विजाः

---

१. "वरिवस्या" पूजेत्यर्थः ।

स्वयं करोति भगवानंबिकापतिरीश्वरः। भुक्तिदं मुक्तिदश्चेति सर्वेषां बोधनाय हि ॥ ६ ॥
संसारसागरेमग्नान्तसमुद्धर्तुं महेश्वरः। कार्यं सुरासुरैश्चैवं विष्णुब्रह्ममरुद्गणैः ॥ ७ ॥
देवैर्मुनीन्द्रैर्गणपैर्द्विजैश्चैवाथ शांकरैः। पूजैव परमं श्रेय इति दर्शयितुं शिवः ॥ ८ ॥
स्वयं देव्या महादेवः पूजां लिंगे करोति हि। तल्लिंगपूजनं देव्या शिवेनाकारि तच्छृणु ॥
प्रातस्संगवमध्याह्नप्रदोषेषु मुनीश्वराः। नन्दिकेशादिगणपैः रुद्राणीभिस्सदाशिवः ॥
पूजाप्रकल्पनं शंभोश्शंभुना वरिवस्यया। कैलासेश्वरलिंगस्य पूजनन्तच्छृणुष्व मे ॥
सप्तसागरपात्रोत्थरसधारादिभिश्शिवः। गणानीतैश्च संभारैर्मनसा कल्पनक्षमैः॥ १२॥
पूजया भोगमोक्षौ च सर्वेषाञ्च प्रदर्शितुम्। करोत्यपचितिं शंभुः कैलासेश्वरपूजनम्

जैगीषव्यः—

तत्पूजन प्रकारं मे कथय श्रवणोद्धतः। एभिर्मुनिवरैर्देवैर्गणेन्द्रैश्च विशेषतः ॥ १४ ॥

स्कन्द उवाच—

शृणु त्वं देवदेवेन कैलासेश्वरपूजनम्। यथाकृतं महेशेन शृणुत्वं मुक्तिदायकम्॥ १५॥
श्रवणेनापि भक्तानां सर्वेषां मुक्तिदायकम्। शृणुष्वैकमना विप्र त्वमेभिर्भूसुरैस्सुरैः॥
गणौघैर्नन्दिकेशाद्यैरंबिकापतिपूजनम्। देव्यै देवेन कथितं पृच्छंत्यै शंकरस्स्वयम्॥
तद्वक्ष्यामि समासेन शृणु त्वं पापनाशनम् ॥

स्नात्वा कैलासगंगातटमणिकलिते मण्टपे शंभुरीशो
देव्या नन्दीशमुख्यैर्गणवरसहितो भस्मनोद्धूल्य गात्रम्।
स्थित्वा लिंगालये स्वे मणिगणखचिते स्वासने सन्निविष्ट-
श्शिष्टस्सर्वेष्टदाता समसमसमदो ह्यर्चति प्राज्ञवर्यः ॥ १८ ॥

कृत्वा फालतले त्रिपुण्ड्ररचनां बालेन्दुमौलिस्स्वयं
रुद्राक्षामलहारकण्ठवलयः पञ्चास्यपञ्चाक्षरः।
किञ्चित्किञ्चिदुदञ्चदञ्चलदृगम्भोजावलीमालिकां
वारंवारमिहार्पयत्यगजया जीवज्जयार्थी शिवः ॥ १९ ॥

तत्रेशानवरस्य पञ्चवरदास्यास्यास्यपञ्चानने-
शानस्येश्वरलिंगमद्भुततमं तत्पञ्चवक्त्रेश्वरम्।

तद्वक्त्रामलतो झरीभररसैः पञ्चापगा निस्सृताः
कैलासाचलनिम्नगातटमहालिंगैकसौधालयाः ॥ २० ॥
प्राच्यां रत्नाच्छगंगा शिवतरगभवा देवगंगाकिलास्ते
पश्चात्कैलासगंगा तदपरभुविगा रत्नसोपानयुक्ता ।
तत्रावाच्यां च शुद्धा कमलगणगणैस्संयुतात्युग्रगंगा
तन्मध्ये ब्रह्मगंगा स्फटिकनिभजला पञ्चताः पञ्चतान्ताः ॥ २१ ॥
एता या मणिलिंगपञ्चमुखतस्सन्निस्सृता मण्टपा-
त्पुण्याः पुण्यतरंगशीतलजलाः कूलंकषाख्याः पराः ।
दिव्यापारशिवालयस्थितमहालिंगैकसङ्घाकुला-
स्तीरेषु पृथितोरुमण्टपमणीक्लृप्तैस्सुधाङ्घ्रिगमाः ॥ २२ ॥
नानाबिल्ववनैरपारतरुजैः फुल्लप्रसूनाकुलैः
पक्षीणां च रवैश्च तीरवकुलै रक्ताच्छदेहल्लकैः ।
कोकानाञ्च कुलैस्सुकच्छपमहामीनैर्बकानां कुलै-
स्स्तोकैः पोतकचक्रवाककुररैः पुण्यैश्च सत्सारसैः ॥ २३ ॥
तत्तीरामलमण्टपे मणिमहाक्लृप्ते सुसिंहासने
देव्या नन्दिगणेश्वरैर्हरवरः पश्यन्त्सरिन्निर्झरीः ।
लिङ्गं पञ्चमुखेश्वरं मधुरिमानेत्राञ्चलैश्शङ्कर-
स्तद्वक्त्रामलपङ्कजोद्भवनदीः पुण्यास्तदाहेश्वरः ॥ २४ ॥

ईश्वरः—

प्रालेयाचलमिन्दुकुन्दधवलं गोक्षीरफेनप्रभं
भस्माभ्यंगमनंगदेहदहनज्वालावलीलोचनम् ।
विष्णुब्रह्ममरुद्गणार्चितपदं ऋग्वेदनादोदयं
वन्देऽहं सकलं कलंकरहितं स्थाणोर्मुखं पश्चिमम् ॥ २५ ॥
गौरं कुंकुमपंकिलं सुतिलकं व्यापाण्डुगण्डस्थलं
भ्रूविक्षेपकटाक्षवीक्षणलसत्संस्रस्तकर्णोत्पलम् ।

स्निग्धं बिंबफलाधरं प्रहसितं नीलालकालंकृतं
वन्दे याजुषवेदनादजनकं वक्त्रं हरस्योत्तरम् ॥ २६ ॥
बालार्काग्नितटित्प्रदीप्तकनकप्रस्पर्धितेजोरुणं
गम्भीरध्वनिसामवेदजनकं ताम्राधरं सुन्दरम् ।
अर्धेन्दुद्युतिलोलपिङ्गलजटाभारप्रबद्धोरगं
वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥ २७ ॥
कालाभ्रभ्रमराञ्जनद्युतिनिभं व्यावृत्तपिङ्गेक्षणं
कर्णोद्भासितभोगिमस्तकमणिप्रोद्भिन्नदंष्ट्राङ्कुरम् ।
सर्पप्रोतकपालशुक्तिशकलं व्याकीर्णमाशेखरं
वन्दे दक्षिणमीश्वरस्य वदनं चाथर्वनादोदयम् ॥ २८ ॥
व्यक्ताव्यक्तनिरूपितश्च परमं शुद्धांशसत्वाधिकं
तस्मादुत्तरतत्वमक्षरमिदं ध्येयं सदा योगिभिः ।
ओङ्कारादिसमस्तमन्त्रजनकं सूक्ष्मातिसूक्ष्मं परं
ध्यायेत्पञ्चममीश्वरस्य वदनं खव्यापि तेजोमयम् ॥ २९ ॥
एतानि पञ्चवदनानि महेश्वरस्य ये कीर्तयन्ति मनुजास्सततं प्रभाते ।
गच्छन्ति ते शिवपदं रुचिरैर्विमानैः क्रीडन्ति शंकरगणैस्सततं शिवाग्रे ॥ ३० ॥
इत्युक्त्वा निरगात्ततो सुरसरित्तीरात्तदान्दोलितै-
र्हा[१]रैस्तैर्भुजगेश्वरप्रकलितै रत्नाच्छसत्पादुकः ।
कैलासेश्वरधाम सुन्दरमहानन्दैकसारास्पदं
दृष्ट्वा लिङ्गवरं प्रदोषसमये संपूज्य पूजाभरैः ॥ ३१ ॥
श्रीविश्वेश्वर उग्र उग्रतनुजारातिप्रियश्शंकर-
श्श्रीकण्ठः कलुषाद्रिपक्षदलनस्वाराडसंगश्शिवः ।
प्राहोत्फुल्लसुरक्तपंकजलसद्वक्त्रो भवानीं हरः
पश्येति प्रसभं मदीयमहिमारम्भैकपूजाभरम् ॥ ३२ ॥

१. अयमर्धः अधिकतया वर्तते ।

ईश्वरः—

कुंभैरंभोधराच्छच्छविजितधवलैः पूरितैः क्षीरवार्द्धौ
पर्वौघच्छशिसन्निभैस्स्फटिकजैः कोट्यावर्धीसङ्खचया ।
तत्क्षीरोत्तममण्डसारसुभगैस्सिञ्चामि लिङ्गे मम
कैलासेश्वरनामके जनिजरारोगापहे शङ्करि ॥ ३३ ॥

आनीतं मम तत्पयोंबुधिभवं वीरैर्गणेन्द्रैश्शिवे
सद्वृत्तामलधारया जनिमुमे तुष्टः प्रदोषेष्वहम् ।
कष्टानि प्रसभं हारामि सुकृतां राशिन्दिशामि क्षणा-
त्सिञ्चन्लिङ्गसुपूजकाय गिरिजे तस्मादहं पूजये ॥ ३४ ॥

दद्ध्यम्भोनिधिसम्भवैर्निविडितं तत्खण्डमण्डं दधि
प्रोद्यड्डिण्डिममण्डलाभमगजे दत्वा स्वलिङ्गोत्तमे ।
गोदोहप्रथिते प्रदोषसमये सन्दारिताघौघके
कार्यं पूजनमेतदेव समये सर्वैस्सुरैरप्यहम् ॥ ३५ ॥

तल्लिङ्गं परिपूजयामि वसुधाधृग्धुर्यमौलौ निश-
ञ्चोत्तुङ्गामलरत्नकुम्भविलसत्प्राज्याज्यधारादिभिः ।
स्वाज्याम्भोधिसमाहृतैर्मम गणैस्सङ्खयातिगं तद्धृतं-
तत्राज्यामलगन्धसारसुभगा गन्धीकृतास्तादिशः ॥ ३६ ॥

सिञ्चामि प्रभसं सुगोघृतघनैः कैलासलिङ्गं मम
मध्वंभोधिसमाहृतैर्मणिघटैर्माध्वीकसारं मधु ।
गर्भौघन्मणिसारकान्तिसुभगैर्गोमेदकाच्छप्रभै-
स्सिञ्चाम्यद्रिवरात्मजे सुमधुराधारेयगर्भं मधु ॥ ३७ ॥

धाराकारमदीयलिङ्गशिरसि हर्षेण पश्यांबिके
शैलोद्दामशिखानिभाश्शिखरितादुत्तुङ्गसारोपमाः ।
प्रालेयाचलमौलिसारसुभगाश्चापाण्डुराश्शर्करा
दत्वा तन्मम लिङ्गमौलिविलसच्चन्द्रांशुधारा समम् ॥ ३८ ॥

हर्षाप्लाविहृदन्तरः प्रतिदिनं हृष्यामि पश्याद्रिजे
कुल्यास्तत्र मनोरमाद्रितनये नारेलनीलोद्भवाः ।
ताभिस्संभृतसद्घटादिविततैर्लक्षैः प्रवाहाकुला
तल्लिंगासेकनीरैः प्रवहति मधुजा देवगंगेति नाम्ना ॥ ३९ ॥

सर्वे विष्णुपितामहेन्द्रवरुणाश्चानन्दभक्त्या वृता-
स्तीर्थं तीर्थपरंपरैकफलदं ज्ञात्वानुभूयापि ते ।
सेवन्ते सततं नितान्तमगजे जेतुं पुनस्संसृतिं-
तुंगाघौघतरंगभंगसुभगास्तस्यान्तरास्ते सुराः ॥ ४० ॥

सप्तछदाच्छफलशैलवरोऽद्रिकन्ये क्लृप्तो मया सुगुरुपीततरश्च मेरोः ।
तज्जैस्त्वगाररहितैश्शशिखण्डमौलिलिंगार्चनस्य फलमेव जनुर्भवानि ॥ ४१ ॥

उत्तुंगसालसुरसालरसालसारैर्निष्टप्तहेमझरिसोदरगर्भजातैः ।
तल्लिंगसेचनमुमे सुघटैः करोमि पुंसामपि प्रमथनाथपदं ददाति ॥ ४२ ॥

देवि स्त्रीकुचसन्निकाशलिकुचापारप्रभागन्धज-
स्फारासारमहारसादिकलशैस्संसेचयाम्यंबिके ।
कैलासाचललिङ्गमौलिविलसल्लिंगैकसद्भूपणं
लिंगन्त्वेतदपारगन्धललितैर्नीरैश्च गन्धोदकैः ॥ ४३ ॥

इक्षुसागरमहोर्मिभिरीशे लिंगमौलिरियमेव विशिष्टा ।
सिक्तये घटसहस्रसुधारा कारिता गिरिसुते कमनीया ॥ ४४ ॥

कोशैः काननसंभवैर्मधुझरीसारातिसारस्स्फुटं
निर्यत्पीततरातिकान्तिनिवहैर्गन्धीकृताशामुखैः ।
तत्कोशामलराशिभिर्गिरिसुते सञ्छन्नमैशं शिरः
पश्यामि प्रथितेक्षणः प्रकटिते पुण्ये प्रदोषे मम ॥ ४५ ॥

कस्तूरीघनसारकुङ्कुममहापाटीरसारैर्घटै-
श्चन्द्रासारविलोलितांबुघटितैस्सत्पाटलामोदितैः ।

श्रान्ता मे गणपुंगवाश्च नितरां पुण्ये प्रदोषे मम
स्वादूद्दामलनीलधारितघटोद्वाहे परं शैलजे ॥ ४६ ॥
शङ्खानाञ्च सहस्रकैर्मणिचितैर्गोशृंगधारादिभिः
क्षीराज्यादिमधुप्रवाहजलधिप्लुष्टैश्च तैलैरपि ।
तद्गन्धोत्तमपिष्टलेपनगतश्रीचिक्कणाघर्षणै-
श्श्रीपत्रैर्मृदुसारसूक्ष्मतृणकैरुत्पञ्चगव्यैरपि ॥ ४७ ॥
सौवर्णोत्तमकुम्भसम्भवमहाधारासहस्रैश्शतै-
रर्घ्यैं रत्नसुवर्णकल्पितकुशाग्रांबूद्भवैस्तज्जलैः ।
अष्टाङ्गार्घ्यककल्पितैस्सुमधुरैर्गर्भांबुकुम्भैश्शिवे
संसिच्याखिलमिन्दुकुन्दजमहापाटीरसत्पाटलाः ॥ ४८ ॥
मोदोत्थांबुदसन्निभैश्च कलशैस्तौर्यत्रिकोद्भावनै-
र्धूपैश्चापि महामधूत्थमधुपर्कासारपारैरपि ।
प्रदोषसमये मया शरदुदीचराकाशशि
प्रकाशचयसौहृदैर्विरलकुञ्जलैरन्धसाम् ॥ ४९ ॥
मदीयरजताचलप्रकटशङ्खिभाराशिभि-
स्सुधाकरकलालसल्ललितलिङ्गमौल्यर्पितैः ।
वेदाश्चत्वार एते प्रथिततमयशस्स्तोमधारानुरागा-
स्स्वादूद्दामलनीरसेचनविधौ शाखाशिखाभिः क्रमात् ॥ ५० ॥
रुद्राणां स्तवनेन मामपि शिवे सन्तोषयन्तस्स्थिता
मूर्तास्ते विहिताग्रपङ्कजकरा विश्वासभूता मम ॥ ५१ ॥
घनरसमृगनाभिसारधारामृगमदपटलीपटीरचन्द्रगन्धैः ।
परिवीतं भुजगेशसन्निवीतं प्रभया कोटिशशाङ्कसूर्यतुल्यम् ॥ ५२ ॥
गोत्राधिराजतनये विनयेन पश्य संपश्यदात्मगतिसौख्यदमेकभास्वत् ।
घुमुघुमितसुगन्धगन्धिताशामुखमुखरैः परिलिप्य लिङ्गमेतत् ॥ ५३ ॥
परिहृष्टो नितरां भवामि गौरि त्रिदशालभ्यसुगन्धयक्षकर्दमैः ।

मणिजालाततरत्नकूलचित्रैः परिधायामलस्वर्णसद्दुकूलैः ॥ ५४ ॥

शिवलिङ्गं मम शैलराजकन्ये परिपश्यामि सुगन्धिगन्धवस्त्रैः ।

ब्रह्माण्डगोलकमुमे प्रभया न तुल्यं मल्लिङ्गगोलकवरोत्तमरत्नधारा ॥ ५५ ॥

सावधूतशशिमौलिकलाललामन्तद्रत्नमौल्यकलने न विधिर्न विष्णुः ।

यक्षाधिपोऽप्यगसुतेऽद्य विकुण्ठिताक्षः केऽन्ये क्षमा वद समानहृदा निरीक्ष्य ॥

यद्दर्शनेन समदुःखविरामणं स्याद्यद्रत्नवर्यनिचयैर्मुकुटातिशोभम् ।

पूरिताखिलजनाजनिकामं वामदेवमिह पश्य सुकामम् ॥ ५७ ॥

फणामणि सहस्रकैर्विधृतवक्त्रमुक्ताफलैः

प्रभाततसभावली मणिगणात्तकान्त्या युतम् ।

त्रिपुण्ड्रनिटिलोल्लसत्तिलकिताच्छसद्धीरकं

प्रपश्य गिरिकन्यके विमलमौलिलिङ्गं मम ॥ ५८ ॥

सहस्रमुखसत्फणिप्रवरमौलिमाणिक्यस-

द्द्युतीविजितकान्तितो मम स्वभोगसंवेष्टितैः ।

फणाछविकृतांवरछविजिताग्रसच्छत्रकं

शिवे शिरसि मे सदा दधति लिंगमौलौ मम ॥ ५९ ॥

विश्वेश्वराख्यवरलिंगसमानमानमानन्दसौख्यदमिदं मम सुप्रियेयत् ।

हन्तुं समग्रजनपातकराशिमेव सर्वार्थराशिदमिदं परिपूजयामि ॥ ६० ॥

नानामणिद्युतिसरावलिभूषितन्तन्मल्लिंगमेव कमलाच्छदृशा प्रपश्य ।

पुण्ये प्रदोषसमये मुदितस्त्वयाऽहं तल्लिंगमध्यभवने महिमास्थितोऽहम् ॥

विकसितसितपद्मरत्नकंजमालानवनीलोत्पलजैस्सहस्रमालिकाभिः ।

मधुवन्धुरगन्धदिव्यगन्धैस्सितमन्दारजरक्तमालिकाभिः ॥ ६२ ॥

दिनान्तसमयोल्लसन्मधुरगन्धजातीसरै-

र्वसन्तकलिकास्फुरन्मधुरगन्धमल्लीसरैः ।

विकुण्ठितमिदं मम प्रकटसोमधामप्रभा-

समुत्थमगकन्यके विमलद्रोणमालायुतम् ॥ ६३ ॥

कदंबवननीपजस्फुरदपारमालाभरै-
विलोलवरपीठगं प्रकटमौलिलिंगं शिवे ।
प्रपश्य नयनांचलैर्विकचमञ्जरीकप्रभैः
प्रदोषसमयेऽम्बिके नयनजन्मनस्तत्फलम् ॥ ६४ ॥
तद्बिल्वरत्नकमलैरमलैर्भवानि पुन्नागनागनवचंपकदूर्वयापि ।
नीलोत्पलैर्दमनकैः करवीरजातिद्रोणार्ककाशजवकैः कनकैस्समर्च्य ॥ ६५ ॥
सत्पुण्डरीकवकुलैर्धवकर्णिकारमालूरकुन्दकुसुमैरतिहर्षतोऽहम् ।
राजीवामलमल्लिकासुमसरस्फारोत्थगन्धान्धकै-
र्लोलंबैर्विकसत्सुमोत्थमधुपैः पश्यांबिके पूजितम् ।
एतल्लिंगवरं प्रदोषसमये बिल्वीदलोत्तंसकं
धुत्तूरेण हि शोभतेऽद्य नितरां मौलिस्थचन्द्राधिकम् ॥ ६६ ॥
अगरुतरुजातधूपधूमैर्बहुलामोदविकासिदिक्समूहैः ।
मरुदाकुललंबितोरुधाराविकसत्स्वर्गपथाः प्रचारजालैः ॥ ६७ ॥
सुवर्णमणिभाजने शिशुनभोग्रदम्भोजिनी-
प्रियांशुचयसंक्रमिप्रकटदाक्ष्यरत्नांशुभिः ।
मनोरथपथातिगैर्मम सुलिंगमालायितै-
स्सुपाण्डरशशिप्रभैर्हिमतुषारकुन्दप्रभैः ॥ ६८ ॥
सुचन्द्रवरखण्डकैर्विरचितोरुदीपावली-
सुगोघृतसुवर्तिकोज्वलसुदीपजालैरपि ।
गृहाङ्कणतमस्ततिप्रविददारदत्यादरै-
रखण्डतरमण्डनैः प्रथितपद्महंसोपमैः ॥ ६९ ॥
सुतारकगणावलीललितमुक्तजालप्रभै-
र्विलोकय गिरीन्द्रजे मम सुमौलिभासंकरैः ।
नानाभक्ष्यमहाद्रिगन्धसुरसाश्चामोदितास्तादिश-
स्सुस्वाद्वन्नजराशिभिश्च घृतजैस्सूपप्रवाहैश्शिवे ॥ ७० ॥

शाकैश्शैलनिभैर्मधुप्रमथितैः क्षीरादिदध्योदनैः
प्रालेयाचलसन्निभैस्सुगुडकैर्नैवेदितैश्शङ्करि ।
नारिकेललिकुचैस्सुकपित्थैर्मातुलिंगकदलीसुरसालैः ॥ ७१ ॥
खर्जूरैर्वदरीसुगन्धजरसैर्दाडिंवनारंगकैः
कंकोलामलकैस्सुरादनफलै राजादनैर्जातिकैः ।
नैवेद्येक्षुजकाण्डकैर्गिरिवराज्जाते मुदे मे भवे-
त्तांबूलैः खदिरैर्लवंगमुखरैर्जातीफलैलायुतैः ॥ ७२ ॥
मुक्ताचूर्णसुपूर्णपूगमधुरैः कर्पूरसंवासितै-
रुत्फुल्लामलनागवल्लिजदलैः प्रोद्यद्गिरीन्द्रप्रभैः ।
नैवेद्यं परिकल्पयामि गिरिजे तस्मिन्प्रदोषे ह्यहं
वीणानिक्वणमंजुमंजुलसुधाधारासमैर्गायनैः ॥ ७३ ॥
मन्नामामृतमीश्वरेश्वरि मुदा रुद्राणिभिः कल्पितं
शम्भो शंकर धूर्जटे त्रिणयन कालान्धकारे हर ।
पाहीश प्रमथाधिनाथ महिमन्लिंगाकृते पाहिनो
रत्नैः कल्पितमद्दलध्वनियुतैश्शंखोत्थनादैश्शिवे ॥ ७४ ॥
प्रोद्यत्काहलनिस्वनैर्मधुरितं तन्मड्डुडिण्डीरवैः ॥ ॥ ७५ ॥
दुन्दुभ्याघातनादैर्मम गणवरगास्योरुनिश्वासरागै-
र्वेणूरन्ध्रनिषेवणाङ्गुलिभवैस्तालैश्च सज्झल्लरैः ।
तुष्टोऽहं प्रथिते प्रदोषसमये तल्लिंगसेकादरो
नान्यत्किञ्चिदवेदिषं त्रिजगतां व्यापारमप्यद्रिजे ॥ ७६ ॥
रंगे तुंगतरंगभंगचपलैर्नृत्यैर्महामद्दलै-
र्वीणावेणुनिनादसाम्यलयतो नृत्यन्ति लिंगाग्रतः ।
रुद्राणीगणकोटयोऽत्र सुभगे मञ्जीरशिञ्जस्वनै-
श्शम्भो शंकर सांव पाहि शिव नस्तूर्णं प्रसादङ्कुरु ॥ ७७ ॥

इत्येवं सुभगा विलासमधुरा हावैश्च भावैरपि
चोत्क्रान्तावृतरत्नकान्तिविलसत्पूर्णेन्दुसाम्याननाः।
कुम्भोद्यत्करिकुम्भसन्निभकुचाः काञ्चीझणन्निस्वना-
स्तालोत्थाहतिपादपद्मजरवैः कुर्वन्ति विद्युद्ध्वनिम् ॥ ७८ ॥

गणेशकरभास्वता विविधलोकसाम्राज्यधु-
ग्विविक्तकृतलाञ्छनैश्शशिसुवृत्तमुक्ताततैः ।
महोडुगणमौक्तिकप्रकटतारपंक्तीततै-
र्गिरीन्द्रतनये धृतान्यमितछत्रकोट्यो गणैः ॥ ७९ ॥

परटारमणोत्थकामिताङ्गोत्थितपक्षाहननाभचामरौघैः ।
गणवृन्दैरखिलैश्च सेव्यमानं मम लिङ्गालयधूननैश्शिवेऽद्य ॥ ८० ॥

प्रवालमयदण्डिना मलयशैलभूमारुत-
सुपोततरवायुना नगवरारिपाणीजुषा ।
जयेन चमरीमृगप्रचलवालगुच्छात्मना
सुखी जितमुमे तदा मम सुलिंगमत्यादरात् ॥ ८१ ॥

धृतैः प्रमदपाणिभिर्वनकलापिपुच्छोच्चयैः
कृतैर्व्यजनकोटिभिर्हरितचन्द्रकोट्यंशुभिः ।
मदीयमणिमण्टपं हरिमणीभिराकल्पित-
मिवाद्य गिरिजे तदा प्रथितभाभिरादीपितम् ॥ ८२ ॥

प्रमथप्रकरोर्ध्वहस्तसंस्थैर्मणिवर्यैर्विविधैस्सराग्रलम्बैः ।
विलसन्नवरत्नगुच्छसच्छैर्ध्रुवदीशानवराग्रगाः पताकाः ॥ ८३ ॥

लिंगप्रक्रमणैरहं स इति तल्लिंगप्रणामादर-
स्स्वात्मानं परिचिन्तयामि गिरिजेऽप्यानन्दधारावृतः ।
प्रत्युत्थाखिललोकजालमखिलं मत्तो न भिन्नं क्वचि-
त्किञ्चिचापि शिवे ममैव मनसस्सङ्कल्पजालं जगत् ॥ ८४ ॥

मय्येवागसुते लयं प्रयाति निखिलञ्चैकोऽद्वयोऽहं सदा
नानेति प्रसभं वदन्ति निगमा वाचां मनोदूरगम् ।
अन्यानन्द सममम्मदीयममलं जानन्ति नो योगिनो
नो वेदा यतयस्सुरासुरगणा विष्णादयोऽप्यब्जजाः ॥ ८५ ॥
ज्ञानं ज्ञेयमिदं जगद्गतमुमे ज्ञाता न किञ्चित्स्थिति-
र्भूमाहं सुखधामको हि महतां ह्रस्वो न चाणुस्स्थिरः ।
स्वात्मानन्दमुमे ममाल्पकमिदं लिंगेऽप्यलिंगोऽस्म्यहं
चाकाशादिविदूरगस्थितिलयोत्पत्तिष्वसंगोऽस्म्यहम् ॥ ८६ ॥
इत्येवं परमार्थतस्त्रिभुवने तिष्ठामि विश्वातिगो
गोप्यम्मद्धृदयं गिरीन्द्रतनये तुभ्यम्मया दर्शितम् ।
इत्युक्त्वा परमेश्वरस्त्रिजगतां नाथोऽपि विश्वाकृति-
र्दृष्ट्वा लिंगमपारविल्वकुसुमैस्संपूजितं मस्तके ॥ ८७ ॥
दृष्ट्वा तामगजां ननर्तपरमानन्दप्रसादैकभूः
कैलासाचलमौलिमण्टपवरे तल्लिंगसान्निध्यके ।
अण्डखण्डनमहाघनघोषश्चण्डताण्डवलसद्विधिमुण्डः ।
कुण्डलीशकृतकुण्डलगण्डस्तण्डुमड्डुनिनदोत्थलयांघ्रिः ॥ ८८ ॥
नन्दिभृंगिकृतडिण्डिमनादैर्मण्डितो हि शिवया स हि रंगः ।
डुण्डिराजकृतशङ्खनिनादैस्तुण्डषट्ककृततूर्यनिनादैः ॥ ८९ ॥
जटाच्छटविघर्षिताः परिपतन्ति तारागणा
वमन्ति रुधिरम्मुखैर्भुवननागनागा नगाः ।
जगन्नटनसंभ्रमाद्भवति हेलयान्दोलितं
हरीन्द्रविधयस्सुरा मुनिजनास्सकम्पांगकाः ॥ ९० ॥
अष्टावक्त्रसुगीतसाममुरजोच्चण्डप्रचण्डोल्लस-
ड्डिण्डीमध्वनिमड्डुमद्दलमहासामाष्टदंष्ट्रारवैः ।

---

१. अन्यानन्दसुमे इति पाठः ।

भ्राजत्पन्नजमुण्डषण्डजमहामालालसद्वक्षसं
लीलाचालितहस्तकंकणमहानागोर्ध्वमौलीलसत् ॥ ९१ ॥
रत्नाप्लावितकान्तिरंजितदृशं नृत्यन्तमैक्षच्छिवा
चोद्यद्भानुमरीचिसन्निभजटासाम्राज्यपट्टायिता ।
लोलन्नीलसुरत्नपंकजलसद्गंगातरंगोत्थिता
पारावारसुधाघनोत्थनटनाटोपा फणीमंजुलम् ॥ ९२ ॥
आनम्राखिललोकजालमुमया सद्रत्नरंगान्तरे
नृत्यन्तं ददृशुस्सरुद्रगणपाः कैलासमौलिस्थितम् ।
झलंझलितकंकणं पदवलत्क्वणन्नूपुरं
किणीकिणितसध्वनिं स्फटिकरत्नसन्मेखलम् ॥ ९३ ॥
घुणंघुणकृतारवं पदगरत्नमञ्जीरकं
चटच्चटरवोत्थितपूपदपद्मघोषं शिवम् ॥ ९४ ॥
तौर्यत्रिकोत्थितमहारवजातघोषलोकत्रयोद्गतसुरासुरकिन्नरेड्यम् ।
मन्दस्मिताखिलविमोहनवेषभूषं राजच्छशांकमहसा धवलीकृताशम् ॥ ९५ ॥
तं नीललोहितमुमा जगदादिहेतुं नृत्यन्तमिष्टदमुपैति च तुष्टचेक्रम्[1] ।
अष्टाकृतिं निखिलकष्टहरं प्रदोषेऽपश्यच्छिवा सकरुणारससारदृष्ट्या ॥ ९६ ॥
तां वीक्ष्यागसुतां स्मयन्निव महादेवस्सकैलासभू-
कैलासेश्वरपूजया सरसया कष्टानि सञ्जह्रिवान् ।
लोकानां गणपात्मनामथ उमां प्राह प्रसन्नाननः
पश्याम्बेति वदन्त्सदाशिवतरोर्मुग्धेन्दुचूडश्शिवः ॥ ९७ ॥

ईश्वर उवाच—

कैलासेश्वरलिंगमेतदमलं मुक्तिप्रदं शाश्वत-
श्चापातालनिमग्नमूलमसकृत्सम्पूजितं तन्मया ।

---

१. वक्रमिति पाठान्तरम् ।

तस्योर्ध्वामलमौलिरप्यगसुते जानन्ति नैवागमा
देवाद्यैर्मुनिभिस्त्वयापि च मया को वास्ति तत्पूजकः ॥ ९८ ॥
पूजापूजकपूज्यशब्दरहितं तत्केवलोऽहं शिव-
स्तल्लिंगं वरदं सदाशिवमयं मच्छैलराजे शिवे।
तद्दर्शनार्थं मुनयस्सुरासुरास्तप्यन्ति चाद्यापि जगत्यविप्लवाः ॥ ९९ ॥

देव्युवाच—

त्वयापि न ज्ञायत इत्यहो मे साश्चर्यमुक्तं हि त्वया सदाशिव।
तवापि तत्किं कृतलिंगपूजया रहस्यमेतन्मम तद्वद प्रभो ॥ १०० ॥
इत्युक्तं गिरिजामनोहरवचश्श्रुत्वा प्रहस्याम्बिकां
लोकं स्रष्टुमथात्ति पाति सुतरान्तत्पालकश्शङ्करः।
वाचा चन्दनशीतया सुखकरश्शीतांशुधारी शिवः
प्राहोत्फुल्लमनोहराब्जवदनो देवीं तदा भूतपः ॥ १०१ ॥

ईश्वर उवाच—

नकर्मणा नैव समाधिभिर्जपैस्तपस्यया वा विविधैश्च यज्ञैः।
व्रतैश्च दानैर्नियमैर्ममेश्वरि प्राप्नोति किम्मत्पदपूजनं विना ॥ १०२ ॥
तस्मादहं लिंगवरं सदा मुदा सम्पूजयामीष्टदमेव लोकान्।
संशिक्षितुं कार्यमिदं विमुक्त्यै सर्वार्थदश्चेति मतम्मुदे मम ॥ १०३ ॥
ध्यायामि तद्वेदशिरोऽधिगम्यमोङ्कारगम्यं परमार्थतत्वम्।
सत्यं शिवं ज्ञानसुखं सुबोधन्निर्द्वन्द्वमद्वैतमनन्तरूपम् ॥ १०४ ॥
एकं स्थिरं शाश्वतमव्ययं तत्प्राक्सृष्टितो विश्वमिदन्न यत्र।
संवीक्षितं तत्पुनरुद्बभूव तदेव जाये हृदि भावयामि ॥ १०५ ॥
यस्मात्परन्नापरमस्ति किञ्चिद्यस्माद्वरीयो न हि किञ्चिदस्ति।

१. तथापि तल्लिंगवरं सदाशिवञ्चकास्तिमच्छैलवरे सदांविके। इति पुस्तकान्तरे पाठो वर्तते. तथा चेत् "पूजापूजक पूज्यशब्द रहितन्तत्केवलोऽहं शिवे" इति पादोऽसंपूर्णोभवेत्।
२. हराजविष्णवः इति पाठः।   ३. यस्मादणीयः इति पाठः।

येनैव पूर्णं परिदृश्यमानं विश्वन्तदेवाद्य विभावयामि ॥ १०६ ॥

इत्युक्त्वा गिरिजां महाशिवतरो ध्यायन्भवस्स्थाणव-
न्निर्व्यापारतरंगसागर इवाप्यक्षुब्धगात्रश्शिवः ।
देवी चापि मुमोद हर्षभरितानन्दांगकास्ते गणा-
श्चेत्थं तस्य सुपूजनं मुनिवरास्सत्यं वदामि स्फुटम् ॥ १०७ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासेश्वरप्रदोषपूजावर्णनन्नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## कैलासप्राकारवर्णनन्नाम चतुर्दशोऽध्यायः.

मुनिदेवगणा ऊचुः—

कुमारमारसङ्काश मारमारांगसम्भव । उमारमणपादाब्जध्यानमारित पातक ॥ १ ॥
अमरारिमहाशूर तारकासुरसंहृते । त्वत्तश्श्रुतमशेषेण कैलासेश्वरपूजनम् ॥ २ ॥
भवद्वक्त्रोत्थितशिवकथानन्दितमानसाः । निर्धूतपातका जाता धन्याः पावनपावनाः॥
पुनश्शिवकथासिन्धुतरंगोद्यतमानसान् । कुरुष्व त्रिपुराराातिवरपुत्रातुलप्रभ ॥ ४ ॥

सूत उवाच—

इत्थं देवैश्च मुनिभिर्गणेन्द्रैः प्रार्थितस्तदा। कुमारः प्राह तान्धन्याञ्जैगीषव्यं पुरस्स्थितम्
परिणतहिमधामकान्तवक्त्रो विकचसुतामरलोचनो नगारिः ।
नवचंपककुड्मलाभनासः कुरुविन्दाभरदो बभाण विप्रम् ॥ ६ ॥

स्कन्द उवाच—

पर्णादा मुनयस्सर्वे चापर्णापतिवैभवम् । तूर्णमभ्यर्णगास्सर्वे समाकर्णयताधुना॥७॥
सुपर्णवाहनाद्याश्च यूयं कर्णरसायनम् । अर्णवान्तर्निवसतेश्चरितं वर्णयाम्यहम्॥ ८॥
महाकैलासभूभागे पंचकोटिप्रमाणके । शैलप्राकारमध्ये तु गणानां वसतिः कृता॥
नवलक्षप्रमाणेन पूर्वद्वारादिगोपुरम् । नीलशैलजसारेण नानारुद्रगणान्वितम्॥१०॥
पट्टिकापिण्डिकाद्यैश्च देवकोटया सुशोभितम्।महद्भिरुच्छ्रितैश्शृंगैरुल्लिखन्तमिवाम्बरम्

---

१. श्रुत्वा महामुक्तिमप्यन्ते प्राप्य तपएवनात्रविषयः इत्यधिकतया क्वचित्कोशे दृश्यते ।

दशसाहस्रफलकैर्गवाक्षितमिवस्थितम् । वृषभैश्च शिलाराजन्द्वद्ररूपैः परीवृतम्।।१२।।
नन्दीश्वरालयं तत्र हेमरौप्यविराजितम् । नानासौधतलोपेत वनवाटीविराजितम् ।।
सहस्रस्तम्भसंयुक्तं पताकोज्वलकुम्भकम्। कक्ष्यागवाक्षविततं सिंहासनवरान्वितम्।।
तत्रस्थनन्दिकेशानं स्वर्णवेत्रलसत्करम् । नवरत्नप्रभाभास्वत्किरीटकसुशोभितम् ।।
सोमधामसमानास्यं राजद्बालेन्दुशेखरम् । चतुर्भुजमुदारांगं त्रिपुण्ड्रोज्वलफालकम्।।
भस्माभ्यक्तंजटाशोभिमस्तकंरक्तकुण्डलम् । मुक्तान्तरितरुद्राक्षमालाशतविराजितम्
सुयशापतिमाशास्यध्यानपूतहृदन्तरम्। गणेन्द्रैश्च मुनीन्द्रैश्च सुरेन्द्रैर्नारदादिभिः ।।
गन्धर्वाप्सरसां सङ्घैः रुद्रैर्नागैश्च सिद्धकैः। उपासितं महात्मानमिन्द्रेण मरुतो यथा।।
सेवितं नन्दिकेशानं प्रमथैः परिवारितम् । तत्रालयं महेशस्य नवरत्नविचित्रितम् ।।
हेमप्राकारसम्पन्नं नानावृषभशोभितम्। गर्भागारं तत्र शम्भोस्स्फटिकोपलनिर्मितम् ।।
नन्दीश्वराभिधं लिंगं तत्रास्त्येकं मनोहरम्। दर्शनात्स्पर्शनाच्चापि पापसङ्घनिबर्हणम्।।
धूपैर्दीपोपहाराद्यैर्भक्ष्यैर्भोज्यैश्च नित्यशः। कमलामलमालाभिर्नीलोत्पलसहस्रकैः ।।
विल्वचम्पकपुन्नागवकधुर्तूरपाटलैः। सहस्रविल्वपत्रैश्च पञ्चामृतनिषेचनैः।। २४ ।।
साम्राण्यगरुधूपैश्च दीपैः कर्पूरखण्डजैः। पूजयन्तं महेशानं नन्दिकेशं शिलादजम् ।।
स्तोत्रैस्स्तुवन्तमीशानं त्रिकालं सावधानतः।तत्स्तुतिं कथयाम्यद्य तन्मुने शृणु सादरम्

नन्दिकेश्वर उवाच—

इन्दुखण्डललितामलमौले कुन्दकान्तिसदृशोत्तमदेह ।
इन्दिरारमणलोचनपूज्य मन्मनोगहनपंकजवास ।। २७ ।।

स्कन्द उवाच—

इत्थं स्तुवन्तन्तल्लिंगं प्राक्प्राकारस्य सौधगः। संस्थितस्सुयशानाथो गणकोटिपरीवृतः
निषधो हेमकूटश्च प्राक्प्राकारस्य पर्वताः। पञ्चलक्षप्रमाणेन तत्रैवाग्नेयगोपुरम् ।। २९ ।।
रुद्रावतारचरितैर्वृषभैश्शिखरैर्वृतम् । तत्रालयं महेशस्य गणेन्द्रस्य महात्मनः ।। ३० ।।
लिंगाकारं तत्र शम्भुस्सुकेशेश्वरसंज्ञकः। पूजितो गणपेन्द्रेण गणलक्षपरीवृतः।। ३१।।
सुकेशेन स्तुतं लिंगं सुकेशेश्वरसंज्ञितम्। पूजितञ्च त्रिलोकेषु विल्वपत्रैस्सुमैस्तथा ।।

सुकेशः—

पञ्चकोशगगनातिग शम्भो व्योमकेश गुणसारसहंस ।

काशिकापुरनिवास महेश पाहि शंकर सुकेशमहेश ॥ ३३ ॥

नीलश्च मन्दरश्चैव प्राकारे दक्षिणे नगाः । तत्रापि गोपुरं शम्भोर्नानारुद्रगणावृतम् ॥
दशलक्षप्रमाणेन चोच्छ्रितं गगनातिगम् । उल्लिखन्तं देवमार्गं सहस्रतलसंयुतम् ॥
रुद्रावतारक्रीडाभिर्दृप्तस्तंभैश्च शोभितम् । चण्डीश्वरालयं तत्र तप्तहेमविभूषितम्॥ ३६ ॥
सहस्रस्तंभसंयुक्तं मुक्तावितततोरणम् । नीलसन्मणिकुम्भश्च कक्ष्याशतविराजितम् ॥
सोपानै रत्नसञ्छन्नैरुपेतं वनभूषितम् । तत्र सिंहासनासीनं विद्युत्पिंगजटाधरम् ॥
पर्वशर्वरिनाथार्धधरं भस्मविभूषितम् । त्रिपुण्ड्रविलसत्फालं रुद्राक्षाभरणान्वितम् ॥
महार्हवसनोपेतं नानारत्नपरिष्कृतम् । निमीलिताक्षं ध्यायन्तं दिव्यं शम्भोः पदांबुजम्
किंपूरुषैस्सिद्धसाध्यैर्मुनिबृन्दैर्यमेन च । गणेन्द्रैस्सेवितपदं रुद्रसङ्घैर्निषेवितम्॥ ४१॥
तत्रेश्वरस्य सदनं मदनान्तकरस्य च । प्राकारगोपुरोपेतं नवरत्नप्रकल्पितम् ॥ ४२ ॥
चण्डिकेशेश्वरं लिंगंचण्डपापप्रणाशनम् । तल्लिंगज्योतिषा सर्वे द्योदितास्सूर्यसोमकाः॥
तल्लिंगं पूजयत्येष चण्डिकेशस्त्रिकालतः । बिल्वैर्मन्दारकुसुमैर्मल्लिकाकरवीरकैः ॥
कर्णिकारैरपामार्गैर्मालतीभिश्च शङ्करम् । धूपदीपोपहाराद्यैर्नर्तनैः करतालकैः॥ ४५॥
स्तोत्रैस्स्तौति महादेवं प्राञ्जलिश्चण्डिकेश्वरः ॥ ४६ ॥

चण्डिकेश्वरः—

चण्डीश खण्डपरशो शशिखण्डचूड ब्रह्माण्डमौलिग धराधरकार्मुकेश ।

विध्युत्थमुण्डवरमालक कुण्डलीश चोच्चण्डताण्डव महेश्वर शूलदण्ड ॥ ४७॥

श्री स्कन्द उवाच—

इत्थं विधाय स्तुतिमादरेण चण्डीश्वरस्त्रिजगतां पतिमिन्दुमौळिम् ।

नत्वा महेश्वरपदाम्बुरुहं सदैव ध्यायन्त्सदैव हृदयाब्जसुखं विधत्ते॥ ४८ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासप्राकारवर्णनन्नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

---

१. सौधापारलसच्छृंगैरुपेतनवभूषितं इति पाठान्तरम् ।

शैलप्राकारवर्णनन्नाम पञ्चदशोऽध्यायः.

स्कन्द उवाच—

नैर्ऋते गोपुरं शम्भोः पञ्चलक्षप्रमाणकम् । रुद्राणाञ्चरितैश्चैव शोभितं शिखरैरपि ॥
वाणस्तत्र महादेवमुपास्ते गणलक्षकैः । नवरत्नसरोभूषो महाप्रासादमध्यगः ॥ २ ॥
तदालयं रत्नकॢप्तं सहस्रस्तम्भमण्डितम् । तत्र वाणेश्वरागारं तेन लिंगं समर्च्चितम् ॥
मण्टपैर्गोपुरैर्युक्तं त्रिकालं विल्वपल्लवैः ॥

वाण उवाच—

वाणेश शम्भो हरिवाणपाणे त्वं पाहि गंगाधर चन्द्रचूड ।
विश्वेश भर्ग मदनान्तक कालकाल मामद्य शंकर विभो गणनाथपूज्य॥ ४ ॥
भद्राणि मे संविधत्स्वाद्य शम्भो दीक्षादिदक्षाध्वरध्वंसकाव ।
महेशान पञ्चाननेन्दुप्रकृष्टैकधाम प्रभो संप्रसीद प्रसीद प्रसीद ॥ ५ ॥

स्कन्द उवाच—

इत्थं स्तौति गणेन्द्रोऽसौ वाणो वाणेश्वरं शिवम् । नैर्ऋते गोपुरे तत्र प्रासादवरमध्यगः
अस्ताद्रिः पारियात्रश्च पश्चात्प्राकारसन्नगाः । तत्रैव गोपुरं शम्भोर्दशलक्षैकयोजनम् ॥
पट्टिकादेवगोष्ठैश्च स्तम्भैः कुम्भैश्च कोणजैः । रुद्रावतारक्रीडाभी रचितं वृषभैर्वृतम् ॥
तलानाञ्च सहस्रेण निर्मितश्चित्रवेदिकम् । सुवर्णरत्नकलशैः कैलासादतिसुन्दरम्॥९॥
तत्रास्ति सौधप्रवरं सहस्रस्तम्भमण्डितम् । मणिमाणिक्यखचितं दिव्यसिंहासनैर्वृतम्
धूपदीपादिबहुलं भक्ष्यभोज्यसमन्वितम् । तत्र भृंगी महातेजा भस्मोद्धूलितविग्रहः ॥
त्रिपुण्ड्रविलसत्फालो मणिमाणिक्यकंकणः । चन्द्रार्धशेखराबद्धराजत्पिंगजटाधरः ॥
सिंहासनस्थो वरदो गन्धर्वैर्गणपैर्वृतः । वरुणादिसुदिक्पालैर्गरुडैरप्सरोगणैः ॥१३॥
सेवितो रत्नसौधस्थो दशलक्षगणैर्वृतः । वासुकिश्शङ्खपालश्च कम्बलाश्वतरौ तथा ॥
शेषश्च तक्षकश्चैव दैत्यनाथा नृपास्तथा । उपासते भृंगिरिटिश्शिवध्यानहताशुभः ॥
तत्रास्ति गर्भभवनं प्राकारवरगोपुरम् । भृंगीश्वराख्यं तल्लिंगं संपूज्य स्तौति भक्तितः ॥
पञ्चामृतैः फलरसैः पञ्चगव्योदकैरपि । चन्दनैः पुष्पमालाभिर्बिल्वमन्दारचम्पकैः॥
धूपैर्दीपैस्तथापुष्पैर्नैवेद्यैर्मुखवासजैः ॥ १८ ॥

भृंगी उवाच—

भृंगीश मे मनसिजस्तवपादपद्मभृंगो भवत्वनुदिनं सरसानुमोदः ।
प्राप्नोतु भक्तिमखिलां तव पादपद्मे माया तु यातु दुरितं चरितन्तवेश ॥
श्रीशंकरामयहरेश्वर विश्वमूर्ते विश्वाधिकेश करसंगिकुरंगबाल[1] ।
मन्दारकुन्दनवचम्पकबिल्वमालादिव्योत्तमांगदभुजंग सुरेश पाहि ॥ २० ॥

स्कन्द उवाच—

इत्थं स्तौति सदाकालं शंकरं लोकशंकरम् । गणानां शतलक्षैश्च स्वसमानैः परीवृतः ॥
वायव्ये गोपुरं शम्भोः पञ्चलक्षप्रमाणतः । रुद्रावतारक्रीडाभिरन्वितम्मणिवेदिकैः ॥
रत्नकुम्भशताकीर्णं वायुधूतपताकम् । वृषभालंकृतं दिव्यं तत्र सौधं महात्मनः॥ २३ ॥
सहस्रस्तम्भसंयुक्तं हेमासनसमाश्रितम् । रिटिरास्ते शिवध्यानविधूताखिलहृत्तमः[2] ॥
भस्माभ्यक्तत्रिपुण्ड्रांको रत्नाकल्पविभूषितः । सोमार्धशेखरोद्भासिमुकुटो वायुसेवितः
द्विलक्षगणपैश्चैव रुद्रवृन्दैर्निषेवितः । तत्र गर्भगृहं शम्भो रिटीशाख्यमहेशितुः ॥२६॥
प्राकारगोपुरोपेतं धूपैर्दीपैर्मनोहरैः । जातीमल्लिकमन्दारबिल्वैरभ्यर्च्य शंकरम्॥२७॥
कृताञ्जलिपुटस्स्तौतिरिटीशंभक्तिभावितः । समुद्यत्पुलको देवं त्रिकालं लिंगसंस्थितम्

रिटिरुवाच—

विश्वेश विश्व मदनान्तक विश्वमूर्ते गौरीवरामरभुजंगफणाभिराम ।
गंगाधरान्तकरिपो प्रमथाधिनाथ पाहीश मामकधियात्र ललामसोम ॥२९॥

स्कन्द उवाच—

इत्थंस्तौतिरिटिर्भक्त्यारिटीशंमुदितान्तरः । ततोत्तरे च प्राकारे संस्थिताश्चकुलाचलाः
दुन्दुभिर्मन्दरो नाम्ना पर्वतो रैवतस्ततः । तत्रापि गोपुरं शम्भोर्दशलक्षोर्ध्वगं स्थितम्
सहस्रतलसंयुक्तं पट्टिकावेदिकान्वितम् । रत्नशृंगाग्रविलसद्धूयमानपताककम् ॥ ३२ ॥
रुद्रावतारक्रीडाभिरन्वितं वृषभैरपि । तत्रास्ति सौधप्रवरं माणिक्यतलकुट्टिमम् ॥
सहस्रकनकस्तम्भैर्निर्मितं वनराजितम् । हेमसिंहासनैर्युक्तं धूपगन्धानुमोदितम् ॥
मणिप्रभाभासितञ्च तिरस्कृतनभोङ्गणम् । कालाग्निरुद्रस्तत्रास्ते यक्षेशैश्च निषेवितः॥

१. करटंककुरंगवाल इति पाठः । २. तमोगुणमिति पाठान्तरम् ।

भस्मरुद्राक्षवीताङ्गो मुक्तामाणिक्यभूषणः। मुकुटोद्यत्सुधाधामखण्डोज्ज्वलितवक्त्रकः
त्रिपुण्ड्ररेखावितत्फालभागमनोहरः। त्रिशूलपाणिर्वरदो हेमसिंहासनस्थितः ॥
कुबेरेण च देवैश्च पञ्चलक्षगणैरपि। हेतिपाशमहाशूलधरैस्तैरहिमन्युभिः ॥ ३८ ॥
तत्रागारं महेशस्य कालरुद्रेश्वरस्य च। प्राकारगोपुरयुतं धूपदीपशताद्दलम् ॥ ३९ ॥
नैवेद्यैश्चन्दनैश्चैव विल्वमन्दारपङ्कजैः। सम्पूज्य परया भक्त्या स्तौति देवं पिनाकिनम्

कालाग्निरुद्र उवाच—

त्रियम्बक सदाशिव त्रिपुरमारकालान्तक
त्रिशूलवरपाशसंयुतकराद्रिवाणासन।[1]
प्रसादजनितानन प्रकटचण्डधामागम
सुधांशुकशिखण्डक सुरसनाथ मां पालय ॥ ४१ ॥

इतिस्तौतिप्रहृष्टात्माकालरुद्रोमहेश्वरम्। तस्यप्राकारकोणेचाप्यैशान्यां दिशिसंस्थितः॥
वीरभद्रस्सदैवास्ते गणलक्षैः परीवृतः। तदुत्तरं हि कैलासं तत्र गोपुरमुत्तमम् ॥
पञ्चलक्षप्रमाणेन वेदिकापट्टिकान्वितम्। सुवर्णरत्नखचितं कलशैश्शोभितं मुने ॥
रुद्रावतारवृषभैश्शोभितं तन्मनोहरम्। तत्र सौधवरे क्लृप्ते सहस्रस्तम्भमण्टपे॥ ४४ ॥
हेमरत्नचिते दिव्यहेमसिंहासनस्थितः। ईशानेन च रुद्रैश्च गणलक्षसमन्वितः ॥
भस्मोद्धूळितसर्वांगस्त्रिपुण्ड्रपरिचिह्नितः। राजद्रत्नाङ्गदैर्युक्तो मणिरुद्राक्षहारकः ॥
मुकुटोद्यत्सुधाधामखण्डार्धजटिलालकः। सदाशिवार्चकवरश्शूलहस्तोहि भैरवः ॥
तत्रैकं भवनं शम्भोर्वीरभद्रेश्वरस्य च। नवरत्नांकितं दिव्यं प्राकारवरगोपुरम्॥४८॥
धूपामोदितदिक्चक्रं मणिद्युतिविराजितम्। तल्लिंगं पूजयत्येव विल्वमन्दारचम्पकैः॥
दीपोपहारधूपैश्च चन्दनेनाक्षतादिभिः। स्तौति हृष्टस्त्रिकालं स तल्लिंगं पारमेश्वरम्॥

वीरभद्र उवाच—

क्षयद्वीर दक्षाध्वरध्वंसकाशावसेशान चाशाविहीनेति तुष्टः।
त्वमेवासि भद्रं त्वमेवास्य भद्रं सताश्वासतामाशु मां मोक्षयाद्य ॥ ५१ ॥
इत्थं स्तौति सदाशम्भुं वीरभद्रो गणाग्रणीः। शैलावरणमेतद्वै शम्भोश्शिवगणाश्रयम्

१. कालान्धकाद्यपारसुरशत्रुहन्हरिश्शराद्रिवाणासन इति पाठान्तरम्।

दशलक्षप्रमाणेन परिघाकृतिविस्तरम् । गोपुरार्बुदकोपेतं रम्यमण्टपमण्डितम् ॥
सहस्रनियुतस्तम्भैः कुम्भैश्चापि समन्वितम् । रम्यलिङ्गालयोत्तुङ्गराजद्वृषभशेखरैः ॥
धगद्धगितदिक्चक्रं शैलावरणमीशितुः । व्यायामायतदीर्घश्चाप्येतद्वोऽभिहितं मया ॥
एवमाभ्यन्तराः क्लृप्ताः प्राकारवरगोपुराः । सहस्रप्रमथाधीशैस्सप्तसागरमध्यगैः ॥
शैलद्वीपसरिद्भिश्च निर्मितं विपिनैरपि। ध्यात्वा ध्येयमिदं विप्रगणो भवति शांकरः ॥

स्कन्द उवाच—

नैव प्राकारमध्ये हरविधिहरयो नो गणा नापि वातो
नो चन्द्रो न च सूर्यरश्मिनिचयोनाग्नित्रयं नो सुराः ।
एकस्तत्र महेश्वरो विहरति स्वैरं सहाम्बो मुदा
तद्वेदैरपि वक्तुमेव न भवेत्कावा कथान्यस्य हि ॥ ५८ ॥
शरशरधिरथांगं यन्तृयानं वहा वै धनुवरमथ तज्या वैरिवर्गं रथीच ।
हरिविधिश्रुतयः क्ष्मा पुष्पवन्तौ तथाब्धिर्नगवर उरगेन्द्रस्त्रैपुरं श्रीमहेशः ॥
निश्वासश्रुतिरेक एव भगवानास्ते सहाम्बो भव-
स्तस्यापारविचित्रसर्गबहुलास्स्वाभाविकाश्शक्तयः ।
तस्यानन्दघनस्य भक्तिपरमा भावा गणास्ते द्विजा
ब्रह्मेन्द्रादिमरुत्पदेषु विहितास्सक्ता महेशार्चने ॥ ६० ॥

इति श्रीशिवरहस्ये प्रथमांशे शैलप्राकारवर्णनन्नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

---

## पञ्चब्रह्मप्राकारवर्णनं नाम षोडशोऽध्यायः.

जैगीषव्य उवाच—

शिखिवाह नमस्तेऽस्तु नगपौत्र महाप्रभो । सुन्दराननसन्दोह द्वादशोत्पललोचन ॥
नाकनायक मैनाकमातुलानलसम्भव । शोकमूकसुदैत्याजिगतप्राणापहारक ॥ २ ॥
तारकक्रौञ्चमथन पुनर्विस्तरतो वद । नहि तृप्यामि ते वक्त्रकथारसझरीभरैः॥ ३॥

---

१. गोपुराट्टालकोपेतमिति पाठान्तरम् ।

पुनः कियन्तः प्राकारा गोपुराट्टालसुन्दराः । कैलासस्य महेशस्यात्रसतेरतुलस्य च॥

सूत उवाच—

इत्थं नन्दितमन्दारो जैगीषव्येन चोदितः। सुरान् गणान्मुनींश्चैव प्रोत्फुल्लाननपङ्कजः
उवाच प्रमथेशानन्नत्वा देवीं स्वमातरम् ॥ ६ ॥

१. स्कन्द उवाच—

शृणुध्वं ब्रह्मविच्छ्रेष्ठा मुनयश्च गणोत्तमाः । जैगीषव्य महाप्राज्ञ शृणुध्वममलाः कथाः
शम्भोर्विचित्रविभवाश्श्रोतपापामलाः कथाः।क्षीरोदधिमहाखातप्राकारोऽस्तितदन्तरः
उद्भूतचन्द्रकिरणैस्तरंगैश्चैव भासुरः । रजतोच्छ्रायशृंगाग्रो महावृषभलाञ्छितः ॥
नानागोपुररत्नौघप्रभाभासितदिङ्मुखः । स्फटिकैः कृतदेवेशवरसुन्दरविग्रहैः ॥
शोभितो गोपुराणांच समूहैः परिशोभितः । तत्पूर्वदेशे देवस्य तत्पूर्वस्य मनोहरम्॥
गोपुरं सौधसुभगं स्तम्भविद्रुमपुत्रिकम् । मणिकुम्भाच्छवलभीनिर्यत्पारावतीगणम् ॥
तत्र सिंहासनवरं नवरत्नविचित्रितम् । तत्र स्थितं गणैर्देवैश्शूलतेजोलसत्करैः ॥
कपर्दधृतचन्द्रार्कैर्भसितामललोचनैः । त्रिपुण्ड्रविलसत्फालैर्विलसत्फाललोचनैः ॥
रत्नान्तरितरुद्राक्षमालाललितकन्धरैः । नीरदौघत्प्रभाभास्वन्नीरजोपमकन्धरैः ॥
वाताशनकृतोच्छ्वासचलद्धारमनोहरैः । महाडमरुनादेन भीषिताखिलदिक्तटैः ॥
फणामणिकृतापारनूपुरांगदकंकणैः । रणन्मञ्जीरवलयैस्सिंहसंहननैर्गणैः ॥ १७ ॥
पुण्डरीकाजिनभवत्कृष्णरेखाकटीतटैः । महेभचर्मवसनैर्बालातपसमप्रभैः ॥ १८ ॥
गणेन्द्रैर्वारणेन्द्राभैः करिशुण्डोरुबाहुभिः । अहिमन्युभिरुत्कृष्टैः कोटिभिर्गणपैर्वृतः ॥
पृषत्ककरनिस्तृंशबाणासनधरैर्वरैः । पूर्वतो भातितत्पूर्षश्चेन्दुकुन्दसमप्रभः ॥ २० ॥
जटामुकुटसंशोभिराजराजकलाधरः । भस्माभ्यक्तस्त्रिपुण्ड्रांकश्चतुर्बाहुरुदारधीः ॥
त्रिणेत्रो नीलकण्ठश्च बालसूर्यायुतप्रभः । तत्पूरुषं महालिङ्गं संपूज्य वरिवस्यया ॥
समर्चयति विप्रेन्द्र बिल्वपत्रैश्शिवार्चकः । स्तुवते सावधानेन तल्लिङ्गं रत्नधामगम् ॥

१. ब्रह्मविष्णवाद्या इति पाठान्तरम् ।

२. तपोधनाः इति पाठान्तरम् ।

तत्पुरुषः—

स्वच्छछत्राभिरामं छविजितरजतं छन्दसाङ्गीततुष्टम्
स्वच्छन्दार्यां निरिच्छोदधिनिजमहिगोच्छन्नमच्छाच्छदेहम् ।
छन्नेभारिछदाच्छछदमजमजरं पिञ्छतापिञ्छगुच्छ-
छायासच्छायवामाङ्गममदधिषणे सद्विपच्छेदनेच्छम् ॥ २४ ॥
आशीविषाङ्गद सदैव महेश काशीनिवासीकृतानन्दवन प्रसीद ।
संसारवाराशितरे पुरारे कीनाशनाश भयमाशु विनाशयाद्य ॥ २५ ॥

स्कन्दः—

इत्थं स्तौति सदाकालं पुरुषः पुरुषेश्वरम्[1] । तत्रास्ते गणपाधीशः प्राचीन्तां पालयन्दिशम्
क्षारोदधिपरीवृत्तः कालायसविनिर्मितः । प्राकारो राजते विप्र दक्षिणे गोपुरैर्वृतः ॥
लवणाम्भोधिकल्लोलघर्घरानिलघोषितः । तत्र नाना महाभोगफणारत्नालयो महान् ॥
सौधान्तरस्थपीठस्थो भ्रुकुटी कुटिलाननः । उच्चण्डतरकोदण्डखण्डितारातिमण्डलः ॥
जटामण्डलगोद्भासिसुधामण्डलशेखरः । विद्युल्लतेव घनवदंष्ट्राशोभितवक्त्रकः ॥ ३० ॥
नीलामलतनूभास्वद्भासितालेपसुन्दरः । सजलोद्दामघनगगर्भान्तरसुविद्युता ॥ ३१ ॥
सदृशामलपुण्ड्रांकस्तिलकाकल्पभूषितः । धनुर्हेतिधरस्तादृग्गणपैरभितो वृतः ॥ ३२ ॥
प्रसन्नकरसंकाशदोर्दण्डवरचण्डकैः । ब्रह्माण्डस्फोटनारावैः कोदण्डवरमण्डितैः ॥ ३३ ॥
अघोरो घोरवदनः पातितान्दक्षिणान्दिशम् । चण्डाज्ञानतमोचण्डखण्डनेमण्डितालकः
अघोरेशं महालिंगं संपूज्य स्तौति भक्तितः ॥

अघोरः—

सज्जन्निर्जरराजराजमकुटीनीराजनभ्राजिप-
द्राजीवं जगदार्तिभञ्जनरतञ्जेतारमाजौ पुराम् ।
आसाम्राज्यमिहैव जीवितनये सायुज्यमेवेज्यया
दातारं भज धूर्जटिं स्वहृदय मे जह्नुकन्याभुजंगम् ॥ ३५ ॥
अनिकटगमकपटगिरामहिकटकं नटनलम्पटं खपटम् ।

१. तत्पूरुषः परमेश्वरमिति पाठान्तरम् ।

अघपटलपाटनपटुं हाटक गोधारिधारिणं वन्दे ॥ ३६ ॥

स्कन्दः—

प्रतीच्यामपितत्रास्ति प्राकारः पुष्परागजः। पुष्परागमणिज्योतिर्विभासितदिगन्तरः॥
तन्मणीन्द्रकृतानेकरुद्रक्रीडादिविग्रहैः। वृषभैस्तादृशैरेव गोपुराग्रप्रकल्पितैः ॥ ३८ ॥
गोपुरैर्भूधराकारै राजत्कलशसुन्दरैः। तत्रास्ति भवनं पुण्यं नानामणिविराजितम्॥
वेदिकापट्टिकोपेतं सिह्मासनवरैर्वृतम्। सद्योजातं सुखासीनं क्षारसारविभूषितम्॥
पूर्वजातनिशानाथभासुरांगमनोहरम्। राजत्पिंगामलजटाकृतापीडनिशाकरम्॥ ४१॥
उडुनायकसंशोभिफालानलविलोचनम्। प्रचण्डतरमार्ताण्डमण्डलोत्तमभूषितम्॥४२॥
नीलेन्दीवरसङ्काशग्रीवावलयसुन्दरम्। पुष्परागकृतानेकमालाकलितकन्धरम्॥४३॥
वैयाघ्रचर्मविलसत्कटिरत्नसुकाञ्चिकम्। अहिमन्युवरानेकतादृशैर्गणपैर्युतम् ॥ ४४ ॥
पाशांकुशाभयकरं पाशिना परिसेवितम्। दधिमण्डमहांभोधिमध्यसौधवराश्रयम्॥
गणैश्चापिमहोद्दण्डडिम्भारावविभीषणैः। सेवितं पाशिभिस्तत्रपश्चिमांपातितान्दिशम्
सद्योजातेश्वरं लिंगं स्तौति भक्त्या प्रपूजयन् ॥ ४७ ॥

सद्योजातः—

पाटीरद्रुमकीटकेतनजटाकोटीरभागेरट-
त्स्पाटोच्चैस्तटिनीस्यदाभटतटज्जूटीकृताहिछट।
घोटाकृत्रिमगोकटीलटपटीभूतेभचर्माम्बर
क्षोणीरुण्णिकटाटखाटविटपिन्मच्चित्ततव्यामट ॥ ४८ ॥
वतंसितसुधाकरं वरगुणौघरत्नाकरं
स्फुरन्निटिललोचनज्वलनदग्धमीनध्वजम्।
कुलाचलकुमारिकाकुचतटीपटीरांकितं
भजामि भजतां सदाभयदमीश्वरं शंकरम् ॥ ४९ ॥

स्कन्दः—

इति स्तौति सदा लिंगं सद्योजातो महेश्वरम्। तदुत्तरेऽपि प्राकारो गोमेधमणिकल्पितः
घृतोदेनावृतस्तत्र तत्कल्लोलोत्थवायुभिः। परीवीतो गोपुरैश्च तन्मणीन्द्रकृतैश्शुभैः॥

वररुद्रावतारोग्रद्विग्रहैर्वृषभैर्युतम् । शोभितं तत्प्रभाभिश्च तत्रास्थानं च तस्य हि ॥
सौधैरपारशिखरैर्बहुस्तम्भविराजितैः । तत्र संस्थं महाबाहुं वामदेवं त्रिलोचनम् ॥
सिंहासने सुखासीनं भस्मोद्धूलनपाण्डरम् । हरिन्मणिनिभाकारं विद्युन्निभजटाधरम्
त्रिपुण्ड्राङ्कितसत्फालं खड्गखेटधरं शुभम् । प्रसन्नास्यन्नीलकण्ठं राजदिन्दुकलाधरम्
हरितैर्गणपैश्चैव वायुभिः परिसेवितम् । उद्यन्मरतकीगर्भसुन्दरैर्वायुवेगितैः ॥ ५६ ॥
त्रिपुण्ड्रचन्द्रार्धधरैर्जटामण्डलमस्तकैः । बाणबाणासनधरैर्हल्लकाभूषभूषितैः ॥ ५७ ॥
वल्लकीमुरजोत्तुङ्गमृदङ्गवरवादकैः । सेवितं परितो वीरैश्शूलामललसत्करैः॥ ५८ ॥
वामदेवं सामजाताजिनबद्धकटीतटम् । कण्ठे भुजङ्गसंयुक्तं मृगेन्द्रामललोचनम् ॥
कुबेरेणोत्तरां पाति दिशं यक्षेश्वरावृताम् । वामदेवेश्वरं लिङ्गं सम्पूज्यास्तुवदीश्वरम्॥

वामदेवः—

तिष्ठन्ते स्तुतिपाठने तव विभो निष्ठ्यूतनिष्ठीवव-
च्छाठ्यं निष्ठुरतां विधूय मनसा ब्रह्मैकनिष्ठाः कति ।
वैकुण्ठार्चित रत्नपीठनिलय श्रीकण्ठ कण्ठोल्लस-
न्नील ज्येष्ठ कनिष्ठ कुष्ठहनन श्रेष्ठान्तरातिष्ठ मे ॥ ६१ ॥

सुरकुवलयसोमं वामदेवाख्यसामस्तुतमखिलगुणानां सीमधामानमीशम् ।
जगदवनविनाशं शाम्भवोद्यत्सुकामं निजनयनकटाक्षैर्दग्धकामं भजेऽहम् ॥

स्कन्दः—

एवं स्तौति महादेवं वामदेवः प्रसन्नधीः । तदन्तरा गिरेर्मूर्ध्नि संस्थो हीरकसौधकः
रुद्रावतारप्रभवैर्विग्रहैर्वृषभैरपि । उरगेन्द्रमहाहारो मद्ध्यन्दिनरविप्रभः ॥ ६४ ॥
शर्वरीशानमकुटीभूतिभूषितविग्रहः । गजेन्द्रचर्मवसनो हीरमालाकृताङ्गकः ॥ ६५ ॥
अन्तरिक्षे रुद्रगणैः पाति व्योम मनोहरम् । निषङ्गिभिः कवचिभिश्छुरिकाहेतिधारिभिः
व्योमकेशप्रसादेन चेशानश्चेशिता सताम् । ईशानेशं महालिङ्गं सम्पूज्य स्तौति भक्तितः

ईशानः—

रथन्तररवप्रियं रथरथाङ्गपाणीशरं
मनोरथपथातिगं सुरथनाथसत्कङ्कणम् ।

भगीरथपथानुगाविहितजह्नुकन्याजटं
भजामि सुरगो रथप्रियमपारपापापहम् ॥ ६८ ॥
चपके निजवाजिहेपितैश्चरणे वायुसुभोजिशिञ्जितैः ।
कटिसीम्नि सुभूरिबृंहितैर्मुखरं दैवतमाविरस्तु चित्ते ॥ ६९ ॥
अश्वीकृतस्वीकृतवेदराशिर्नाङ्गीकृतांगीकृतशम्बरारिः ।
अस्त्रीकृतस्त्रीकृतदानवारिर्देवस्सदा मे हृदये चकास्तु ॥ ७० ॥

स्कन्दः—

एवं स्तौति सदाकालमीशानो गणपावृतः । आन्तराः परिघाश्चैव प्राकारत्रयगोपुरम्॥
महाकैलासभवने मणिकल्पितमुत्तमम् । रत्नप्राकारमेतद्धि पञ्चब्रह्मप्रकल्पितम्॥७२॥
महेशेन तदा विप्र श्रवणादघनाशनम् ॥ ७३ ॥
विचित्रं शिवनिर्माणं विचित्रं शिवचेष्टितम् । विचित्रा शिवमाया सा महामायस्य शूलिनः
यस्यांशलेशलवलेशशतांशलेशलेशैर्जगज्जननकर्मगतिप्रणाशम् ।
कुर्वन्ति वामभुजभूर्मधुकैटभारिर्दक्षांगनेत्रजननौ भवतां हराजौ ॥ ७५ ॥
क्वचित्कल्पे स्रष्टा हरविधिमुकुन्दाः प्रतिभुवः
क्वचिद्ब्रह्मा विष्णुः क्वचिदपि च रुद्रोऽपि करणम् ।
जगत्संस्थानाशप्रकृतिजगुणैः नैव करणा
भजन्तश्चान्योन्यं जनकजननाश्शम्भुकृपया ॥ ७६ ॥
मनोवाचां चक्षुर्विषयमपि नोतस्य चरितं
शिवस्यैता लीलाः प्रथितवितता जागतगताः ।
स्वतन्त्रोऽयं शम्भुर्गुणगणविहीनोऽपि सगुण-
स्स्वया शक्त्या चित्रं विदधति गिरीशोऽद्य जगति ॥ ७७ ॥

इति श्रीशिवरहस्ये प्रथमांशे पञ्चब्रह्मप्राकारवर्णनं नाम
षोडशोऽध्यायः ॥ १६ ॥

कैलासप्रासादवर्णनं नाम सप्तदशोऽध्यायः.

स्कन्दः—

तदन्तरेऽपि प्राकारश्चन्द्रकान्तशिलामयः । कलधौतमहासानुशिखरोपरिसंस्थितः ॥
पञ्चलक्षप्रमाणेन चायामेनोच्छ्रयेणच । परिणाहेऽपि विप्रेन्द्र परिवर्तोज्वलप्रभः ॥
कनकामलकुम्भाग्रो रत्नभूजन्मणिप्रभः । सुधाब्धिजलकल्लोलविलसत्पादपीठकः ॥
चतुर्दिक्षु महाद्वारगोपुरोत्तमशेखरः । सोमधामायुतोद्भासि चाकचक्यजितान्तरः ॥
जगच्चक्रमहाविम्बविम्बितान्तरसुन्दरः । तत्कान्तिकान्तधाराभिर्दिशोऽपि धवलीकृताः
उद्यत्सुधांशुकिरणनिसृष्टोत्सृष्टनीरकः । सुधातरङ्गनृत्योर्ध्वहासफेनोपमोऽमलः॥ ६ ॥
कैलासाचलसर्वस्वसारभूतोऽयमुत्तमः । धवलिम्ना तु ये लोके पादपास्सन्ति वर्णने॥
तेषामप्यतिधावल्यानुपमस्स द्विजोत्तम । तत्प्राकारमहामौलौ स्फटिकोपलनिर्मिताः॥

वृषभा नीलनयनाः पुच्छे शृङ्गे विभूषिताः ।
कुरुविन्दोल्लसज्जिह्वाः ककुदाभोगभासुराः ॥ ९ ॥

कर्णाग्रलम्बितात्युच्चस्फुरच्चामरपंक्तयः। केचिदानन्दभरिताः पश्यन्त्यन्योऽन्यमीक्षणैः
केचित्सुरभिपाश्चात्यभागभोगैकसम्भ्रमाः । विवृतोद्यद्धीरकान्तिदन्तावलिविभूषिताः
केचिदाताम्रनेत्रान्तास्सुरघट्टमहोपलाः । प्रवालमणिक्लृप्तेन लम्बिना वृषणेन च ॥
नन्दन्ति घनसन्नाहध्वनिभिर्जितदिङ्मुखाः । एवं तत्र महासौधप्राकारवरसंस्थिताः ॥
कल्पकानां वनं तत्र छदपुष्पफलावृतम् । नानापलाशकलिकाकुसुमैः फुल्लशेखरम् ॥
रत्नालवालकलितं राजद्रामण्यवेदिकम् । तत्र तत्सुमगन्धोद्यद्बन्धुरामलमारुतम् ॥
घ्राणतर्पणमत्यन्तं शीतासारविसारिणम् । वसन्तप्रमुखानेकैरृतुभिः परिवारितम् ॥
कामाधिकप्रदं तत्र तत्कल्पककुलं महत् । मन्दारपारिजातैश्च सन्तानैश्चन्दनैर्वृतम् ॥
नयनानन्दजननं तापत्रयनिवारकम् । तत्कैलासमहापारसारभूतं मनोहरम् ॥ १८ ॥
हरिन्मणिनिभं स्वच्छछत्रच्छायासमप्रभम् । तत्सुमप्रभवामोदघुमुघ्घुमितमारुतम् ॥
विष्णुब्रह्मामरेन्द्राद्या मुनयश्च गणास्सुराः। तृप्तान्तराः प्रमुदिता नेच्छन्त्येवहि नन्दनम्
तत्सुखांशशतांशांशशतकं तत्र नास्ति हि । इत्यन्योन्यं संवदन्ति कथं तत्प्राप्यते वनम्
केवलं श्रीमहेशस्य प्रसादेन विना द्विज । नास्माकं प्रसरस्तत्र चेति विस्मायितान्तराः

तत्रोत्फुल्लमहारत्नसोपानावलिभासुराः । स्वच्छाच्छस्फटिकाकारपानीयोत्तमसंवृताः ॥
सुवर्णमृदुलालोलमृणालोच्छ्रितकुण्डलैः । रत्नकल्हारकञ्जैश्च कुमुदैश्चैव शोभिताः ॥
उत्फुल्लरत्नकमलसहस्रदळसंवृताः । हरिन्मणीन्द्रविततहरिच्छदवरैर्युताः ॥ २५ ॥
तत्पत्रविलसन्नीलवेलमुक्ताफलोपमाः । तत्पङ्कजरजः पुञ्जरञ्जिता मन्दमारुताः ॥
तद्भृन्दमधुरामोदविसर्पितदिगन्तराः । नीरनीरजवल्योऽपि विततास्तत्र शाङ्कर ॥
इन्द्रनीलकृतानेककलिकोद्दामकेसरैः । वेल्लिताकीलितापारनीलेन्दीवरभासुराः ॥
विकचत्कुमुदासारकेसरच्छदसंवृताः । कासारसारसरलचलनाचलपत्रकाः ॥ २९ ॥
उद्यत्सुपुण्डरीकाच्छतुच्छीकृतसुधावलिः । सन्त्यत्रनीरजदलस्वच्छशारदवत्स्थितः ॥
तस्यान्ते रत्नविलसत्पद्मरागमणिद्युतिः । प्रासादशृङ्गसाहस्रैः परितस्सरसस्तदा ॥
विचित्रापारसद्रत्नस्तम्भपंक्तिविराजितः । तद्विद्रुमलताजालस्तम्भविद्रुमपुत्रिकः ॥
गोपानसीगतापारगवाक्षोज्वलकुम्भकः । राजत्सुरत्नकलशप्रभाकीलितदिङ्मुखः ॥
उद्यद्भानुसहस्राभः किञ्जल्काकृतिभासुरः । कचित्सिह्मासनं तत्र नवरत्नविचित्रितम् ॥
कचिन्मञ्चा रत्नपादा मूलके विद्रुमान्विताः। स्फटिकोपलसङ्क्लृप्ततलादिवितताश्शुभाः
हरिन्मणितलाश्चापि कुरुविन्दतलामलाः । इन्द्रनीलमणिक्लृप्तमहापीठमनोहराः ॥

मुक्तावितानकलिता मणिलम्बितशृङ्खलाः ।
मञ्चा मनोज्ञा रुचिरास्सोपधानोपशोभिताः ॥ ३७ ॥

पुष्परागकगोमेदवैडूर्यतलकान्तिभिः । भान्ति तत्र महापीठा विद्युदुद्यत्प्रभायुताः ॥
कचिन्निम्नभ्रमास्तत्र पतन्ति प्रसभं गणाः ।उन्नतेषु प्रदेशेषु निम्नभ्रान्तिकरास्सदा ॥
स्थले जलभ्रमश्चापि जले तत्र स्थलभ्रमः । नानारत्नपतत्पत्रशुकशारिकरावितः ॥
रत्नपञ्जरमध्यस्थशुकशारिकपंक्तिभिः । क्रीडामयूरैर्वलभीलम्बिपिञ्छैकभासुरः ॥
तत्र पक्षिगणास्सर्वे शिव शङ्कर पाहि नः । धूपधूममहागन्धबन्धुरामलमारुतः ॥
मणिप्रभाभिस्सततं सोमसूर्यौ तिरस्कृतौ । सरसीमध्यसंक्लृप्तसौधोद्यद्रत्नकुम्भकः ॥
मणिस्तम्भकृतासारभाभासितदिगन्तरः । सुवर्णाम्बरसंक्लृप्तवितताममलमौक्तिकैः ॥
जालिकापालिकापारवितानावलिभासुरः । तन्मध्यहीरकोत्तुङ्गसिह्मासनवराश्रितः ॥
तत्रदेव्या महादेवो विहारशयनासनैः । सरःप्रान्तोरुकलशधारासारोर्ध्वशीकरैः ॥

यन्नीरतीरगन्धोद्यद्धारासारौघशीकरैः । कदाचित्तत्र मध्यस्थो देव्या व्यजनहस्तया॥

सेवितश्श्रीमहेशानः क्वचित्पीठस्थितश्शिवः ।
तत्र नानाविधाः क्रीडा देव्या चक्रे महेश्वरः ॥ ४८ ॥

विचित्राणां चरित्राणां त्रिणेत्रप्रियकाम्यया । देव्या प्रमुदितो देवस्तत्र सौधवरेषु च॥
काश्चित्तत्र वदाम्यत्र शृणु भूसुर शाम्भव । विपिने सरसस्तीरे प्रासादाग्रेषु गोपुरे॥
विजहार महादेवो भवान्या शंकरस्तदा । शैलमालोकयद्देवो देव्या देवी सखीगणैः॥
अदर्शयद्विचित्राणि तस्मिन्कैलासपर्वते ॥ ५२ ॥

सालतालकृतमालतमालैरामलक्यवकुलार्जुनपाटलैः ।
फानसैर्लिकुचवाह्लिकनीपैर्दाडिमैश्च सुरसालरसालैः ॥ ५३ ॥

जम्बूनिम्बकदम्बजैः फलभरैस्तक्कोलहिन्तालकै-
रंकोलैस्सरलैरशोकतिलकैस्तिन्दूकमालूरकैः ।
पुन्नागैर्नगनागसर्जरसिकैः चाम्पेयमाधूककैः
प्लक्षाश्वत्थकपित्थतिन्त्रिणिभवैर्भूनिम्बजालैर्धवैः ॥ ५४ ॥

वटकुटजकुरण्टैः कर्णिकाराश्वमारैः खरबदरपलाशैर्लोध्रसच्चन्दनैश्च । ५५।
कुरवकशुकतुण्डैश्शिंशुपाचेङ्गुदीभिर्लिकुचविकचभण्डैः केतकैस्सिन्दुवारैः॥ ५५॥

केदारकोविदारैश्च देवदारुकपित्थकैः । तगरागरुकृष्णाभ्रैस्तुंगनीपककुम्रकैः॥ ५६ ॥

मन्दारद्वयपारिजातवकजैरर्कैश्च सप्तच्छदैः
पूगीनारलखर्जुरैश्च कुटजैर्नारंगजातिद्रुमैः ।
प्लक्षोदुम्बरकन्दलैर्मुनिभवै राजादनैर्बर्बरै-
श्शल्मल्यैर्वरशिग्रुकैर्मधुभवैस्सन्मातुलिंगैरपि ॥ ५७ ॥

भूतावासहरीतकीत्रिकटुकैश्शम्युद्भवैः किन्दरैः
प्राचीनामलकैः करञ्जककुभैर्गन्धात्तजम्बूफलैः ।
बन्धूकैश्चिरिबिल्वजैश्च तरगैः कृष्णागरूत्थैर्द्रुमै-
र्मालिंगैश्च शिरीषकैः कुसुमितैरन्यैश्च शाखाशतैः ॥ ५८ ॥

मल्लीमालतिजातिकासुरभितैस्सायन्तनोन्निद्रितै-
श्चन्द्रासारविकासितैरतिसितैस्सच्चन्द्रिकावल्लिभिः ।
वल्लीनान्निवहैः कदम्बजरजस्सन्दोहगन्धानिलै-
रुत्फुल्लैस्तिलकैस्तमालजसुमैः फुल्लैर्लसत्केसरैः ॥ ५९ ॥
कुन्दैरिन्दुकरप्रसारितमुखैरालोलसप्तच्छदैः
कौसुम्भैररुणप्रभासुमधुरैः प्रोद्भूतसत्केसरैः ।
द्राक्षागुच्छसुवल्लिकासितसिताः पुण्ड्रेक्षुसाराकराः
पूगद्रुंगवलीकृतांगमधुरास्सन्नागवल्लीलताः ॥ ६० ॥
मन्दारसुन्दरतरुप्रकरैः प्रफुल्लैरुत्फुल्लदाडिमसुमैर्वककर्णिकारैः ।
पीतायमानसुषमायुतचम्पकैस्तैरुत्फुल्लपाटलकदम्बजराजवृक्षैः ॥ ६१ ॥
सत्किंशुकैश्शुकमुखैर्वरशल्मलीभिः पुन्नागनागनवनीपसुमैः प्रफुल्लैः ।
भारातिभारशिखरैः कलधौतशैलः पश्याम्बिकेऽत्र सुमनोहरवृक्षसङ्घैः ॥ ६२ ॥
वल्लीविकासिततनुः प्रसभं भवानि प्रोद्यत्सुधांशुचयकोटिनिभो विभाति ॥
उत्फुल्लामलपुण्डरीककुमुदैर्नीलोत्पलैस्सुन्दरै-
रारक्ताम्बुजकञ्जनीभिरभितस्सद्रत्नसोपानकैः ।
तत्प्रान्तामलबिल्वमूलजमहालिङ्गाकृतिश्शङ्कर-
स्तुष्यत्येव सरस्सुरुद्रगणपैर्देव्यागिरीन्द्रेऽधिकम् ॥ ६३ ॥
तद्ध्यानधारामृतपानपीनास्स्वात्मैकताना इव चक्रवाकाः ।
सरस्सु कल्लोलचलात्तपक्षा हंसा बकास्सारसपंक्तयश्च ॥ ६४ ॥
नार्द्रीकृताङ्गाः खलु सञ्चरन्ति भावा भवाब्धाविव मे प्रभावात् ॥ ६५ ॥
कपिवरकुलमाद्यचालनालोकनाद्यैः फलपतनजवर्षैः पुष्परेणुप्रकीर्णैः ।
शिखरिशिखरसारा भूमयश्शोशुभन्ते करिकटमदधाराप्रस्रवैः पङ्किलाश्च॥६६॥
शुकबकपिककाककोकघूकैर्निभृतविनादितचक्रवाकपाकैः ।
गहनविपिनशाखिमस्तसंस्थामधुरारावविनादिचक्रवाकैः ॥ ६७ ॥
गिरिवरशिखराग्रे नृत्तसाटोपबर्हा हरिकुलकृतघोषैर्बृंहितैर्वारणानाम् ।

गिरिशिरसि निनादैस्सारसानां शुकानां पिकरवकलकण्ठैर्नादितस्तद्गुहान्तः॥
महिषचमरकुञ्जदन्तशृङ्गैः खरखुरघट्टनशैलसानुनिम्नः ।
सुमनजगतवायुबन्धुरानुमोदद्रुमरजसंकृतिद्रोणिलम्बिक्षौद्रः ॥ ६९ ॥
फलकुलसुमभारैर्दीर्घितानम्रशाखाव्रजदलिकुलमालानीलनीलाब्जतुल्याः ।
मधुररससुपेशीलम्बहस्ताग्रशाखा हरगिरिवरभागा भान्ति सौवर्णवृक्षाः ॥७०॥
कलधौतनगप्रशस्तमुस्तापुलकाम्रेडितकोलजालमेतत् ।
सितदंष्ट्रोत्थितघोणघर्घरोरुरावं पश्यमुदागिरीन्द्रजाते ॥ ७१ ॥
हरिखरनखरैर्विदारितोद्यत्करिकुम्भोद्यतरक्तयुक्तमुक्ता-
मणिजालावृतभूमिभागमेतत् ।
द्विपकुलमिदमत्युदारघोषं हरिणो धावति सिंहनादभीतः ॥ ७२ ॥
वल्मीकोर्ध्वफणंफणीश्वरकुलं वातोत्थदिक्चक्रक-
श्वार्तत्रस्तविलोचनं हरिरवैर्भीत्या प्रसूतं शिशुम् ।
त्यक्त्वा धावति पश्य पश्य गिरिजे प्रोड्डीनमेणीकुलम् ॥ ७३ ॥
कैलासाचलरत्नसौधगमहासिंहासनाद्ध्यासितो
देव्युत्फुल्लमुखारविन्दविगलन्माध्वीकसारं मधु ।
पीत्वा लोचनषट्पदैर्वदति तां पश्येति लिङ्गान्युमे
बिल्वीकोमलपल्लवैरनुदिनंकैलासशृङ्गेऽर्चितम् ॥ ७४ ॥
पश्याम्बिके मदनमत्तमयूरपिञ्छैस्सञ्छादितानि चमरीगणपुच्छभारैः ।
संवीजितानि करिविस्तृतकर्णतालैस्सिक्तानि तद्वनगवां पयसैव नित्यम्॥ ७५॥
सङ्घर्षणान्मृगकरीन्द्रसुदेहभारैर्बिल्वच्छदैः पतनतः परिपूजितानि ॥ ७६ ॥

स्कन्दः—

गौरीयल्लकभल्लशौरिरुरगोऽसच्छिञ्जिनी ते नगो-
लीलाकार्मुकतान्दधाति भगवान्भिल्लाकृते तेऽधुना ।
वेदास्तेतुरगा विधिर्नियतिकृद्विश्वेश विश्वाधिक
त्वल्लीलाधिगमेन सर्वजगतां नाशप्रभावस्थितिः ॥ ७७ ॥

वीक्षाशिक्षितमन्मथत्रिपुरक दक्षादिदीक्षापह
त्र्यक्षाक्षादिविदूर भिक्षितमहामौनीन्द्रविज्ञानद ।
ईक्षा भोजनपक्षपात दयया कक्षाधिवासावमाम् ॥ ७८ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासप्रासादवर्णनन्नाम
सप्तदशोऽध्यायः ॥ १७ ॥

---

## कैलासमौलिवर्णनं नाम अष्टादशोऽध्यायः.

स्कन्दः—

हीराकारमहासौधे घर्मतप्तो हि शंकरः । देव्या सरस्तटे रत्नसिंहासनवरे स्थितः ॥
सुचन्द्रचन्दनद्रावविलेपितमहाङ्गकः । महागरुमहाधूमविधूपितशिखस्तदा ॥ २ ॥
रत्नपात्रस्थितापारमहामोदान्नभोजनः । ततोऽपि कल्पकफलं देव्या भुक्तं महेश्वरः॥
सुरत्नखचितानेकरत्नपात्रस्थितान्फलान् । दृष्ट्वा तुष्यति देवेशः कदाचिदमृताशनः॥
रत्नादर्शविलोकाच्छप्रांतेविम्बैकदर्शनः । देव्या ललाटफलके तिलकं रत्ननिर्मितम्॥
कल्पयत्यतिहृष्टात्मा सदानन्दघनश्शिवः । पाटीरचन्द्रकस्तूरीलिप्तं मलयपंकजम् ॥
देवीं विलेप्य संहृष्टस्स्वाङ्गमीशोऽतिहर्षतः । देव्या धम्मिल्लमल्लीनां घ्राणानन्दकुतूहलः
कल्पकामोदबहुलपुष्पस्रग्भिश्च भूषणैः । त्यक्त्वा कपर्दं मकुटं रत्नकल्पितमुत्तमम् ॥
धारयत्यतिसंहृष्टश्चन्द्रद्वन्द्वं महेश्वरः । हारकेयूरवलयैर्भूषां स्वांकलयत्युमाम् ॥ ९ ॥
काकोदरमहारत्नं त्यक्त्वा रत्नप्रभाधिकम् । नवरत्नमहाहारावलीलम्बितमौक्तिकैः॥
स्वकण्ठं कीलयत्येव देव्याः कण्ठेऽपि शंकरः ।
शितिकण्ठो विरूपाक्षो देव्या क्रीडति तत्र हि ॥ ११ ॥
एवं विहरतोस्तत्र ब्रह्मकल्पशतङ्गतम् । भूतं भावि भवत्तत्र कालकल्पं द्विजोत्तमाः ॥
कालातीतस्य देवस्य सदा मृत्युञ्जयस्य च ।
तस्य क्षणार्धे ताः क्रीडाः केन वक्तुं हि पार्यते ॥ १३ ॥
धारासारगृहेषु शङ्खमुरजोद्घुष्टेषु तुष्टश्शिव-
श्चन्द्रोशीरसुगन्धबन्धुरजलैस्सत्पाटलामोदितैः ।

लालाटोत्थहुताशसूर्यकिरणैस्सन्तप्तगात्रोऽम्बया
 लीलालालितरत्नकीरकरयाध्यास्ते च सिंह्मासने ॥ १४ ॥
हीरागारनिवद्धरत्नजमहाडोलासनाडोलनै-
 रत्नश्वेतजकान्तिवृन्दनिवहैस्तत्स्फीतवातोत्थितैः ।
सूक्ष्मैरम्बरकान्तिभिर्विकसितैस्सच्छैलसानुप्रभै-
 रम्बामीक्षति लोकयेति ससुधाकल्लोलवाराम्निधिः ॥ १५ ॥

ईश्वरः—

मणिद्वीपनीपान्प्रपश्याम्बिके त्वं तवापारमोदप्रदा सा च भूमिः ।
सुधासिन्धुकल्लोलशीतातिवातो महानन्दकन्दं विधत्ते महेशि ॥ १६ ॥
हरिन्मणिनिभेऽद्रिजे तव शरीरकान्त्याधिकं
 समस्तकलधौतजोऽप्यगवरोऽयमप्युन्नतः ।
विभाति हरितप्रभस्समृगपक्षिवल्लीद्रुमः
 प्रपश्य मुकुरेऽम्बिके तव सरूपभाग्याधिकः ॥ १७ ॥
मन्मौलिस्थितचन्द्रकान्तिनिकरैः कान्त्या त्वया शैलराट्
 स्वाम्यापारशिखाभिनृत्तशिखिभिः पुंस्कोकिलानां रवैः ।
सारंगै रुरुकैर्वकैश्चमरिभिः प्रोद्धूतपुच्छैस्सदा
 खड्गानां निवहैर्लुलायजकुलैः प्रोड्डीनदेणीकुलैः ॥ १८ ॥
हरितमणितृणाग्रं सञ्चरन्तश्चरन्ति कनकमयमृगास्ते मुक्तविन्दूचिताङ्गाः ।
रजतनिभकपोता रत्नपादाः कणाशास्स्वकगलरणितैस्ते स्वप्रियापृष्ठलग्नाः॥ १९॥
हंसानांच कुलं स्ववक्त्रजमहामुक्ताफलैः पक्षति-
 व्याधूनात्तदिगन्तकान्तिवहुलास्ते स्वच्छदेहामलाः ।
क्रीडन्ति प्रसभं प्रभूतपयसि प्रोत्फुल्लरक्ताब्जिनी-
 मध्यस्था इव चक्रवाकजकुलं मौनं विधत्ते शिवे ॥ २० ॥
सुखयति मृदुवातोऽप्यत्र भीत्या ममाद्य मृगमदसुमसंस्थैर्गन्धमाद्यत्परागैः ॥

कस्तूरीमृगका अपि द्रुततरं धावन्ति गन्धाशया-
स्स्वस्याङ्गस्थितमप्युमे नहि तरां जानन्ति मूढा इव ।
देहेषु स्थितमप्युमे मुनिसुरा जानन्ति नो मां यथा
तद्वत्तेऽपि मृगा विमूढमतयः कैलासशैले मम ॥ २२ ॥
मृदुतरकेतकधूलीपालीपिञ्जरितशैलवरसानुः ।
खव कोनुसुखेन भजेताप्यलस्था दिविषदो हसंत्येव ॥ २३ ॥
हरिन्मणिनिभाश्शुका वदनरत्नगोमेदका-
स्सुरत्नमणिकल्पिताः कनकहीरनीलप्रभाः ।
वदन्ति नगमौलिगाश्शिव शिव प्रभो पाहिनः
प्रकृष्टदयया दृशा प्रमथनाथ कष्टं हर ॥ २४ ॥
सुशारिकसुकोकिला हर हरेश विश्वेश्वरा-
प्यनाथजनवत्सल पुरहर प्रपश्याद्यनः ।
इति ध्वनिकृतस्सदा शिखरिशीर्षजह्रुता-
स्सुरत्नमणिसन्निभास्तरलकान्तरक्ताक्षकाः ॥ २५ ॥
पश्याद्रिजे किसलयं सुरसालजातं पुंस्कोकिलापलपनेन तुदन्ति भुक्तौ ।
कीराननने परिपतन्त्यलयः प्रकामं जम्बूफलभ्रमजितश्शुक एष मूढः॥ २६॥
पलाशकलिकाभ्रमन्मधुपरागसौख्यादसौ
यथाविषयिणोऽम्बिके सुकृततर्षदुःखाकुलाः ॥ २७ ॥
स्कन्द! वृक्षालम्बितशृङ्खलासुचलिते वैडूर्यमञ्चे शिव-
स्तद्वत्पुष्पककान्तिरागविलसन्मञ्चस्थिता साम्बिका ।
डोलाडोलनकैर्वने विहरतस्स्वैरं शिवौ सुन्दरौ
देवीभिः कलितैस्सुचामरगणैस्सेव्यौ च वृत्तौ तदा ॥ २८ ॥
श्रीचन्दनप्रभवसारविलिप्तगात्रौ चिक्रीडतुर्नगसुमोद्धृतवायुगन्धैः ।
नखमुखविघटितदाडिमीफलोद्यन्मणिनिभवीजवरं ददाति देवी ॥ २९ ॥
स्वकराम्बुजसंस्थकीरवक्त्रच्छदनं वीक्ष्य महेशिशुस्सहासम् ।

कीरोऽपि शंकरमुखाब्जमवेक्ष्य देवीं नत्वा गिरा समभियाचत बालवाचा॥३०॥

देहीश शंकर विभो शशिखण्डचूड माद्यद्रसालकदलीफलसारभंगम् ।
आज्ञापयेति तव नाम वदामि शम्भो विश्वेश चात्तुमिति तस्य गिरा सहासः॥

इन्द्रनीलमणिकल्पितसौधे मञ्चसंस्तुतशशिद्युतिकान्ते ।
तल्पकेऽधिशयितस्य पुरारेः पादपंकजयुगं स्वकराब्जैः ॥ ३२ ॥
रङ्गमण्डलगता मुहुरम्बा वीणया वदति शंकरनाम ॥
रत्नोत्थामलसौधभूमिषु पुरो देवस्य देव्याः पुरो
रुद्राण्यो नवयौवनावृतकुचाः क्रीडन्ति हल्लीसकैः ।
मल्लीगुच्छकचानताननकराः प्रोद्यज्झणन्नूपुराः
कैलासाचलमौलिगास्सुमधुरं गायन्ति नृत्यन्ति च ॥ ३३ ॥

विश्वेश विश्वाधिक दीनबन्धो पाहीश शम्भोदययार्द्रदृष्ट्या ।
पाहि प्रसीद मदमत्तमरालराजमातंगजैत्रगमने जगतां जनित्रि ॥ ३४ ॥

आसप्तलोकावधि शैलमौलौ स्वशेखरापारत्विषा तिरस्कृतौ ।
तत्रस्थ एव प्रणमन्ति देवास्तौ चन्द्रसूर्यौ गतिवर्जितौ भयात् ॥ ३५ ॥
महेश्वरापारदयाविधानं सुधाब्धिकल्लोलितपादपीठम् ।
समुल्लिखन्तं शिखरैरपारैर्लोकास्त्वहो तं कलधौतशैलम् ॥ ३६ ॥
शोशुभ्येत सदैव तत्र नदिवा रात्रिर्महेशाश्रया-
न्नोगन्धर्वमरुद्गणा मुनिगणा नो ब्रह्मविष्णू सुराः ॥ ३७ ॥
नो वाति वायुः प्रसभं हि तत्र तिग्मांशुशीतांशुरुभौ हि बिभ्यतः ।
अग्निर्नदृष्टस्स्वशिखावलीढं कक्षेषु तत्कीचकवेणुसङ्घे ॥ ३८ ॥

एको रुद्र इति श्रुतिस्तदितरो नास्त्येव तत्रागमे
देव्या दत्तकरस्सदैव पशुपस्तत्रैव सञ्चार्यसौ ।
पश्यन्लिङ्गकदम्बकं गिरिवरं फुल्लद्रुमाणां गणं
तत्रापारसुगोपुराङ्गणगतस्स्वैरं सदा शङ्करः ॥ ३९ ॥

तत्प्राकारवरैकरक्षणचणास्सन्त्येव कोट्यो गणा
रुद्राण्यश्च चरन्ति तस्य सविधं नान्ये गणा वा सुराः ।
वातोऽपि न प्रचलति द्युमणेः करा वा
सोमस्य सुन्दरकराः प्रभवन्ति नैव ॥ ४० ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासमौलिवर्णनन्नाम
अष्टादशोऽध्यायः ॥ १८ ॥

---

कैलासवर्णनन्नाम एकोनविंशोऽध्यायः.

स्कन्दः—

तदन्तरास्ति प्राकारो वैडूर्यमणिकल्पितः । राजल्ललामवृषभैर्वैडूर्यमणिकल्पितैः॥ १ ॥
तत्सूत्रसंक्रमाक्रान्तिकाञ्चिताखिलपर्वतः। निष्टप्तरजतोद्भास्वत्तत्कान्त्या पीतवत्स्थितः
तत्र पुष्पवनन्दिव्यन्नानारत्नगणान्वितम् । नीलगोमेदहीरैश्च पुष्परागैः प्रवालकैः ॥
कुरुविन्दैर्मरकतैर्मुक्ताभिरभिशोभितैः । नीलोत्पलामलजलं कासारमभितस्स्थितम् ॥
प्रवालैस्स्तवकैश्चैव कलिकोत्फुल्लपुष्पकैः । तत्तद्रत्नैश्च संक्लृप्तैरिन्द्रचापनिभप्रभैः॥ ५॥
विततान्च्छमणिभ्राजच्छाणोल्लीढकरप्रभैः । द्योभूमिसर्वलोकेषु तादृशं न वनं क्वचित्॥
सौन्दर्यसारसर्वस्वं रम्यं मञ्जुलमारुतम् । सुवर्णचम्पकोत्फुल्लधूलिकोद्यत्समीरणम् ॥
तद्वातस्पर्शनेनापि ब्रह्मविष्णुमहेश्वराः । कृतकृत्या भवन्त्येव तदा धन्यतरास्सुराः ॥
हरिन्मणिनिभाकारैः केत्र्यालम्बिततत्सुमैः।प्रफुल्लतत्सुमामोदधूलीकेलिसुगन्धिधृक्॥
पाटलामोदवहलमिन्दीवरगणावृतम् । भ्रमत्सारङ्गसंलूननवशाड्वलसुन्दरम् ॥ १० ॥
शष्पावृतेव भूर्भाति महामरकतोपलैः। स्वच्छन्दचमरीपुच्छवीजनोद्गीतषट्पदैः॥ ११॥
कर्णिकारैस्स्वर्णवर्णैर्नभो भाति हिरण्मयम् । शुभ्राभ्रचयसंकाशकाशमन्दारसंयुतम् ॥
रक्ताच्छमणिमन्दारफुल्लकोरककैश्शुभैः । तद्गन्धवन्धुरामोदशीतवन्धुरमारुतम् ॥
तमालसालजोद्दामघर्घरारावभीषणम् । आरग्वधसुमालोत्थफुल्लमञ्जरिशोभितम् ॥
शुकतुण्डप्रभास्वच्छपलाशैर्गुच्छसुन्दरैः । फुल्लपुन्नागजैश्चैव सुमैस्तत्कोरकैरपि॥ १५॥
नभो विकीर्णताराभं भाति मुक्ता इवाधिकम् ।
देवदारुसुमैः फुल्लैः कदम्बालम्बिगुच्छकैः ॥ १६ ॥

शेफालिगुच्छैराताम्रैः कुब्जाम्रनिविडच्छदैः । कुरवामोदवकुलमञ्जरीभिर्मनोहरम् ॥
उद्यदिन्दुकरस्वच्छगुच्छैरल्लकसल्लकैः । भल्लभल्लातकोद्दामपारिभद्रोद्भवैस्सुमैः॥ १८॥
तमालपिप्पलीगुच्छसुमामोदितमारुतम् । उग्रगन्धायितदिशासमूहैर्मधुकोद्भवैः॥ १९॥
पतत्सुमैश्च भूर्भाति तारा इव नभश्च्युताः। पुण्यक्षयादिवोत्तुङ्गा यथा सुकृतिनोऽफलाः
पनसोद्दाममूलस्थ फलभारावनामितम् । सुवर्णकन्तुकाकारविलसल्लिकुचैरपि॥ २१॥
सौरभामोदपक्वोद्यच्छलाटुकुलकैरपि । उत्तुङ्गमातुलिंगैश्च स्थूलनिम्नोरुशाखकैः ॥
रसगर्भरसालैश्च कम्रकाम्रजजैः फलैः । महानीलमणिप्रख्यैर्जम्बुकारञ्जकैर्वृतम्॥ २३॥
आनम्रदाडिमोत्फुल्लसुमैस्स्फुटिततत्फलैः। अंकोलकैश्शिरीषैश्चाप्यर्जुनभ्राजिगुच्छकैः
पक्वबिल्वफलामोदतत्सुमोद्बुद्धगन्धितम् । पतत्कपित्थनिवहैस्तथैवामलकादिभिः ॥
नारङ्गरञ्जितोत्तुंगशाखिशाखाभिरन्वितम् । वादामाक्रूरखर्जूरतत्फलानम्रशाखकम्॥
जातीफलरसास्वादमाद्यत्कपिकुलाकुलम् । रम्यतालीवनोद्भूतगन्धानन्दितमारुतम् ॥
हरिद्रत्ननिभात्यच्छसुपीतकदलीदलैः । रम्यसप्तछदोपेतं नारीलफलगुच्छकैः॥ २८ ॥
सितासितफलानम्र मारुतोद्धूतमौलिभिः । उद्यद्द्युमणिगर्भाभपूगीफलभरैर्द्रुमैः॥२९॥
स्तवकानतिसम्फुल्लराजत्कुटजपंक्तिभिः । कुटजैर्वटजैश्चैव कूटागारमिव स्थितम् ॥
विभ्राजद्धवलात्यच्छ बालार्कसुमकेसरम् । नीपानोकहजात्युच्चैरशोकैश्शोकनाशकैः ॥
प्रभातबुद्धसद्धोभिद्रुमछदरवाण्डजैः । वकुलैर्धवकेलैश्च केसरामोदसुन्दरैः ॥ ३२ ॥
तक्कोलांकोलकैश्शुभ्रैस्सुगन्धवदरीधवैः । सुगन्धवद्धजम्बूकसुगन्धामोदिमारुतम् ॥
कन्दर्पवर्ष्मसंकाशकाश्मीरद्रुमकेसरैः । तगरामोदवहलं कृष्णागरुनगैर्युतम् ॥ ३४ ॥
लोध्रवध्रजभेरुण्डकाण्डताण्डवगुच्छकम् । वटन्तपस्यन्तमिव सटाजालाञ्चितं स्थितम्॥
खदिरैर्बदरैश्चैव प्रवाला इव तत्फलैः । कोविदारमहाशाखाविदारितनभोघटम्॥ ३६॥
भल्लालिंगितसन्मल्लीसुमबन्धुरमारुतम् । वेणुसङ्घर्षणरववीणानादोपमं वने ॥ ३७ ॥
सल्लकीसल्लयैर्युक्तं मल्लीवल्लीकृतांगकम् । हल्लीसल्लास्यंकुर्वद्भिश्शाखाभिः फुल्लभल्लकम्
गन्धगन्धितदिक्चक्रं वक्रांगं शाखिसुन्दरम्। वैकंकतं विकर्षन्तंनभोमण्डलगानग्रहान्
उडुपोडुगणाकारफुल्लद्दलिततत्सुमम् । नल्वमात्रमहाशाखं तद्वनविपिनं महत् ॥ ४० ॥
चन्दनैर्नयनानन्दिसुमगन्धिसुमारुतम् । आन्दोलितमहाशाखलम्बिताधोमुखस्रजम्॥

गुच्छगुञ्जदलिव्रातं रसदान्दोलिसुन्दरम् । नववाटीपरिवृतं रत्नकान्तिझरीभरम् ॥
तत्राच्छरत्नस्फटिकराजज्जलतरंगकम् । वनसौरभशीताच्छशीकरासारमारुतम्॥ ४३॥
गन्धगन्धितपद्मोत्थरजःपटलसुन्दरम् । नीलनालीकसुभगं सरस्तत्र विराजते॥ ४४॥
रत्नसोपानसम्बद्धं चलदारक्तहल्लकम् । तन्मध्यसौधशृंगाग्रकलशोज्वलदीप्तिमत् ॥
विद्रुमामलबिम्बोद्यत्कनकान्ततरंगकम् । सहस्रस्तम्भविततं पीठगोपानसीयुतम्॥४६॥
राजत्प्रवालवृषभं दोधूयितपताककम् । तत्रोज्वलन्महारत्नवेदिकासमलंकृतम्॥ ४७॥
इन्दुकान्तितिरस्कारिहीरधारासमावृते । सिंहासनवरे देव्या सहास्ते वृषभध्वजः ॥
जिघ्रंस्तद्वनसंफुल्लसुमगन्धं मनोहरम् । मरालकुलसञ्चारं सारसानां रवं हरः॥ ४९॥
देव्याः पश्यन्मुखाम्भोजं कालं नयति शंकरः।तत्रैव रुद्रकोट्योऽपि शूलासललसत्कराः
प्राकारं परिरक्षन्ति वहिस्तत्रान्तरे तु न । तत्प्राकारं तद्वनञ्च नलिनीन्ताञ्च सुन्दराम्
ते रुद्रा देवदेवस्य चन्द्रचूडस्य शासनात् ॥ ५२ ॥

ईश्वरः—

गिरीन्द्रशिखरस्रुतैर्हरितपीतनीलारुणै-
स्स्रवज्झरिभरीभरैर्निखिलरीतिनिर्वासितैः ।
स्रवत्करटिकुम्भवत्पटुमदप्रभोऽयं गिरि-
स्तमालतिलकैर्धवैस्तिलकितो गिरिर्गैरिकैः ॥ ५३ ॥
नगेन्द्रवरचारणैः प्रतिकृतैश्च सद्वारणै-
र्महेंगुदमनोहरज्वलिततेजवल्लीगणैः ।
विभाति मम शैलराड्गिरिवरांगकन्ये भज ॥ ५४ ॥
तद्बिल्वमूलपरिकल्पितरत्नवेदिमध्यस्य रत्नकमलामलकर्णिकायाम् ।
दृष्ट्वा गिरीन्द्रतनयाञ्चितबाहुरीशश्चन्द्रोपलाकलितलिंगवरेषु देव्या ॥ ५५ ॥
समर्चयति दूर्वया हरिमणिप्रभाभातिक-
प्रकृष्टतरकान्तया द्युमणिबालकान्तिप्रभौ ।
नवारुणसु बिल्वजैश्छदवरैर्मुहुश्शंकरः
फलैश्च रसगर्भितैर्विमलजम्बुनारंगकैः ॥ ५६ ॥

सुदाडिमवरोद्भवैर्विदलितप्रभाभासुरैः
कपित्थकदलीफलै रसरसालपक्कैः फलैः ।
निवेद्य गिरिजाकरे दधति रक्तकञ्जाधिके ॥ ५७ ॥
शरण्यो देवेशः प्रथितमहिमा वेदशिखरै-
र्नतानामुद्बोधे प्रकटवरुणो वारणशिराः ।
प्रचण्डोच्चण्डाण्डस्फुटनविधिजोद्दण्डकुहरो
हरोच्चण्डाखण्डप्रमदमुदितस्ताण्डववरः ॥ ५८ ॥
मुकुन्दब्रह्मेन्द्रैरमरतिलकैस्सेवितपदो
गणैश्चण्डीशाद्यैस्सुरवरतुहुण्डादिगणपैः ॥ ५९ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णनन्नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

---

शिवगौरीसंवादे क्षेत्रवर्णनन्नाम विंशोऽध्यायः.

स्कन्दः—

तत्रान्तरेऽपि प्राकारो लक्षयोजनविस्तरः । हीरसारमहाधारातिरस्कृतशशिद्युतिः॥१॥
कैलासाचलकान्त्या च तद्धीरप्रभयापि च । सुधाम्बुधिमहावीचीविम्बितेन्दुकरैरपि ॥
महेशमुकुटोद्दामचन्द्रास्फारकलादिभिः । भाभासितदिशास्तोमस्तत्प्राकाराग्रशृंगकैः॥
चन्द्रसूर्यग्रहास्ताराविद्युतोऽप्यनलो द्विजाः। तिरस्कृतास्तत्प्रभाभिस्तद्गोपुरवराग्रगाः॥
महीहीरकसंक्लृप्ता नीलनेत्रा विषाणिनः । तदग्रगोपुरं शुभ्रं पञ्चलक्षप्रमाणकम् ॥ ५ ॥
आसप्तपातालतलादुत्थितं हीरकल्पितम् । कपोतव्यालिपालीभिर्देवसङ्घविराजितम् ॥
रुद्रावतारक्रीडाभिः कलशैर्वृषभैरपि । तस्मिन्नूर्द्ध्वतले देव्या दिव्यसिंहासनाश्रयः॥७॥
कैलासशैलवरगोपुरहीरसौधे दिव्यैरनेकमणिकल्पितविष्टरस्थः ।
देव्यैवदत्पशुपतिस्सुमहच्चकालं देवादिलोकमखिलं कथयत्युमायै ॥ ८ ॥

ईश्वरः—

कैलासशैलशिखरस्थितदिव्यलिंगसङ्ख्या हरीन्द्रविधिभिस्त्वहिनायकेन ।

गण्यन्तएव दिवि तारकपांसुजालं धारापि वर्षजनिताश्शृणु शैलकन्ये ॥ ९ ॥

लिंगानां कुलमेतदेव गिरिजे मन्दारमालार्चितं
विल्वीकोमलपल्लवैरभिनवैर्दूर्वाङ्कुरैश्शंकरि ।
काले पुण्यतमे प्रदोपसमये वीताघसङ्घे शिवे
कार्यं सर्वसुरासुरैरपिमया रत्नप्रभादीपितम् ॥ १० ॥

कैलासाचलकेलिंगमण्डलमिदं भास्वज्जटामण्डलं
गंगातुंगतरंगशंकितमहाकाकोदराकल्पकम् ।
मन्दारद्रुमपुष्पसञ्चयमहाविल्वादिमल्लीसुमै-
रत्नागारसुकुम्भमध्यविलसन्मध्ये स्थितं पश्य वै ॥ ११ ॥

विल्वानां मूलभागे विलसति मणिभिश्चन्दनैश्शीतशीतैः
कर्पूरैश्च सुगन्धिते हरिगणैरामोदजिघ्रासुभिः ।
नित्यं वेष्टितमौलिभागममलैस्तच्छीतवाताशनै-
स्सेव्योऽहं करुणापयोनिधिरुमे लोके स्वलिंगोच्चयम् ॥ १२ ॥

स्वीयैर्मौलिशशांकदीधितिचयैर्गांगैरिवाम्भोभरैः
कूजत्कोकिलसद्द्विजैरिव महारुद्रादिसन्मन्वितैः ।
सर्वांगेष्वभिषिक्तमैश्वरमहालिंगश्च्युतत्पत्रकै-
र्वातैरेव विलूनवृन्तपतितैस्संपूजितं पश्य मे ॥ १३ ॥

एषामग्रभुवि प्रचण्डजरया प्रोच्चण्डपिञ्छोत्थितै-
र्वातैरेव शिखण्डिमण्डलमिदं प्रोच्चण्डसत्ताण्डवम् ।
केकालापमनोहरञ्च विपिने सन्नर्तकीनां दशां
प्राप्यैवोद्गायतीव प्रथितबहुरसं पुण्यसङ्घैः किलेदम् ॥ १४ ॥

अस्मिन्विल्ववने नवारुणदलाक्रान्तोरुशाखान्विते
प्रच्छाये चमरीगणाः पतनतोभीत्यैव मूलं गताः ।
तत्रत्येषु पतत्पतत्रनिचयोत्संगाकुलत्पत्रकैः
पुच्छैश्चामरपंक्तिवच्छकलितैर्वीजन्ति लिंगान्युमे ॥ १५ ॥

सन्तुष्टा भव शैलनन्दिनि शिवे नातः परं विद्यते
मल्लिंगार्चनमेवसाधनपरं मुक्तिप्रदं शाश्वतम् ।
किं यज्ञैरखिलव्रतादिचरणैः किं दानसङ्घैर्जपै-
रेतत्किं वितनोति मुक्तिरिति या साधीर्हि दुःखात्मनाम् ॥ १६ ॥
उद्यद्बालदिवाकरेन्दुसदृशैः कैलासशृंगाग्रगै-
र्माणिक्यामलहीरकैश्च कलितैस्सौधाग्रशृंगैश्शिवे ।
तत्तल्लोकनिवासिभिस्सुरगणैस्सञ्जातविस्मापकै-
र्नानासूर्यशशांकसम्भवमहाकान्त्याधिकं शोभते ॥ १७ ॥
कैलासाचलसानुपादशिखरे सत्याधिके मेरुगा
लोकालोकिन एव तत्र विहिता दिक्पालसङ्घाश्शिवे ।
ब्रह्माविष्णुमहेश्वरामरवरास्सप्तर्षयोऽमीग्रहा-
श्चौत्तानात्मज एष भान्ति नितरां तारागणा राशयः ॥ १८ ॥
ते मेरुं परितो भ्रमन्ति गिरिजे पश्याधुना सन्ततं
तत्तद्गोपुरमध्यभागविलसत्तौर्यत्रिकाणां स्वनैः ।
तत्तत्कालशिवार्चनेषु कलितैर्भेरीजशङ्खारवैः
कैलासोऽप्ययमीश्वरेश्वरि महासन्नादनादान्तरः ॥ १९ ॥
मेघानां शतकैरपि प्रमुदितो घोषैकमूषामुखः ॥
वसुधाधरकन्दरान्तरस्था रदखण्डद्विरदाः किशोरसिंहाः ।
स्वककाधरकेसरैर्नगेन्द्रैः परिनिन्दैति विदीप्तमित्युमेऽद्य ॥ २० ॥
रविरथ तुरगोत्थह्रेषघोषं परिशृण्वन्ति इमे हयारिसङ्घाः ।
विनताननकर्णशृंगनेत्रास्तटिदुत्थाखिलघस्मरैकरावाः ॥ २१ ॥
खरखुरपरिघट्टनोत्थधूल्याजलदनिभं रविमम्बिकेऽद्यपश्य ।
रविरपि स्वतनूजमुख्यवाहैर्गिरिसंस्थैरभिजातलज्जयेव ॥ २२ ॥
प्रसभं मेघगणं विशीर्य हस्तैर्विजितोऽस्मीति दिशं प्रयाति यामीम् ।
मदालयोऽयं कलधौतशैलस्त्वदग्रतो भाति सुवर्णशैलः ॥ २३ ॥

तदूर्ध्वमौलिस्थितलोकजालं विलोकयाथो विहितन्नगस्य मे ॥ २४ ॥

ब्रह्माप्येष सृजत्यजस्रमखिलं लोकं हरिः पात्ययं
रुद्रस्संहरतेऽनिशं सुरवरैर्दिक्पालसङ्घैश्शिवे ।
सत्यस्थोविधिरेष विष्णुभवनं वैकुण्ठमालोकया-
पीशानस्य पुरीयमद्रिवरजे चेन्द्रस्य चैषा पुरी ॥ २५ ॥

एषा संयमिनी पुरी सुविहिता क्षीरोदधेः पारतो
गंगैषा सरितां वरा त्रिजगतां पापापहा मे पुरी ।
लिंगालङ्कृतकोटिकार्बुदनिभा वाराणसीज्या शिवे
विश्वेशाख्यमहेशलिंगवरगं देव्यन्नपूर्णा त्वया ॥ २६ ॥

सुरासुरा यत्र वसन्ति मुक्तये वसन्त्यनिष्टं परिहाय मत्सरम् ।
यतो न मुक्तं हि मयाविमुक्तं वदन्ति वेदा अपि तत्प्रभावम् ॥ २७ ॥

गंगाद्वारमिदं पितुस्तव महामौलौ च केदारकं
चैषा सा व्रतपाटलीनगरगायस्यास्सुता मानसाः ।
गंगासूर्यतनूजयोश्च विहितस्संगोऽत्र मुक्त्यै नृणां
स्नातानांश्च सदा सरित्पतिवरेणालिंगिता जाह्नवी ॥ २८ ॥

गंगासागरसंगमोऽत्र गिरिजे सोमेश्वरोऽयं सदा
सेव्यानां सफलं करोति च मनस्सन्तापपापापहम् ॥ २९ ॥

एषप्रयागस्सकलापगाश्रयो गंगापि यत्राम्बुजमित्रजायुता ।
तत्राप्लुतानां दिवि देवि वासो विसर्जितांगा यदि तेषु मुक्तिः ॥ ३० ॥

सा ब्रह्मणो वेदिरनन्तपुण्यदा गया पितॄणां प्रमुदे भवानि ।
पश्याद्य तत्रैव पदं मदीयं सुरद्विजानान्तु तथैव वैष्णवम् ॥ ३१ ॥

तन्नैमिषं पुण्यतमं महर्षिभिस्समाकुलां तां बदरीं विलोकय ।
सचित्रकूटस्सुरसङ्घसम्भृतस्सप्तैव पुर्योऽत्र विमुक्तिहेतवः ॥ ३२ ॥

एतद्द्वादशलिंगसङ्घमगजे तत्तत्पुरीषु स्थितं
चोङ्कारो घुसृणेश्वरोऽयमगजे श्रीकामनाथोऽम्बिके ।

असौ महाकालवरो महेशो नागेश्वरो वेणुवनैकसंश्रयः ॥ ३३ ॥

एषा शर्मदनर्मदात्रकलिता लिंगैकसङ्घावृता

शोणोऽयं सरितां पतिं प्रवहते लिंगैकसङ्घाश्रयः ।

पुण्या वाहुनदी सुपुष्करमिदं पुण्यं प्रभासं त्विदं

मल्लिगामलपातकं गिरिवराज्जातेऽमरं कण्टकम् ॥ ३४ ॥

श्रीरुद्रोऽमरकोटिरेष विहितः पिण्डारकं मत्प्रिय-

श्चैतत्क्षेत्रवरं कुरुप्रभवजं विन्ध्यो ह्ययं शैलजे ।

एष श्रीशैलमौलि र्भवजनितमहापापसङ्घैकहन्ता-

चैषाऽ्यम्बकशैलजा सुविहिता गोदावरी निम्नगा ॥ ३५ ॥

कृष्णा चापि सरिद्वराब्धिनिरता लिंगावृता पुण्यदा ॥ ३६ ॥

तत्प्रान्तसंस्थो घटजो मुनीशो मया पुरा प्रेषित एव विन्ध्यहृत् ।

पश्चादथाम्भोनिधितीरसंगतं गोकर्णमेतन्मम लिंगमम्बिके ॥ ३७ ॥

अरुन्धदेषोऽमरमार्गमम्बिके प्रजातरोषः कनकाचलेन ।

विन्ध्योऽप्ययं शैलवरस्त्वदाश्रयात्पुण्यं प्रतिष्ठानपुरं सुपुण्यदम् ॥ ३८ ॥

कोलासुरेणात्र समीहिता पुरी तपस्यता तस्य वधात्त्वया जिता ।

एषोऽरुणाद्रिः प्रथितप्रभावो वृद्धाद्रिरप्येव ममेष्टवासः ॥ ३९ ॥

गोपर्वतश्चात्र विभाति शैलः काञ्ची जगत्काञ्चितलिंगसंयुता ।

त्वदाश्रयात्कान्ततमा च सैव त्वदर्चनार्थं हरिणा च सेविता ॥ ४० ॥

शेषाचलस्त्वेष सुताश्रयो मम तदुत्तरे भाति महेशि पश्य ।

कैलास एषोऽभिमतो हि दक्षिणस्सह्याचलो ह्येष यतो मरुद्वृधा ॥ ४१ ॥

सह्यापगातीरगलिंगमण्डलं महाप्रभावं किल शैलकन्ये ।

कवेरकन्यातटलिंगसङ्घं श्रीकण्ठरत्नाद्रिकमातृभूतम् ॥ ४२ ॥

तज्जम्बुलिंगञ्च हरिस्ततोऽपि पञ्चापगेशाख्यमहो भवानि ।

कुम्भेश्वरं लिंगमिदं मनोज्ञं तदर्जुनञ्चापि मयूरलिंगम् ॥ ४३ ॥

१. भगवति जनता इति पाठान्तरम् ।

12

श्वेतेश्वरं तत्प्रथितं विमुक्तिदं तदुत्तरे यद्विरजं विशोकम् ।
हृत्पुण्डरीकं विमलं ममाश्रयं यत्रैव मे नर्तनमम्बिके त्वया ॥ ४४ ॥
सदैव दृष्टं प्रथिते प्रदोषे क्षाराम्बुधेस्तीरगतं सुपुण्यदम् ।
वेदाख्यसत्काननमब्जसंज्ञं लिंगावृतं तत्कमलालयाख्यम् ॥ ४५ ॥
श्रीसुन्दरं विष्णुपुरञ्च देवि ततोऽपि तद्वीपगगन्धमादने ।
नगोत्तमे लिंगवरं ममाम्बिके ॥ ४६ ॥
हरिः पुरा भार्गवजेन शप्तो भार्यावियुक्तोऽप्यहनत्सरावणम् ।
तेनैव तत्पूजितमम्बिकेऽद्य पश्याधुना सेतुवरं सुपुण्यम् ॥ ४७ ॥
तत्पश्चिमे पुण्यतमं ममाम्बिके हालास्यसंज्ञं वरवेणुसंज्ञम् ।
तत्रैव ताम्राचलसंगतोऽब्धिस्तत्तीरसंस्थान्यपि देवि पश्य ॥ ४८ ॥
लिंगानि तुंगानि मनोहराणि महेन्द्रशैलो मलयश्च शैलः ।
एतानि ते क्षेत्रवराणि देवि दृष्टानि च श्रोत्रवरैश्श्रुतानि ॥ ४९ ॥
पापाद्रिमौलेर्भिदुराणि पश्य क्षेत्रेक्षणेनापि विमुक्तपापाः ॥ ५० ॥
क्षेत्राणाञ्च पतिस्सदैव कथितो वेदेषु पश्यादरा-
दारात्सर्वजगद्गतोऽपि विदुषां दुष्टात्मनां शैलजे ।
कष्टान्यप्यसमीक्ष्य योऽत्र विहितः क्षेत्रेषु वा सादर-
स्तस्मै तां वितरामि मुक्तिमगजे रुद्राक्षभस्मादरे ॥ ५१ ॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादे क्षेत्रवर्णनं नाम विंशोऽध्यायः ॥ २० ॥

---

## शिवगौरीसंवादे प्राणिगतिनिरूपणे एकविंशोऽध्यायः.

देव्युवाच—

के गच्छन्ति महादेव ह्येते देवगणाश्शिव । भित्त्वैव मण्डलं भानोः क एते पुरुषोत्तमाः
सोमधाम प्रविष्टाः के निवृत्ताश्च ततः पुनः । धूमलेखानिभास्ते के कास्त्रियस्ता वराननाः
के ते गच्छन्ति मुदिता विमानैरर्कसन्निभैः । ताड्यमानाः कशाघातैर्मुद्गरैरायसैर्नराः ॥

स्त्रियो बालाश्च पुरुषैर्विकृतांगैः प्रहारिणः। पाशबद्धा विकर्षद्भिर्यान्ति के दक्षिणां दिशम्
तद्वदाद्य महादेव जगच्चक्रप्रवर्तक । सृष्टिस्थित्यन्तकार्याणां प्रवर्तक निवर्तक ॥ ६ ॥

स्कन्दः—

इत्थं देव्या तदा पृष्टो महादेवो महेश्वरः । जगाद गिरिजां तत्र तस्मिन्कैलाससौधके ॥
सम्पश्यन्देवयानानि पितृयानानि शङ्करः ॥ ७ ॥

ईश्वरः—

पश्योन्निद्रसुरक्तपंकजलसद्वक्त्रे सुनीलोत्पल-
भ्राजत्फुल्लविलोचने हि यतयश्चोग्रद्रवेर्मण्डलम् ।
भित्वा यान्ति समुल्लसत्सरसिजप्रोद्भूतलोकं शिवे
वेदान्तार्थविचारसारहृदयाश्श्रुत्वा गुरोर्वक्त्रतः ॥ ८ ॥
तत्वंशब्दमसीत्यपीहच महावाक्यार्थतात्पर्यत-
श्शब्दब्रह्मपराश्च ये यद्विवरा गच्छन्ति ते ब्रह्मणा ।
मुक्ता नैव निवर्तका हि गिरिजे तन्ब्रह्मलोकादुमे
ये वै त्वन्तिमकालशब्दत इमे मन्त्रेण कर्मन्दिनः ॥ ९ ॥
ते वै सूर्यगतिं गता अपि शिवे तेनातुराः क्षीणतो
विद्युत्पुञ्जसमाः पतन्ति च ततो ब्राह्मण्यमासाद्य ते ।
कृत्वा चाश्रममन्तिमं पुनरुमे वेदान्तनिष्ठा गुरो-
र्वक्त्राब्जच्युतवाक्यतो द्विजावरा नालीकजातासनो
लोकंप्राप्य विमुक्तये च सततं ते चाप्युपासन्त्यपि ॥ १० ॥
एते चागमसंगताश्च हि सदा यज्वानमित्याहुतिं
वैतानेषु हुताहुतीभिरधुना नीताश्च ते पूजिताः ।
विद्युत्पुञ्जसमप्रभाभिरभितो ह्येहीति च प्रार्थिता-
श्चन्द्रासारकरैस्सदैव नितरां यान्त्येव तद्धामतः ॥ ११ ॥
नित्याग्निहोत्रविधिपूर्णमसादिदर्शचान्द्रायणैश्च पशुभिस्सुचतुर्मसेज्यैः ।
सौत्रामणीभिरथ चेष्टिसमूहजातैस्सोमैस्तथैव कठकाग्निचितो द्विजाग्र्याः ॥

एकाहाहीनसत्रैर्यजति च सततं चाग्निचेता द्विजोयो
यज्वा चारुणकेतुतोऽपि नगजे यात्येव चन्द्रांशु तत् ॥ १३ ॥
किंपाकयज्ञगतिभिस्स्मृतिजातधर्मैः पाको भवत्यतितरां सुकृतैश्च पाकैः ।
किंपाकसेवितजलेन किमत्र सारः किंपाक एव फलतो भवतीति मन्ये ॥
ये राजसूयनरसर्वगवाश्वमेधैर्मेधाधिपश्च सकलाधिपमाद्रियानाः ।
ये सप्तहोतृविधियाजनतो भवानि सूर्यातिवाहिकगतिं सुकृतैः प्रयान्ति ॥
इष्टापूर्तं धर्मइत्येव यो वै मत्पादाब्जध्यानपूजाविहीनः ।
अभ्रं धूमो रात्रिमासार्धमासैर्यान्त्येवान्ते धाम सोमस्य गौरि ॥ १६ ॥
तपश्श्रद्धायोगैर्विविधभववर्णाश्रमरता-
स्ततो नैष्कर्म्येण प्रथितगुरुवेदान्तनिरताः ।
तथैवाह्नोमासाः पुरुषमथवामानवमुमे
गतिं यान्तस्सौरीं मम विविधपूजैव हि नराः ॥ १७ ॥
चन्द्रादभ्रं धूमजालश्च वायुं विद्युद्वर्षं चोषधीनां गणेषु ।
जाताश्चान्नं पूरुषो योऽद्यते यद्रेतो भूत्वा स्त्रैणगर्भे पतन्ति ॥ १८ ॥
ये वै पापाश्श्वाथ चण्डालसर्पा भूदाराणां यान्ति योनौ तिरश्चाम् ।
ये वै पुण्या विप्रवाहूरुजाताश्शूद्राः पुण्यापुण्यगर्भेषु देवि ॥ १९ ॥
इष्टापूर्तविमोहिता वहुतरा अन्यार्चनध्यानिनो
नान्यच्छ्रेय इतीव मानसरसा बालाः पुनर्मन्यते ।
प्लवाश्चैते अदृढास्सर्वधर्मा यज्ञाश्चैते तर्तुमम्बे भवाब्धिम् ॥ २० ॥
दीक्षाभिस्तपसा व्रतैश्च नियमैः कृच्छ्रैश्च दानैस्तथा
योगैर्वा श्रुतिपाठनैश्च पठनैरिष्टैश्च पूर्तैश्शिवे ।
वेदान्तार्थविचारनन्दितमहाकर्मैदिवर्यैश्शिवे
वर्णी चापि गृही वनी च सततं तत्प्रोक्तधर्मादरः ॥ २१ ॥
यत्प्राप्नोति फलं च लोकमखिलं भूयस्ततोऽप्युत्तमं
कैलासं समवाप्य मत्पदमहाध्यायेन सम्प्राप्यते ॥ २२ ॥

मखमुखसुखसोमजातधारां शिखिशिखविततां तथाज्यधाराम् ।
लखलखितमुखास्तथेन्द्रलेखाखगपतिवाहयुताखुवाहयुक्ताः ॥ २३ ॥
शिखिवाहाग्रसरा विमानयुक्ताः परिपीत्वा हरिभिर्विमानवर्यैः ।
अभियान्त्यद्य विलोकयाम्बनाकं परिपश्यामलपङ्कजास्यनेत्रे ॥ २४ ॥
सुरसङ्घैर्मुदितप्रपीतसोमा विहरन्ति स्वगणैश्च नन्दनोत्थैः ।
सुमजालैश्च सुचन्दनार्द्रगात्रा विहरन्ति स्म विमानवर्यसंस्थाः ॥ २५ ॥
एते यज्वन एव केवलमुमे कर्मैकनिष्ठाश्शिवे
सन्त्यक्तान्यविधिप्रदानितमहादानैकनिष्ठाः परे ।
ते वै चन्द्रमसं प्रयान्ति नगजे धूमादिमार्गेण वै
यातायातदकर्मजातमखिलं भुक्त्वा पतन्त्यंततः ॥ २६ ॥
रम्भारम्भोपमोरुद्वयगतसुभगे भेकपृष्ठाभके ते
कुम्भोद्यत्कुम्भिकुम्भोपमघनजघनेनावृता नन्दनेषु ।
तम्बिम्बोपमसुन्दराधररसं पीत्वातिपीनाङ्गका-
स्तद्वक्षोजविहारसारहृदयाः पश्याम्बिके यज्वनः ॥ २७ ॥
एतद्यौवतमण्डलं कचभरासंसक्तसत्केतकं
भर्त्रालिङ्गनपानपीनमनसं दिव्याङ्गरागांशुकम् ।
नानारत्नविकासिताखिलदिशां स्तोमप्रभाभासुरं
यानैर्याति सदा मुदा पितृवने भर्त्राग्निदग्धं हि तत् ॥ २८ ॥
गच्छन्ति पश्य मुदितास्सुरचामरौघै-
स्संवीजितास्सुरसशक्रसदो विमानैः ।
गोभूमिवस्त्रान्नसुवर्णकुप्यरौप्यप्रदा धान्यमहीसुरत्नदाः ॥ २९ ॥
विप्राग्रहारवनरोपणवापिकाभिः पान्थान् खरोग्रकिरणैश्श्रमभारखिन्नान् ।
खिन्नाननाङ्गान् सुखशीतवातैः कन्यान्नपानादिसुपादसेवनैः ॥ ३० ॥
विश्रामयन्ति क्षणमम्बिके ये शालासु ते यान्ति शिवेऽद्य पश्य ॥ ३१ ॥

१. पाथेयात्मक इति पाठान्तरम् ।

एते वीरभटास्सुशस्त्रनिवहैर्वाणैरभिद्योदितै-
धारासारशरेषु ये सुमुखतः प्राणांस्त्यजन्ति प्रियान् ।
तेऽमी मण्डलमाशु सम्रभमुमे तेजोमणेरन्तरा
यान्त्येवाद्भुतविक्रमार्जितयशस्स्फीताखिलाशातटाः ॥ ३२ ॥
हीराकारसुतारकाकृतिसुखं भुक्त्वेन्द्रलोकं गता
भ्रश्यन्ति क्रमशोऽमरेश्वरि पुनर्नीरे तटे चोपधौ ।
पश्यैतान्त्सुदति प्रकृष्टविभवोपान्ते पुनर्गर्भगा-
नेवं शीघ्रतरं तरन्ति सुकृतैरिष्टैश्च पूर्तैरपि ॥ ३३ ॥
यमभटकृतपाशबद्धहस्ता मुसलविदारितरक्तगन्धमस्ताः ।
सरभसमुपयान्ति चार्तरावैर्यमभवनं परिपश्य पापिजालम् ॥ ३४ ॥
ते वै कालमुखे दयारसहते सन्तप्तभ्राष्ट्रस्थिताः
कुम्भीपाकमुखे शिवे कृमियुतापारे मलानां ह्रदे ।
क्षारापारसुकर्दमे व्रणकिणैर्गात्रैस्तु सन्मक्षिभिः
काकैर्वृश्चिकदन्तशूकनिवहैः खिद्यन्ति पश्याम्बिके ॥ ३५ ॥
एते नारकिणस्सदोदररता दारैः परैर्मैथुना
नानापातकसंयुता गुरुजने शैवे च सन्दूषकाः ।
स्तेनाः पान्थहराः परान्ननिरता दुर्वृत्तदुष्टालयाः
पाषण्डा भुजयोर्महायसवरैस्तप्तैश्च चक्रैर्युताः ॥ ३६ ॥
येषां फालतलं त्रिपुण्ड्ररहितं ये रुद्रजाप्योज्झिता
ये लिङ्गार्चनसाधनादिविमुखा ये शम्भुनाम्नोज्झिताः ।
ये रुद्राक्षविधारणे च विमुखाः पञ्चाक्षरेणोज्झिता
ये मत्क्षेत्रनिवासहीनमनसो भक्तेषु सन्दूषकाः ॥ ३७ ॥
मां विश्वाधिकमीश्वरं त्रिजगतामाधारभूतं शिवं
विष्णुब्रह्ममरुद्गणैस्समुमे पश्यन्ति तान्पश्य वै ।
ये वै प्रदोषपरिपूजनतो विहीना ये वा नरा मम निवेदितभुक्तिवर्ज्याः ॥

तेऽमीकालभयं प्रयान्ति नरके दुःखाकुलाः पातका-
कल्पेनापि विमुक्तिरेव सततं नास्तीति मन्ये शिवे ।
शिवालयविभङ्गकाश्शिववनादिपुष्पाहरा-
श्शिवद्रुहजनार्चका मयि सदा विनिन्दारताः ॥ ३९ ॥
तएव यममन्दिरान्तरनिवासलालाभुजो
भवन्ति कृमिवक्त्रका नरकचित्रवैचित्रके ।
ये रुद्राक्षविभूषणास्सितलसद्भस्मत्रिपुण्ड्राङ्कका
मन्त्रैवेद्यसुधाशनाश्शिवमहादेवेति नामादराः ॥ ४० ॥
मल्लिङ्गार्चनतत्पराश्च सततं रुद्रार्थपारीणका
ये रुद्रामलसत्कथासुरसिकास्ते मद्गणाश्शङ्करि ।
भस्मत्रिपुण्ड्रशिवजाक्षधरास्तएव द्वारा भवाम्बुनिधितारककर्णधाराः॥ ४१ ॥
रुद्राध्यायविचिन्तनैकमतयः पञ्चाक्षरे सादरा-
स्तन्मन्त्रैश्च शिवाभिषेकनिरता लिंगार्चने तत्पराः ।
ते द्वारा मम सम्मताश्च गिरिजे तेषामियं वासभूः ॥ ४२ ॥
श्रुत्युक्ताचारधाराचरणपरिकराश्चान्तरायैर्विहीना
हीनाचारविचारवर्जितमनस्स्वान्तादराश्शाङ्कराः ।
पारावारभवोग्रसारविरसे त्यक्तादराश्शैलजे
ते यान्ति प्रसभं ममालयमिदं नान्येऽत्र सत्यं ब्रुवे ॥ ४३ ॥
कैलासाचलरुद्रमूर्तय इमे चन्द्रार्धचूडाश्शिवे
नीलेन्दीवरलोचनत्रययुतास्ते नीलकण्ठास्सदा ।
मत्पार्श्वैकगणा भवन्ति गिरिजे ते शाङ्करास्सर्वदा ॥ ४४ ॥

स्कन्दः—

इति सर्वगतीश्श्रुत्वा शंकरात्परमेश्वरी । प्रणम्याह महादेवी कैलासवरगोपुरे॥ ४५॥

देव्युवाच—

असारसारं प्रवदन्ति वेदास्त्रियः प्रजानां पशवो हिरण्यम् ।

गुणत्रयीमध्यगता प्ररोचना गुणानि गत्वा न भजन्ति केऽपि ॥ ४६ ॥
प्रवृत्त्युन्मुखा बालकाः कामयन्ते सुखापारबुद्ध्या महादुःखजालम् ।
यथा भक्ष्यबुद्ध्या महापाशजालैर्गृहीतास्तु मत्स्या जले धीवरैश्च ॥ ४७ ॥
कथं त्वत्पदाब्जं खनिं वै विमुक्तेस्समायान्ति दुःखाकुलादुर्मुखास्ते ।
यथा त्वां चिदानन्दरूपञ्च सत्यमसत्यैकलीला भवन्त्येव बालाः ॥ ४८ ॥
शशेशृंगवार्ता यथा स्याद्यथा वा तथा कूर्मदुग्धं मरौ वा यथापः ।
तथा विश्वगाः प्रार्थयन्तीह कामान्मनोमूलमेतन्मनो नास्ति यत्र ॥ ४९ ॥
भूमा त्वं गिरिजापतिश्शिवतरस्सोमार्धधारी हरो
वामार्धाकृतिरप्रमेयविभवस्त्वं सोमधामाननः ।
कामांगारिरकामसक्तहृदयस्त्वं सामचर्माम्बर-
स्त्वामप्राप्य महेश सामरव्रतस्तोषप्रदं शंकरम् ॥ ५० ॥
कामान्प्रार्थयते विमूढहृदयास्तेषां श्रमः केवलं
सामागोमनतो रमापतिलसन्नेत्रांघ्रिरीशस्सदा ।
धूमाकारघनस्थितोऽसि भगवंस्त्वं व्योमकेशस्सदा
धौम्याग्न्यार्चितपादपद्मयुगलश्चोमापतिश्शंकरः ॥ ५१ ॥
कामान्मे दिश गौतमादिमुनिभिर्वेदैस्स्तुतोऽसि प्रभो ॥ ५२ ॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादे प्राणिगतिनिरूपणं नाम एकविंशोऽध्यायः ॥ २१ ॥

---

## शिवगौरीसंवादे कैलासलिंगवर्णनं नाम द्वाविंशोऽध्यायः.

स्कन्दः—

कैलासात्पूर्वतो भाति निष्टप्तकनकप्रभः । लक्षत्रयान्तरं तस्माद्भाति मेरुस्सुरालयः ॥
तदग्रवृषभस्तम्भे ध्रुवाद्यास्तत्प्रदक्षिणे । कालचक्रान्तरा सर्वे भ्रमन्ति च दिवानिशम्
ध्रुवस्सप्तर्षिभिश्चैव राज्ञाचाथ त्रिशंकुना । तदूर्ध्वशैलमौलिस्थास्स्मरशासनशासनात् ॥
नानाद्रुमलतोपेतं रम्यपक्षिमृगैर्युतम् । सरस्तत्रास्ति विपुलं मानसाख्यं मनोहरम् ॥४॥

उत्फुल्लहेमकह्लारहेमपङ्कजभासुरम् । तदग्रमौलौ देवानां ब्रह्मविष्णुहरात्मनाम्॥ ८ ॥
दिक्पालानाञ्च सर्वेषां गन्धर्वावसथाः कृताः। सत्यलोको ब्रह्मणश्च वैकुण्ठो वैष्णवं पुरम्
अंशोनत्रीणि रुद्रस्य पुराणि क्रमशो मुने । तादृशः कनकाकारः पर्यन्ते वर्पभूपितः ॥
कुमुदाकारवद्भाति भूमेः पर्यन्तसागरैः । रत्नसालवनं तस्य मेरोर्मूर्ध्नि सुविस्तरम् ॥

तत्रास्ति गोपुरं शम्भोर्मणिमाणिक्यभूपितम् ।
कदाचिच्छ्रीमहादेवो देव्या विहरति स्वयम् ॥ ९ ॥

शप्तोऽस्ति देवदेवेन तत्प्रान्तो भूधरस्य हि । यो वात्र कश्चित्प्रविशेत्सभवेत् स्त्रीवराकृतिः
वृपस्तम्भनिभो मेरुः कैलासस्यास्य सत्तम। तस्मिन्देव्या वसञ्छम्भुः पार्वत्या रुद्रकैर्वृतः
देव्यास्सखीभिरभितो दिव्यसिह्मासने स्थितः।कदाचिद्देवसङ्घानां पुराणिक्रमशश्शिवः
मेरुमौलौ महालिङ्गमौर्वीशाख्यं मनोहरम् । तद्गोपुरमहासौध राजत्कनकवेदिकम् ॥
तत्र सम्पूजयन्त्येव ब्रह्मविष्णुमहेश्वराः । तल्लिङ्गं बिल्वपत्रैश्च हेमपङ्कजकैरपि॥ १४॥
धूपैर्दीपैश्च ते देवा नैवेद्यैश्च मनोहरैः । प्रदक्षिणप्रणामाद्यैस्स्तुवन्ति च सुरासुराः ॥

देवाः—

कुन्दामन्दमरन्दसौभगमहामन्दारसन्मालिका-
लोलोत्तुङ्गतरङ्गरङ्गितमहागङ्गाम्बुजोत्कैरवम् ।
पर्वानन्दितशर्वरीरमणतोत्तुङ्गाङ्गमौलिं शिवं
ध्यायामोऽद्य महाघसंसृतिभवं दुःखं विहायादरात् ॥ १६ ॥
आरक्तसुन्दरतरैः कुरुविन्दवृन्दरक्तारविन्दमकरन्दपरागमौलिम् ।
वृन्दारवन्दितपदाम्बुरुहं महेशं सुन्दोपसुन्दवरदं जगदादिकन्दम् ॥ १७ ॥
मूर्धोर्द्ध्वं मधुपालिझङ्कृतियुतं चञ्चज्जटानिर्झरं
शैलान्निर्झरसारिणीव भवतो दृष्टिर्भवाम्भोझरी ।
उद्यद्रागमलीमसाञ्झटिति नो नोज्झन्ति पादौ हृदि
ते धन्यास्सजलञ्झलौ स भगवान्भूयाच्छ्रियै सर्वशः ॥ १८ ॥

सूतः—

एवं स्तुवन्ति ते देवा मेरुमौलिस्थितं शिवम्। गन्धर्वाप्सरसस्सिद्धा मुनयो वीतकल्मषाः

कैलासेऽत्र महादेवस्सन्निधत्ते सदैव हि । देव्या मणिमये सौधे विहरत्येष शङ्करः ॥
तद्विहारं शृणुध्वाद्य सर्वपापविनाशनम् । नानाचित्रविचित्राश्च क्रीडास्ताः परमेशितुः
देव्या सह सुरश्रेष्ठाः केन वा वर्ण्यते हि ताः ॥ २२ ॥

रुद्राण्यो नवयौवनोच्चलकुचास्तास्सोमधाम्ना निभा
रत्नोत्थामलकान्तिभूषिततनूवल्यः प्रभाभासुराः ।
सम्बद्धस्तनचेलकेशवलयास्सेवाधिकारादरा
राजन्ते कलधौतसानुशिखहे लीलाझणन्नूपुराः ॥ २३ ॥

उद्यत्काव्यनिभाच्छचम्पकमहानासालसन्मौक्तिका-
स्ताराकारसुहीरहारवलयैस्तास्तत्र विद्युल्लताः ।
रुद्राश्चापि महेश्वरं त्रिजगतामाधारभूतं हरं
तत्तत्कालसुसेवनैरनुपमैश्श्रान्ति विहायादरात् ॥ २४ ॥

स्नानोद्यन्मणिसुन्दरैश्च कलशैस्स्रग्गन्धधूपार्पणै-
र्दीपैः केशसुधूपनैः परिकरैः पर्यङ्कविश्राणनैः ।
छत्रैश्चामरवीजनैः प्रपदकैरादर्शताम्बूलकै-
र्वीणाभिः पटवासखड्गसुकरैस्सेवन्ति शर्वं शिवाम् ॥ २५ ॥

रुद्राण्यो नवकोटयश्च तरुणा रुद्राश्च कोट्यो दश
भैरव्योऽथ दिगम्बराश्च सततं कोटीभिरन्वासते ।
योगिन्योऽथ त्रिकोटयश्च परितस्ते डाकिनीकोट्यो
रोहिण्या सहितेन्दुधामवदनास्सेवन्ति शम्भुं शिवाम् ॥ २६ ॥

कैलासे नवशक्तिरत्नविलसत्पीठे महातत्त्ववा-
ग्जातेनैककोटिविस्तरयुते श्रीचक्रमध्यङ्गते ।
बिन्दौ चन्द्रदिनेशकोटियुगले मञ्चे चतुष्पीठके
पञ्चब्रह्ममये वयं गिरिजया सार्धं हृदादध्महे ॥ २७ ॥

शशिप्रसृमरैः करैस्सितसितायमानो गिरिः
प्रभाततसुधाम्बुधेश्चलतरङ्गहस्तोत्थया ।

समुच्चलितनौकया सकलरत्नसंकुप्तया
सुधांशुशकलालको विहरति स्फुटं सोऽम्बया ॥ २८ ॥
स्वच्छाद्रिपारदमहाकलधौतशैलसानुप्रभासमधिकोन्नतपाण्डराङ्गम् ।
चञ्चद्विषाणमुकुटीतटलम्बमानसच्चामरौघपरिवीजितकर्णतालम् ॥ २९ ॥
कान्त्या स्वया परिमुषन्तमिवोद्यतांशुमुक्षाणमद्रितनयापतिरक्षिफालः ।
आरुह्य याति नगराजसुतासहायः ॥ ३० ॥
उक्षाधस्तलपक्षति प्रचलितो देवस्य पादाम्बुजे
स्वस्कन्धे मणिपादुकोत्तमलसत्सानन्दनामा गणः ।
पाहीशेति वदञ्छिव महादेव प्रभो मां सदा
तारानाथकलाधर श्रुतिशिरःकोटीरपालीगत ॥ ३१ ॥
कैलासमौलिधवलोत्तमशृङ्गसंस्थलिङ्गावलिं समभिवीक्ष्य महोरुहर्षः ।
पश्येति तामगसुतां प्रवदत्यभीक्ष्णं त्र्यक्षोऽक्षताक्षमनसा परिचिन्तनीयः ॥
सौवर्णरत्नखचितैर्मणिजालक्लृप्तैश्चक्रे महोन्नततले शशिधामकुम्भम् ।
देव्या रथं रथपतिः प्रथितो हि देवैरारुह्य याति नगमौलिमहो द्विजेन्द्राः ॥
नानारत्नयुतप्रभाततिततं मुक्ताच्छगुच्छान्वितं
पालीपालिमरालराजनिकरैर्मुक्तावितानैर्युतम् ।
भ्राजद्दिव्यपताकचामरयुतं छत्रैरपारैर्युत-
श्चारुह्याखिलशैलराजसुतया दिव्यं विमानं हरः ॥ ३४ ॥
कैलासे नवमौलिपालिषु सदा पश्यन्प्रयातीश्वरो
देवादीनखिलान्विलोकयति वै तल्लोकलोकानपि ।
ब्रह्माण्डान्तिकतस्स्फुरत्सुरतटिन्याटोपमौलिश्शिवो
विश्वं चित्रमपारचित्रकयुतं युक्तोऽम्बया केवलम् ॥ ३५ ॥

ईश्वरः—

सुरतरुचितभोगजालतर्पास्सुरतरुचितदेवपुण्यवार्भिः ।
सरभसमपयान्ति कर्मदेवा गिरिजे पश्य महाविमानवर्याः ॥ ३६ ॥

देवस्त्रीकरकङ्कणोल्लसमणिस्फारप्रभाभासुरा
देवोद्यानिकुञ्जसीमसुभगैस्स्रग्गन्धवातैरपि ।
तत्रत्याच्छसुधासुधाधररसास्वादोदनाः केवलं
ते देवास्सह भोगभाग्यनिकरैः पुष्णन्ति पश्याम्बिके ॥ ३७ ॥

विष्णुब्रह्ममरुद्गणैस्सममुमे मां पश्यते योऽधमो
लालाजालमुखेषु पूयकृमिजापारे मलाब्धौ स्थितः ।
शस्त्रोग्रद्विपिनाग्रगात्रकवचेष्वाकल्पविष्ठाशनस्
स्तिष्ठत्येव कनिष्ठनिष्ठुरवचोदुष्टः कशाताडितः ॥ ३८ ॥

दृष्टः कष्टजभोगभाग्यफलभाङ्मन्निन्दनादद्रिजे ॥
पश्य नारकगणं बहुदुःखितं लिङ्गमङ्गलददर्शनोज्झितम् ।
कुम्भतैलपचनेन सुपक्वं भक्ष्यवह्निगिरते यम एनम् ॥ ३९ ॥
रुद्राक्षकण्ठवरकर्णमहोरुहाराः कोटीरकङ्कणकशोभितबाहुदण्डाः ॥ ४० ॥

प्रदोपलिङ्गार्चनलिङ्गधामसन्दर्शनानन्दितवृत्तयो ये ।
यान्त्येव कैलासवरं ममालयं तएव हारा मम सम्मताश्शिवे ॥ ४१ ॥

कैलासाचलमौलिसंस्थितमहालिङ्गालयेषूद्यता
भ्रान्तिं ते जनयन्ति रत्नकलशा नानार्कसोमाइव ।
अत्रत्यामललिङ्गमौलिजजटाचूडेन्दुगङ्गादयो
द्योतच्छैलशिखाविराजितशिखाकारोऽद्य शैलो मम ॥ ४२ ॥

पश्याद्रिजे गिरिवरोद्यतलिङ्गसङ्घं सम्पूजितश्च विलसन्नवबिल्वपत्रैः ।
तत्रैव गाङ्गजपयोजवरत्नमीलन्मौलिस्थचन्द्रजकरैर्विकचोत्पलाभम् ॥ ४३ ॥

गणकरसम्पुटोत्थशङ्खनादैर्मधुरैर्मद्दलडिण्डिमोत्थनादैः ।
शिवलिङ्गाग्रगता गणा विरेजुर्मम शैलोऽपि सदैव घोषयुक्तः ॥ ४४ ॥

कैलासोऽप्ययमद्रिराजतनये मल्लिङ्गमौलिस्सदा
जातो मन्दरदानतश्च सुमहत्त्वेनापि तप्तन्तपः ।

तत्तादृङ्सुरादिसङ्घनिकरैस्तप्तं मुनीनां गणै-
श्शैवेन्द्रैर्मम सद्गुणैरपि शिवे तस्मिन्दया मे परा ॥ ४५ ॥
इत्यम्बावदनं निरीक्ष्य भगवानाह प्रमोदास्पदं
कैलासस्य गुणौघवर्णनमहो देव्याः पुरश्शङ्करः ।
रम्यं तत्र ममालयं करिवरास्यस्यापि वक्ष्ये मुदा
तस्याप्यद्भुतमीश्वरस्य समुखे संस्थाप्य धर्म्यस्य हि ॥ ४६ ॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादे कैलासलिंगवर्णनन्नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## कैलासवर्णने स्कन्दकृतस्तुतिर्नाम त्रयोविंशोऽध्यायः.

स्कन्दः—

शृणुध्वं ब्रह्मविष्ण्वाद्या जैगीषव्य गणोत्तमाः ।
तत्रान्तरेऽस्ति प्राकारो गोमेदमणिकल्पितः ॥ १ ॥
गोमेदगोपुरश्चैव चतुर्दिक्षु विराजितः । चतुर्दिक्षु गोपुराणि लक्षमानेन सत्तमाः ॥
वेदिकापट्टिकाभिश्च तोरणालङ्कृतानि हि । राजत्कुम्भपताकाग्रैर्धूपभैस्तन्मणिप्रभैः ॥
रुद्रावतारररचितैर्गवाक्षैस्स्फाटिकैरपि । कुमुदैर्व्यालिपीठैश्च दैवगोष्ठ युतान्यपि ॥ ४ ॥
मण्टपावलिसंक्लृप्तैस्सहस्रायुतशो गणैः । मणिकाञ्चनचित्रैश्च मुक्ताविततकतोरणैः ॥ ५ ॥
सरोभिस्सागराकारै रत्नसोपानमण्डितैः । तत्प्रान्तमण्टपवरैस्सहस्रस्तम्भशोभितैः ॥
सरोमध्यमणिभ्राजन्मण्टपैरुच्छ्रितैरपि । तत्रान्तरे तु प्राकारे गोपुरान्तरदक्षिणे ॥
तत्र मत्सदनं दिव्यं नानारत्नचितं शुभम् । लक्षस्तम्भयुतं सौधं नवरत्नाग्रशृङ्गकम् ॥
तत्सालभञ्जिकानिर्यद्रत्नकान्तिविभासितम् । ततः पश्चादंशुमद्भिर्मणिभिः कृतशेखरम्
गवाक्षितं विचित्रैश्च नवरत्नप्रभाधिकम् । हरिन्मणिकृतैश्चैव मयूरवरकुक्कुटैः ॥ १० ॥
शोभितैर्मण्टपाग्रैश्च वरप्रासादतोरणैः । प्राकारैस्सुन्दरतरैर्गोपुरावलिभासुरैः ॥ ११ ॥
मणिद्वारकवाटैश्च शातकुम्भशलाककैः । धूपामोदयुतापाररम्योद्दामसुगन्धितम् ॥ १२ ॥

१. तमस्स्तोमतिरस्कारीति पाठान्तरम् ।

मणिदीपप्रभाभासिरञ्जिताखिलदिक्तटम् । तत्र दिव्यसुमामोदि वनं चैत्ररथाधिकम् ॥
मण्यालवालकलितरत्नवेदित्विपाततम् । नानादेवद्रुमापारवल्लीगुच्छविराजितम् ॥ १४ ॥
कौमारन्नाम तत्रास्ति सरश्चोत्फुल्लपङ्कजम् । मणिसोपानपालीभिस्तत्प्रान्तमणिमण्टपैः
क्रीडामृगैश्शुकैश्चापि मणिपञ्जरशारिकैः । तत्र तत्सौधमध्यस्थं मम सौधवराश्रयम् ॥
सिह्मासनं रत्नकॢप्तं पञ्चयोजनविस्तृतम् । तत्राहं सेवितो वीरैर्नवलक्षैरुदायुधैः ॥ १७ ॥
सिह्मसंहननैर्वीरैः कौमारैरुद्यदायुधैः । मत्तद्विपकराकारबाहुभिश्शक्तिसंयुतैः ॥ १८ ॥
वीरबाहुप्रभृतिभिः पुष्पवस्त्राङ्गलेपनैः । छत्रचामरहस्तैश्चाप्यासेऽहं सेवितस्तदा ॥ १९ ॥
महार्हवसनोपेतो नवरत्नविभूषणः । षड्वक्त्रमुकुटोद्भासि रत्नकुण्डलकाङ्गदः ॥ २० ॥
रत्नाङ्गुलीयविलसत्तलाङ्गुलिपदाम्बुजः । मणिमाणिक्यमञ्जीररणन्नूपुरमेखलः ॥ २१ ॥
देववल्या सेनया चापीन्द्राद्यैरपि सेवितः । षड्भिश्च वदनैर्देवं स्तुवन्द्वादशलोचनैः ॥
पश्यन्लिङ्गं हि कैलासे कौमारेश्वरमीश्वरम् । हीरसारमहाधाराप्राकारे दक्षिणे स्थितः ॥
तन्नीलगोपुरोत्तुङ्गनीलधारातता दिशः । रुद्रावतारक्रीडादितलशोभैकभासुरम् ॥ २४ ॥
राजल्ललामवृषभं शम्भोः कैलासगोपुरम् । पञ्चलक्षप्रमाणेन कल्पितं विस्तरायतम् ॥
दक्षिणे गोपुरप्रान्ते शम्भोः प्राकारमध्यमे । तत्कौमारपुरं मेऽत्र नानासौधविराजितम्
कौमारैर्मद्गणश्रेष्ठैर्मया च परिपालितम् । तत्र मत्पुरमध्यस्थं कौमारेशस्य गोपुरम् ॥
नवरत्नप्रभाभास्वत्प्राकाराट्टालसुन्दरम् । गर्भागारमहाकान्तिधगद्धगितदिङ्मुखम् ॥
मणिकुम्भोद्यतशिखावलीढगगनाङ्गणम् । ममेष्टलिङ्गन्तत्रैव देवदेवस्य शूलिनः ॥
त्रिकालं तत्र तल्लिङ्गं पूजयामि गणैर्वृतः । धूपैर्दीपैश्च नैवेद्यैः पञ्चामृतनिषेचनैः ॥
वीणावेणुमृदङ्गादिशङ्खकाहलनिस्वनैः । मधुरोद्दामगीतैश्च कौमारीणाञ्च नर्तनैः ॥
हावभावमनोहारितौर्यत्रिकमनोहरैः । षड्वक्त्रफालकलितत्रिपुण्ड्रतिलकोज्वलः ॥ ३२ ॥
भस्मरुद्राक्षवलयसरावलिविभूषितः । षड्वक्त्रपङ्कजस्यन्दिसुधासममहारसैः ॥ ३३ ॥

स्तौमि स्तोत्रवरैश्शम्भुं तत्स्तुतिं शृणु सत्तम ॥ ३४ ॥
छद्मस्वर्गविनुतागमवर्य कर्कार्यागमदूर्वयार्चित ।
मेरुमौर्विकृतदर्विहस्तक पाहि मां भव महेश सर्वग ॥ ३५ ॥
विक्रमाक्रमितलोकचङ्क्रम पादमूलमपि नो त्रिविक्रम ।

प्राप्तकूपसदनः किमु भेकस्सागरोत्तरणहेतवे हर ॥ ३६ ॥
स्वर्णवर्णकृतलोचन कर्णापारहारक महार्णवसंस्थ ।
वर्णितागम अपर्णयार्चित पर्णपत्ररथपूज्यपदाब्ज ॥ ३७ ॥
कर्णकुण्डलकृताहिवरेश पारयार्णवभवं सुकर्णधारक ।
गन्धवन्धुमधुपावलिभास्वद्राजराजशकलामलमौले ॥ ३८ ॥
देवलोकतटिनीगतपुल्लैर्नीलकैरवकुलैकसुपूज्य ।
वाहाजिह्वातिसङ्ख्याकृतनयनयुगं तल्पसङ्ख्यापि तादृ-
ग्दशयुगलललामं देवमन्दारसालम् ॥ ३९ ॥
कौमार शङ्करगिरां मनसोऽतिदूर कर्पूरगौर सुशरीरधृतोरगेन्द्र ।
मारापहार पुरवर्गहराव्ययेश विश्वेश्वराव दयया तव बालमिष्टम् ॥ ४० ॥
इत्थं षड्वदनैस्स्तौमि कौमारेशं महेश्वरम् । मद्गणैर्नवलक्षैश्च तत्कौमारपुरस्थितः॥ ४१॥
गोपुरं नीलमणिभिः प्राकारं तच्च कल्पितम् । तत्कैलासं महेशस्य शक्तिहस्तैरुदायुधैः॥
रक्षामि सर्वदा विप्र शासनाच्चन्द्रमौलिनः ॥ ४३ ॥
तन्नीलसारपरिकल्पितगोपुरोद्यत्कुम्भावलीविततहेमपताकजालम् ।
शक्रोपलाकलितगोष्टपभालिराजत्प्राकारसौधविहितोरुमणीन्द्रलिङ्गम् ॥ ४४ ॥
सम्पूजयन् गणवरैर्भगणेशमौलिं कैलासपर्वतवरे निवसामि विप्र ॥ ४५ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने स्कन्दकृतस्तुतिर्नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## कैलासवर्णने गणेशकृतस्तुतिर्नाम चतुर्विंशोऽध्यायः.

स्कन्दः—

पश्चाद्भागे हरिज्योतिहरिन्मणिविराजितम् । पञ्चलक्षप्रमाणेन प्राकारं मणिगोपुरम् ॥
महामरकतैः क्लृप्तगवाक्षावलिभिर्युतम् । अष्टाशीति सहस्राणि योजनैः परिकल्पितम् ॥
पश्चाद्भागे तु तद्द्योति हरिन्मणिनिभा दिशः । तत्र गारुत्मतमणीक्लृप्तमण्टपशोभितम् ॥

उद्यदिन्दुकरस्वच्छनिर्यज्झरिभिरावृतम् । तत्राच्छस्फटिकोद्दामसिह्मासनशतैर्वृतम् ॥
धूपदीपादिबहुलं नानासुमवनावृतम् । मणिमाणिक्यखचितमण्टपे स्वास्तृतासने॥८॥
तस्मिंस्तिष्ठति विघ्नेशस्स्वगणैरर्चिताङ्घ्रिकः । सप्तलक्षगणेन्द्रैश्च विघ्नाद्रिकुलिशो महान्
नानारत्नचितानेकभूषणैः परिशोभितः । सिन्धूरविलसत्फालो महासिन्धूरवक्त्रकः ॥
माणिक्यमुकुटोल्लासिफालचन्द्रविराजितः । शुण्डादण्डमहोच्चण्डबृंहितानन्दिताम्बरः
कुम्भान्तरलसन्मुक्तागुच्छसच्छायितास्यकः । कर्णपत्रमणिभ्राजचलत्कर्णयुगच्छविः ॥
दन्तावलिमहारत्नदन्तवेष्टनसुन्दरः । तदधस्ताल्लसन्मुक्तामणिपत्रविराजितः ॥ १० ॥
सितभस्मत्रिपुण्ड्राङ्ककुम्भमध्यविराजितः । सिन्धूरतिलकोत्फुल्लवदनानन्दशोभितः ॥
मुक्तागुम्फितकर्णाग्रवीजितोड्डीनषट्पदः । स्रवत्कटतटोल्लासि मदगन्धितदिक्तटः ॥
शिवपादाम्बुजध्यानानन्दोन्मीलितलोचनः । गणसन्दर्शनानन्दसदोन्मीलितलोचनः
महानागनिबद्धोरुपिठरोदरसंयुतः । फुल्लपद्मामलपदस्सुरासुरगणानतः ॥ १४ ॥
पाशाङ्कुशरदद्योतिमोदकासक्तसत्करः । रत्नाङ्गदैश्च केयूरैर्भ्राजत्करिकरप्रभः ॥ १५ ॥
पादकङ्कणरणत्सिञ्जद्रत्नमञ्जीरशोभितः । दिव्याङ्गरागसुभगो मणिहाराम्बरावृतः॥१६॥
पार्श्वद्वयविराजच्छ्रीसिद्धिबुद्धिविराजितः । सर्वाभरणभूषाभ्यां सेवितः पार्श्वयोर्द्वयोः
गणेन्द्रैश्छत्रदण्डोद्यन्मणिचामरसत्करैः । सेवितश्श्रीगणेशानस्तस्मिन्कैलासमण्टपे ॥
चलच्चामरवातैश्च चलत्कर्णाग्रचामराः । तादृशा गणपास्तत्र पाशाङ्कुशधरास्तथा॥१९॥
महाबला महोत्साहाः कुठारवरपाणयः । सिन्धूरारुणफालाग्रास्त्रिपुण्ड्रपरिशोभिताः ॥
रक्षन्ति ते गणास्तत्र प्राकारं तच्च गोपुरम् । सप्तलक्षामितबला गणेशा गणपास्तथा ॥
तत्रैव देवदेवस्य शासनाच्चन्द्रमौलिनः । गणेशोऽपि सदा ध्यायन् गणेशेश्वरपूजकः ॥
तत्रेष्टलिङ्गं तस्यैव वरप्राकारगोपुरम् । नवरत्नचितन्दिव्यं मणिस्तम्भचितान्तरम् ॥
गणेश्वराख्यं तल्लिङ्गं मणिधामगतं तथा । प्रोद्यत्कुम्भपताकाग्रपवनाधूतसाञ्चलम् ॥
स्वपुष्करधृतोत्तुङ्गकुम्भपञ्चामृतैरपि । सुधाधाराभिरासिच्य चन्दनालेपिसुन्दरम् ॥
फणामणिमहामौलिरत्नाभरणशोभितम् । सोऽप्यसम्पूजयत्येव बिल्वमन्दारचम्पकैः ॥
दूर्वाभिः कमलैरीशं धूपैर्दीपैर्मनोहरैः । नैवेद्यैर्विविधैश्चैव ताम्बूलैश्छत्रचामरैः ॥ २७॥
गानैर्नृत्यैर्मृदङ्गाब्जकाहलानाञ्च निस्वनैः । भस्मरुद्राक्षसम्पन्नस्स्तौति देवं महेश्वरम् ॥

गणेशः—

गणेश त्रिगुणातीत भगणाधीशमस्तक । गर्जन्मेघगणोद्भूततटिद्गणजटामल ॥ २९ ॥
व्योमकेश भगवन् श्रुतिमौलिस्तोमसामविनुताखिलसोम ।
भूमभौममहिमागमकाम धूमधामवहलद्युतिकण्ठ ॥ ३० ॥
क्षयद्वीरमारापहाराद्य शम्भो वीर धीर सुरशेखरपाद ।
घोरान्धकासुरनिवर्हण कालकाल क्रूरान्तर त्रिपुरगर्वहराव्ययेश ॥ ३१ ॥
दहरगहनशेखरोऽसि शम्भो निरवद्याखिललोकसौख्य भूमन् ।
त्रिगुणगतिविदूर दर्शिताद्य प्रकटितवेदवचोभिरीड्यपाद ॥ ३२ ॥
करे कुरङ्गं स्वकपर्दगङ्गं हारे भुजङ्गं यमिहृत्सुसङ्गम् ।
बालाकृताङ्गं सितभस्मसङ्गमनङ्गमातङ्गहरं भजामि ॥ ३३ ॥

स्कन्दः—

इति स्तौति सदा शम्भुं कैलासेशंगणेश्वरः । गणनाथो गणवृतस्सदाशिवगणाग्रणीः ॥
तत्पाति गोपुरं शम्भोर्मणिप्राकारमप्यसौ । स्वकीयैर्गणपैस्सार्धं चन्द्रचूडस्यशासनात् ॥
हरिन्मणिकृतं वरं हरितगोपुरं पश्चिमे
विराजिततलाङ्कणैर्वृषपललामशृङ्गप्रभैः ।
गरुन्मणिवरप्रभं विततरत्नसौधोत्तमं
वरप्रवरसुन्दरप्रकटवप्रप्राकारकम् ॥ ३६ ॥
स्वबाहुबलमाश्रितो द्विरदवक्त्रजैस्सद्गणैः
[1]प्रपाति गणनायकश्शिवपदाब्जसंसेवकः ॥ ३७ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने गणेशकृतस्तुतिर्नाम
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

१. प्रयातीति पाठान्तरम् ।

## कैलासवर्णने वृषस्तुतिर्नाम पञ्चविंशोऽध्यायः.

स्कन्दः—

कैलासान्तरतः प्राच्यां पुष्परागविनिर्मितम् । पञ्चलक्षप्रमाणेन प्राकारवरगोपुरम् ॥
उद्यद्भानुशताधिक्यचाकचक्यमनोहरम् । पुष्परागमणिप्रोद्यद्वृषभैस्समधिष्ठितम् ॥
प्राकारं लक्षमानेन मनसा शूलिना कृतम् । रुद्रावतारचरितैर्वेदिकापट्टिकान्वितम् ॥
राजद्वृषभकुम्भाग्रदोधूयितपताककम् । पुष्परागमणिज्योतितिरस्कृतशशिद्युति ॥ ४ ॥
तत्रैवान्तर्महारत्नगर्भमण्टपमुत्तमम् । स्तम्भैश्च दशसाहस्रैस्समुन्नतिमनोहरम् ॥ ५ ॥
शिखाभिर्मणिकॢप्ताभिर्वलिभिश्चुम्बिताम्बरम् । नानारत्नमहावेदिपीठविद्रुमपुत्रिकैः ॥
शोभितं रत्नगुच्छाच्छ मालालम्बितपीठकम् । तत्र सिंहासने दिव्ये नवरत्नगणैश्चिते॥
धूपदीपादिवहुले मुक्तामालापरिष्कृते । वितानद्योतिदिक्चक्रे नानारुद्रगणैर्युते ॥ ८॥
षष्टिसाहस्रसङ्ख्याकैरहिमन्युभिरुद्धते । त्रिपुण्ड्रविलसत्फालै रुद्राक्षवरभूषणैः ॥ ९ ॥
त्रिशूलोद्यत्करैश्शुभ्रैर्हेतिचापशरावृतैः । जटातटनिवद्धेन्दुशेखरैरिन्दुसप्रभैः ॥ १० ॥
समन्तात्सेवितो नित्यं वृषो धर्माकृतिर्महान् । धर्माधारमहापादो युगनाभोरुपादकः ॥
सन्ध्यांशसुखुरोद्दामवर्णाश्रमकृताङ्घ्रिकः । मणिमञ्जीरनिनदनानाधर्मैकशब्दवान् ॥
चतुर्वेदोपवेदोद्यद्वेदान्तिमतदन्तकः । पुराणन्यायमीमांसाद्वयतन्त्रोरुघण्टकः ॥ १३ ॥
पूर्वसिद्धान्तराद्धान्ततत्वशब्दघणाघणः । ग्रैवेयशोभितोदारघण्टाकलितकन्धरः ॥
कैलासो जङ्गम इव शृङ्गद्वयविभूषितः । सुधामण्डलजोत्तुङ्गसुपाण्डरमहाछविः॥ १५॥
संस्थितो देवदेवस्य सन्निधौ नन्दिकेश्वरः । पञ्चलक्षप्रमाणेन गणैः कर्पूरसन्निभैः ॥
उद्यत्सुधांशुपूर्णाङ्गो लक्षयोजनपृष्टभूः । ककुदा दशसाहस्रयोजनोन्नतवृत्तया॥ १७ ॥
मुखेन त्रिंशत्साहस्रं नेत्रयोर्द्विसहस्रकम् । कर्णयोः पञ्चसाहस्रं विषाणे च सहस्रकम् ॥
नासाविवरमुक्ताच्छनासापञ्चसहस्रकम्। सहस्रयोजनायामलेलिहानाग्रजिह्वकम्॥ १९॥
पश्यन्ननिमिषेणैव लोचनाभ्यां महेश्वरम्। स्वपृष्टास्तृतरत्नाच्छपल्यङ्कालम्बिमौक्तिकम्॥
स्वनासाविवरोत्थानवातोद्भूत महागिरिम् । तद्वातोद्भूतवेलाश्च चोद्यतोद्यत्तरङ्गकाः ॥

---

१. गात्रैरिति पाठान्तरम् ।

समुद्रास्सरितश्चैव तच्चलत्खुरदारिता । भूर्भाति कम्पिता शैलैस्सागरैश्च विलोलिता ॥
शृङ्गकोटिमणिभ्राजिमुकुटेन विराजितम् । कर्णालम्बिशशिज्योतिर्धवलालम्बिचामरम्
पञ्चाशल्लक्षमानेन पदैः खुरवरैर्युतम् । दशसाहस्रविस्तारैरिन्द्रनीलमणिप्रभैः ॥ २४ ॥
खुराग्रघृष्टगिरिव्रातं नादमोदितकन्दरम् । सास्नया लम्बितास्वच्छपञ्चसाहस्रयोजनम् ॥
हुम्फारवमहाभीत त्रैलोक्यतलवासिनम् । कामधेनुगणैश्चैव कोटिभिः परितोवृतम् ॥
शरच्चन्द्रप्रभाभास्वद्गिरिमौलिविदारणम् । लम्बिना वृषणेनापि शतयोजनकेन च ॥
वालेन त्रिंशत्साहस्रयोजनेन विलम्बिना । चामराग्रमहाकेशपुच्छभारेण शोभितः ॥
मुक्तामाणिक्यजालैश्च प्रोत्थितेन मणिप्रभः । तत्रास्ति गोपुरं शम्भोर्धामतत्र वृषेशितुः
प्राकारराजद्वृषभं तस्येष्टं लिङ्गमैश्वरम् । कामधेनूधसोद्भूतैः पयोभिरभिषिच्य च॥३०॥
गन्धैर्बिल्वैश्च मन्दारैः पङ्कजैर्धूपदीपकैः । नैवेद्यैः पायसापूपताम्बूलछत्रचामरैः॥३१॥
सम्पूज्यस्तौतिधर्मेशं भस्मरुद्राक्षभूषितः । मुक्तात्रिपुण्ड्रफालाङ्को शशिधृक्च्छृङ्गयोर्द्वयोः
पश्यन्त्संस्तौति हृष्टात्मा नादकीलितदिक्तटः ॥ ३३ ॥

धर्मः—

दक्षपक्षकृतशिक्ष महोक्षोद्वाहिताक्षितिलकासुरवीक्ष ।
कुक्षिगाखिलजगद्धृतधाक्षिः पक्षिवाहसुतकायविलक्षम् ॥ ३४ ॥
भूमिमण्डलतलातिगमूले कोलरूपहरिणा न विलोकि ।
अब्जजाण्डजगती विवदेते पादमौलिकलने तव शम्भो ॥ ३५ ॥
सिन्धूनिषङ्गं वृषभं तुरङ्गं महाङ्गचर्माम्बरमुग्रताङ्गम् ।
इन्दूत्तमाङ्गं हरये रथाङ्गं भूते महोक्षाङ्गगतं हृदक्षगम् ॥ ३६ ॥

स्कन्दः—

इत्थं स्तौति महादेवं धर्मो वृषवपुर्धरः । स एव धर्मो देवेशं वहत्यत्यन्तभासुरः॥३७॥
प्राच्यां तद्गोपुरवरं प्राकारगणपैर्वृतः । पाति तद्देवदेवस्य स्मरहन्तुश्च शासनात्॥ ३८॥
श्रीमत्कैलासशृङ्गे शिववरगणपैस्सिन्धुरास्यानुगैश्च
कौमारैर्गणपैर्वृषेन्द्रगणपै रुद्रैस्समन्ताद्वृतम् ।

निखिलजगदधीन्द्रैर्विष्णुना देवसङ्घैश्श्रुतिगणमुनिवर्यैश्चिन्तितं चाक्षमन्तत्॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने वृषस्तुतिर्नाम
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## कैलासवर्णने देवीप्रस्तावबर्णनं नाम षड्विंशोऽध्यायः.

स्कन्दः—

तदुत्तरेऽस्ति प्राकारो वैडूर्यमणिरञ्जितः। वैडूर्यानन्तसूत्रैश्च पीतास्तत्रस्थदिक्तटाः ॥
तत्र गोपुरमुत्तुङ्गं वैडूर्यमणिशोभितम्। आपीठशिखरप्रोतरुद्रचारित्रशोभितम् ॥ २ ॥
पञ्चलक्षप्रमाणेन महावैडूर्यसद्वृषम्। पट्टिकादेवकोष्ठैश्च कापोतैः पालिपालिकैः ॥ ३॥
मणिकुम्भोल्लसच्छ्रुभ्रं तत्तु पञ्चशताञ्चितम्। नवलक्षं रुद्रगणाश्शम्भोरुद्यतरास्त्रकाः॥
त्रिपुण्ड्रविलसत्फालाः कपर्दधृतचन्द्रकाः। मत्तमातङ्गसङ्काशा युवानो मृष्टकुण्डलाः॥
रक्षन्ति परितस्तच्च प्राकारं वरगोपुरम्। तस्यान्तरे हि सुमहन्नानामणिगणाञ्चितम्॥
देव्यास्तु भवनं श्रीमत्सौधपंक्तिविभूषितम्। रम्यमाणिक्यखचितस्तम्भापारसहस्रकैः ॥
हीरसारमहाधारैः पुष्यरागाङ्गनीलकैः। वैडूर्यकैश्च गोमेदैर्मुक्ताविद्रुमकल्पितैः ॥ ८ ॥
पुष्परागमणीक्लृप्तैर्गोमेदवलभीयुतैः। हरिन्मणिवरोद्भूतैर्मुक्तामणिसरोज्वलैः ॥ ९ ॥
सुप्रवाललतास्तम्भैः कुरुविन्दोरुवेदिकैः। तत्र प्राकारमस्त्येकं चन्द्रकान्तशिलान्वितम्
विंशत्सहस्रमानेन योजनेन प्रकल्पितम्। चतुर्द्वारपरीक्लृप्तमहागोपुरवेदिकैः ॥ ११ ॥
रत्नहीरकगोमेदपुष्परागविनिर्मितैः। बालप्रभाकराकारैर्मणिशृङ्गविराजितैः ॥ १२ ॥
देवीक्रीडारसैस्सिंहैः पर्यन्तावलिशोभितैः। शरच्चन्द्रसमाकारैस्स्फटिकोत्तमरञ्जितैः॥
विकृतास्यललज्जिह्वैस्सटाशोभितकन्धरैः। तत्रान्तर्भवनं देव्या दशसाहस्रकल्पितम्॥
योजनानाञ्च परितो नवरत्नविचित्रितम्। उद्यदिन्दुकरप्रख्यं नानाशिल्पैकसुन्दरम्॥
तत्र देव्या महापीठं कोटिभास्करसन्निभम्। हीरतारागणाकारप्रभावलिविराजितम्॥
नवरत्नमहासौधमध्यगा श्रीमहेश्वरी। कमलामोदबहुलपर्यन्तसरसोज्वला ॥ १७ ॥

---

१. उद्यतशस्त्रकाः इति पाठान्तरम्। २. शृंगैरिति पाठान्तरम्।

सौधमध्यमणीक्लृप्तसिंहासनवराश्रया । हरिन्मणिमहामञ्चदेरान्दोलितविग्रहा ॥ १८ ॥
हल्लीसल्लास्यललितयोगिनीगणसेविता । कदाचित्सा महादेवी प्रवालवरपीठगा ॥ १९ ॥
प्रवालवरपीठस्थरत्नपीठवराश्रया । माणिक्यसौधमध्यस्था भूषिता चारुभूषणैः ॥ २० ॥
कदाचित्पुष्परागोत्थ सौधमध्यैकवासिनी । नीलकन्तुकभूताच्छरविसोमजकन्तुका ॥ २१ ॥
हननाच्च तयोरूर्ध्वाधोगतैस्सततं द्विज । उदेति सूर्यश्चन्द्रश्चाप्यस्तमेत्यप्युदेत्यपि ॥
करतालेन देव्यास्तु तस्मिन्त्सौधवराग्रतः । रत्नसौधतलोद्दामजालकान्तरसञ्चरा ॥
सुधाकरकरास्फारप्रासादवरकौतुका । पुष्पवाटीपरिवृतरत्नसौधवराश्रया ॥ २४ ॥
कुमारागारमध्यस्था कदाचिद्वरदा शिवा । पुष्पमञ्चकमध्यस्था पुष्परागगृहान्तरे ॥
रत्नवीटीकरा भास्वद्रत्नकङ्कणभूषिता । कदम्बवनमध्यस्थहीरसौधवराश्रया ॥ २६ ॥
लीलाललितरत्नाच्छकीरवीरकरा शिवा । शारिकाव्यक्तकगिरा तुष्टा नीलजसौधगा ॥
सुदीपितमहानीलकवरभ्रान्तिमस्तका । वरभूषणभूषाढ्या रणच्छिञ्जानपादुका ॥
रत्नपात्रस्थितानेकफलालोकनतत्परा । पुष्पगुच्छमहाहाराप्यापीडामोदहस्तका ॥ २९ ॥
सुधामुखरितामोद रत्नपात्रकरा क्वचित् । मुकुटोद्दामचन्द्रांशुरश्मिसारालका शिवा ॥
सुरत्नकन्तुकास्नाविकेशपाशा मनोहरा । योगिनीदर्शितानेकरत्नादर्शविलोकिनी ॥
चन्द्रकान्तशिलाजालसौधमध्यनिवासिनी । नयनाञ्जनकाक्लृप्तरत्नभ्राजच्छलाकिका ॥
करमुद्राविनिर्यच्छ्रीनखकाञ्चितमुद्रिका । हीरभ्राजितला रक्तछविका पदभासुरा ॥
नीलवेणीचितानेकरत्नसेवन्तिकाततिः । महार्हहेमखचितवसनाञ्चलमौक्तिका ॥ ३४ ॥
परिधत्तेऽम्शुकं देवी मणिभ्राजिगृहान्तरम् । धूपधूमपरिष्कारगन्धबन्धैकसुन्दरम् ॥
मणिहर्म्यान्तरे पीठे सुमनोगुच्छभासुरे । रत्नांशुदीपकोद्दामप्रभाभासितदिक्तटे ॥ ३६ ॥
संस्थिता दर्शितानेकरुद्राणीवदनाम्बुजे । सुचन्दनद्रवासारवराङ्कितततनुछविः ॥ ३७ ॥
सुरमन्दारपुन्नागकेतकोद्भासिशेखरा । चम्पकाशोकदमनोशीरकण्टसुपाटलैः ॥ ३८ ॥
मल्लिकामालतीजातिधम्मिल्लभरशोभिता । कस्तूरीचन्द्रगन्धाक्तपटवासैकसुन्दरा ॥
मृगनाभिसुगन्धोद्यत्कुचान्तरितभासुरा । निचोलग्रन्थितोद्दामभुजावलिविराजिता ॥
रुद्राणीकरसिन्धूरकृतसीमन्तरेखिका । सुरत्नतिलकभ्राजिसोमधामसमानना ॥ ४१ ॥

१. दोलान्दोलितविग्रहेति पाठान्तरम् । २. लीलाकुतुकभूताच्छ इति पाठान्तरम् ।

हस्ताङ्गुलीयविलसत्प्रभाभूपिततिक्ततिः । वैडूर्यसौधमध्यस्था रुद्राणीनृत्तदर्शिनी ॥
नीलरत्नकृतालाबुमणिसारिजहीरकैः । ऊर्ध्वबद्धमहातन्त्रीवीणावाद्यादरा क्वचित् ॥
गायन्ती मधुरोदारं शिवनामैव सुन्दरम् । शरच्चन्द्राच्छनिकरचामरैर्वीजिता क्वचित् ॥
मायूरैर्मणिदण्डैश्च व्यजनैर्वीजिता शिवा । पर्वोत्थशर्वरीनाथ तिरस्कारिमणीसरैः ॥
भ्राजच्छत्रावृतमुखा ताम्बूलरसमोदिता । वीटिकालग्नमुकरा पश्यंश्चित्रपटं स्थिता ॥
सदाशिवस्य तद्रूपं लिखितं लेखकेशितुः । विद्रुमाभरदच्छादिविम्बाकारसुशोभिता ॥
रत्नग्रैवेयचिन्ताकलोलमुक्तांशुसप्रभा । क्वणत्किङ्कणिकाभास्वद्रत्नहस्तसरैर्युता ॥ ४८॥
तपनोडुपविभ्राजिताटङ्कयुगलाधृतिः । उद्यत्कविनिभात्यच्छमुक्तानासाढ्तास्यका ॥
रत्नगङ्गामहासारधारागृहवराश्रया । कटीतटनिवद्धाच्छरत्नकाञ्चीविराजिता ॥ ५० ॥
प्रभापतङ्गजोद्दाममणिमञ्जीरभासुरा । रणच्छिञ्जानमधुरहंसारावैकसुन्दरा ॥ ५१ ॥
मरालराजगमना दिव्यहारावृताङ्गका । बङ्किकानागवन्धोद्यद्बाहुवल्लीविराजिता ॥
कूर्पराग्रलसन्मुक्तागुच्छसञ्छादितछविः । फाललम्बितरत्नालिललामावलिशोभिता ॥
सूर्यचन्द्राङ्कितोदारशिरोभूपणभूपिता । योगिनीकोटिभिस्तत्र सेविता परमेश्वरी ॥
हरिन्मणिमहासौधे मुदिता संस्थिता शिवा । दिव्योपधानसंक्लृप्तमणिमञ्चे कृतास्तृते ॥
धूपामोदितदिक्चक्रे मणिदीपमनोहरे । वितानालम्बिमुक्तोद्यद्गुच्छसञ्छादिताम्बरे ॥
पादवाहूपधानेषु स्वास्तृतेऽविहरच्छिवा । रुद्राणीगानधाराभिर्वीणानादानुगा शिवा ॥
शृण्वन्ती शिवनामानि संस्थिता वैद्रुमे गृहे । सुवर्णकदलीगुच्छहरिन्मणिनिभैर्द्रुमैः ॥
तन्मध्ये स्फाटिकमणीकृतसौधवराश्रया । तमालसालनीपादिवृतसौधे गरुत्मतः ॥५९॥
मणिक्लृप्ते महापीठे संस्थिता मुग्धदर्शना । लावकानां मयूराणां कुक्कुटानां मनोहरम् ॥
मेपसारङ्गशृङ्गोद्यत्स्फारनारावदिक्तटम् । रम्यं रत्नाब्जिनीतीरं बद्धैर्दिक्षु मणीन्द्रकैः ॥
सोपानतीरसंक्लृप्तमणिसुन्दरमण्टपे । रत्नपञ्जरमध्यस्थात्रत्नशारीशुकाञ्छिवा ॥ ६२ ॥
पश्यन्ती दाडिमीवीजं ददाति शुकवक्त्रके । पूगद्रुवेष्टितापारद्राक्षावल्लीसुगुच्छके ॥
सन्ध्यावल्लीसुमारक्तचन्द्रिकापुष्पशोभिते । पर्यन्तकुल्यातीराच्छमणिवन्धसुधापयः ॥
पयोजविकसत्फुल्लहल्लकामोदमोदिते । धारासारमहायन्त्रशोभिते गन्धमोदिते ॥ ६५॥
पूगद्रुमौलिसञ्छादिमणिहर्म्योरुमञ्चगा । क्रीडाशिखण्डिविहितताण्डवं पश्यती शिवा ॥

महामणीन्द्रसंक्लृप्तसौधैरुपरिकल्पिते । नानाचित्रपटीक्लृप्तपटाम्बरगृहादरा ॥ ६७ ॥
तिरस्करणिकाक्लृप्तचतुर्दिक्षु मनोहरे । मणिकुम्भोच्चते देवी मणिस्तम्भविभूषिते ॥
सखीभिस्सह सल्लापं कुर्वन्ती संस्थिता क्वचित् । रथाकारमहासौधैर्मणिचक्रैर्हयैस्तथा ॥
पर्यन्तइव तत्सौधे सिद्धहंसविराजिते । तत्रैवान्तर्गृहे देव्याः क्रीडाभवनमीशितुः ॥
श्रीचक्राकारमतुलं तन्मणीन्द्रमनोहरम् । सहस्रयोजनायामं मणिचित्रगवाक्षकैः ॥ ७१ ॥
हंसपद्ममहाव्यालिपालीचित्रैर्विचित्रिते । मणिस्तम्भमहासारधारारञ्जितभूतलैः ॥ ७२ ॥
वितानमालाकलितैर्मुक्तागुच्छालिलम्बितैः । मणिमञ्चैर्महापादैर्लम्बिताधस्थितैरपि ॥
तेषूच्चता महाशय्यास्सोपधानमनोहराः । चन्द्रमण्डलसङ्काशाः फेनगोक्षीरसप्रभाः ॥
सुमामोदितगन्धाढ्या मल्लिकापुष्पसंस्तृताः । भ्रमद्दीपगृहभ्राजन्मणिचित्रविभूषिताः ॥
देवस्य देव्याः क्रीडादिरसचित्रोरुकुट्टिमाः । धूपवृक्षैर्दीपवृक्षैर्मणिक्लृप्तैस्सहस्रशः ॥ ७६ ॥
ताम्बूलकल्पपात्रैश्च मणिभृङ्गारकैश्शुभैः । धूपपात्रैर्दीपपात्रैः पुष्पताम्बूलपात्रकैः ॥
फलपूर्णै रत्नपात्रैर्मणिकुम्भैस्सुधायुतैः । धूपामोदमणिद्योतिविराजितमनुत्तमम् ॥ ७८ ॥
मणिपुत्तलिकाक्लृप्तचारुचामरवीजनैः । व्यजनादर्शताम्बूलधृतपुत्तलिकायुतैः ॥ ७९ ॥
गणैश्च रहितो देवस्सखीविरहिता शिवा । तस्मिञ्छ्रीचक्रसौधे तु क्रीडतस्तौ शिवौ मुने

स्कन्दः—

कैलासे नवशक्तिरत्नविलसत्पीठे महातत्त्ववा-
ग्जाते नैकगकोटिविस्तरयुते श्रीचक्रमध्यङ्गते ।
बिन्दौ चन्द्रदिनेशकोटियुगले मञ्चे च तत्पीठके
पञ्चब्रह्ममये वयं गिरिजया सार्धं हृदादध्महे ॥ ८१ ॥
कैलासे नवरत्नहर्म्यविलसन्मञ्चे सुधापान्निधौ
काञ्चद्रत्नकवाटिकापरिवृते चिन्तामणीभायुते ।
सार्द्धं यो जगदम्बया रविमयं चैकं सुधावर्ष्मणो
रूपं कन्तुकमुक्षिपत्यनुदिनं तेनैव रात्रिन्दिवम् ॥ ८२ ॥

१. मध्ये इति पाठान्तरम् । २. सुधाम्भोनिधेर्मध्येकल्पकवाटिकेति पाठान्तरम् ।

मूर्तीर्यो विधिविष्णुरुद्रसुरराडष्टौ पुमर्थानपि
चत्वार्येव युगानि वेदनिवहं दिव्यं फलानां गणम् ।
कुर्वन्नेव चतुर्दिशात्मकमठावैचित्र्यपीठे सदा
दीव्यन्त्सार्धमशेषभाग्यनिवहैः कृत्वा गृहं सम्मतम् ॥ ८३ ॥
कृत्स्नप्राणिकलापरम्य फलकस्तोमं विधायात्र वै
कालं कर्म च पाशकं सहि शिवो दीव्यन्त्सहास्तेऽम्बया ॥ ८४ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने देवीप्रस्ताववर्णनन्नाम
षड्विंशोऽध्यायः ॥ २६ ॥

कैलासवर्णने देवीपूजास्तुतिकथनन्नाम सप्तविंशोऽध्यायः.

स्कन्दः—

तत्रैव देव्यास्सदनं पुनरन्यन्मनोहरम् । गारुत्मतमणीभास्वच्छतयोजनविस्तृतम् ॥
वलभीरोचितानेकगवाक्षोग्रतकुम्भकम् । मणिपीठोज्ज्वलस्तम्भक्लृप्तविद्रुमपुत्रिकम् ॥
सुरत्नफनसैश्चैव सुरत्नकदलीफलैः । सुरत्ननारिकेलाच्छपूगसङ्घमनोहरम् ॥ ३ ॥
सुरत्नकेतकफलालम्बितच्छन्नभूतलम् । पुष्पमालारसास्वादभ्रमद्भ्रमरसङ्कुलम् ॥ ४ ॥
तस्मिन्दिव्ये महामञ्चे पुष्पशय्याविराजिते । दमनोशीरकायुक्तवितानछादिताम्बरे ॥
सुरत्नपङ्कजलसन्मालिकासमलङ्कृते । अम्लाने सर्वदा तस्मिन्मुकुरोत्तुङ्गकुट्टिमे ॥
रुद्राणीभिः परिवृता नित्यमास्ते महेश्वरी । सुपुष्पामलधम्मिल्लास्ताराधिपसमानना: ॥
तरुण्यो रूपसम्पन्नाः कुम्भीकुम्भाभसत्कुचाः। मणिग्रैवेयहाराढ्या मुक्तारत्नाङ्गदैर्युताः
मुक्तानासावृतास्सर्वाश्चन्द्रिकाक्लृप्तशेखराः । दिव्याङ्गरागसुभगा रणन्मञ्जीरकाङ्घ्रयः ॥
तास्तत्र सौधवर्येषु देव्यो विद्युल्लता इव । सञ्चरन्ति सदा देवीं सेवन्ते जघनोन्नताः ॥
महार्हवसनोपेतास्तिलकालङ्कृताननाः। ताम्बूलरागरक्ताच्छविम्बाधरमनोहराः॥ ११॥
चामराग्रकराः काश्चित्काश्चिच्चन्दनधारिण्यः ।
काश्चित्कालाञ्जिकापाण्यः काश्चिच्छत्रधरास्तथा ॥ १२ ॥
ताम्बूलरत्नपेटीं च धृत्वाञ्जनकरास्तथा । काश्चित्कङ्कतिकाहस्ता भूषापेटीधरास्तथा ॥

हरिद्राकुङ्कुमाहस्ता चालक्तरसधारिणी । सिन्धूरधारिणी काचित्पादुकासक्तसत्करा ॥
रत्नहेमाम्बरादीनि मणिप्रोद्यन्निचोलकम् । रत्नवीणाकराः काश्चिल्लीलाशुककरास्तथा
हरिन्मणिमहापिञ्छमयूरवरधारिणी । रत्नादर्शकरा काचित्प्रफुल्लसुमधारिणी॥ १६ ॥
चम्पकादिमहाहस्ता रत्नभृङ्गारसत्कराः । खड्गखेटकनिस्त्रिंशशरकार्मुकपाणयः॥१७॥
निषङ्गसङ्गितकरा लीलाकन्तुकधारिणी । हल्लीसल्लास्यरत्नाच्छदण्डमण्डितसत्करा ॥
अक्षपेटीधराः काश्चित्कस्तूरीगन्धसत्कराः । रत्नपात्रस्थितापार गन्धगन्धितदिक्तटाः
पटवाससुवासेन हारगुच्छकशेखरैः । पात्रैः प्रोद्यत्कराः काश्चिद्रत्नशूलधरास्तथा ॥
शारिकाबोधनोद्युक्ता देवीनामानि सादरम् । सुधूपद्दक्षधारिण्यो दीपिकाधारिणी परा
गन्धतैलावसिक्तोद्यद्रत्नकुम्भीकरास्तथा । ताम्बूलपात्रविततकराः फलकरास्तथा ॥
पद्मोत्पलकराः काश्चिदङ्गरागकरास्तथा । फलरत्नयुतापारस्वर्णपात्रलसत्कराः॥ २३ ॥

मणिकुम्भसुधापारकराः काश्चिन्मनोहराः ।
एवं सेवन्ति तान्देवीं रुद्राण्यः परितोऽम्बिकाम् ॥ २४ ॥

तत्तत्सेवारसाभिज्ञा देव्याश्चित्तानुवर्तकाः । प्रासादेषु च मञ्चेषु मणिसिंह्मासनेषु च ॥
पुष्पशय्यां तथा काश्चित्कुर्वन्ति सुकुथावृताम्। भक्ष्यभोज्यान्नकुशलाः पेये रसवरे तथा
देवीं सेवन्ति तास्तत्र रुद्राण्यो नवयौवनाः। तत्र देव्या महासौधे नवरत्नविचित्रितम्॥
गर्भागारं महेशस्य रम्यन्देवीश्वरस्य च । प्राकारगोपुरोपेतं रत्नतोरणमण्डितम्॥ २८॥
माणिक्यमुकुरोद्दामरुद्रक्रीडाद्दृषैर्युतम् । सुरम्यरत्नकलशपताकाभ्राजिशेखरम्॥ २९ ॥
तत्र लिङ्गं सुधापूरधवलीकृतदिङ्मुखम् । काकोदरफणाभ्राजिविल्वालङ्कृतमस्तकम्॥
सुधाधामकखण्डोस्ररत्नगोलकभूषितम् । तद्वै देवीश्वरं लिङ्गं पूजयत्यम्बिका सदा ॥
सुधासागरनीरोस्रकलशैर्नवरत्नजैः । पञ्चामृतमहाधारागन्धमोदैश्च नीरकैः ॥ ३२ ॥
यक्षकर्दमजालेपवेष्टनाम्बरसुन्दरम् । विल्वचम्पकधुत्तूररत्नपङ्कजमालिनी ॥ ३३ ॥
जातीसरावलीशोभिलिङ्गमौलिमनोहरम् । तक्कोलागरुजोद्भूतधूपधूमैश्शिवा तदा ॥
कुरुविन्दमणिज्योतिदीपैरुद्योतितान्तरम् । सुपुण्डरीकमालाभिर्नवनीलोत्पलस्रजा ॥
हरिन्मणिनिभैर्विल्वैस्सहस्रैः पूजयेच्छिवा। भक्ष्यभोज्यवरान्नानां राशिभिश्शैलकन्यका
ताम्बूलैः खदिरासारस्वर्णकर्पूरखण्डजैः । नीराजनैर्मुखरितशङ्खकाहलमद्दलैः॥ ३७॥

वीणावेणुजमड्डूत्थदुन्दुभ्यादिसुनिस्वनैः। रुद्राणीनर्तनैश्चैव योगिनीगणवादनैः॥३८॥
त्रिकालं पूजयत्येवं त्रिपुण्ड्रललितालका । रुद्राक्षकीलितापारमुक्तामणिसरोज्ज्वला ॥
सोमशौचे वाससी साप्यरजे धारिणी शिवा। संस्तुवन्ती महालिङ्गं देवीश्वरमतन्द्रिता
कृताञ्जलिपुटा देवी प्रकृष्टश्चाष्टविग्रहम् ॥ ४१ ॥

देवी—

हर हर परिपाहि दीनवन्धो पुरहर देव दयानिधान धीर ।
मुरहरपरिपूजिताङ्घ्रिपद्म प्रकटसुधाकरशेखरोरुवीर ॥ ४२ ॥
करिवरखरचर्मवस्त्र शम्भो भुजगवरोत्तमहार मारमार ।
परिपाहि दयानिधान भर्ग त्रिनयन कालकलाविहीनदेह ॥ ४३ ॥
श्रुतिवरतुरगोत्तमाद्य शम्भो गरगलनील तमालपुष्पमौले ।
भवभयहर कारणातिगान्तकारे हरिगिरिशरकार्मुकात्तपाणे ॥ ४४ ॥
परिपाहि विभो त्रिशूलपाणे नरहरिकृत्तिवसान बालपाल ।
विधिकन्धरहंसशोभिहस्तपद्मानलनयनाग्निविदग्धकामदेह ॥ ४५ ॥
इमं दवरसामजप्रकटस्तोत्रकुम्भादरं
सनन्दनसनातनैः कलितवन्दनं शङ्करम् ।
अनिन्दितगुणोत्तमं सुमुनिवृन्दवृन्दारकैः
पिचण्डिलसुतुन्दिलैर्गणवरौघनृत्तादरम् ॥ ४६ ॥

स्कन्दः—

इति संस्तुवते देवी देवीशं परमेश्वरम् । रुद्राणीगणसंवीता योगिनीगणसेविता॥४७॥
महाकैलासमध्यस्था दिव्यदेवाङ्कसंश्रया । सापि देवं जगन्माता पूजयत्यनिशं शिवा॥
देवदेवं महादेवं गोवृषोत्तमगामिनम् । वतंसितसुधाधामशेखरं श्रुतिसंस्तुतम् ॥४९ ॥
जटाकलापनिटिलानलनेत्रं महेश्वरम् । नीलकण्ठं विरूपाक्षं सोमसूर्यानलाक्षिकम् ॥
कुरङ्गरञ्जितकरं कालकालं कृपानिधिम् । भस्माभ्यक्तं त्रिपुण्ड्राङ्कं रुद्राक्षवरहारकम् ॥
महोरगफणारत्नमालाकीलितकन्धरम् । उद्यदिन्दुकरप्रख्यकर्पूराभकलेबरम्॥ ५२ ॥

१. हन्तृहस्त शम्भो इति पाठान्तरम् ।

दिव्यसिंह्मासनासीनं महाकैलाससौधगम् । गणस्कन्दमहानन्दिभृङ्गिचण्डीशसेवितम्
मुकुटोद्दामगङ्गोत्थरयशोभितमस्तकम् । अब्जमित्राग्निनयनं सोमखण्डोज्वलालकम् ॥
उत्फुल्लपुण्डरीकाच्छमालाललितकन्धरम् । देवं नन्दनमन्दारवरमालाविभूषितम् ॥
खपटं परितो दग्धत्रिपुरासुरगोपुरम् । अन्धकान्तकमाशास्यं स्वभक्तजनवत्सलम् ॥
नमिताशेषदेवादिमुकुटोज्वलपादुकम् । वामदेवं महासामस्तोमस्तुतमतीन्द्रियम् ॥
रथन्तररवप्रीतं राजद्राजनतोषितम् । महावैराजराजश्रीराजराजकलाधरम् ॥ ५८ ॥
सर्वोपनिषदां सारमेकीभूतमिवेश्वरम् । ध्यायन्ती सा महादेवी स्वमनःपद्मसद्मगम् ॥
तध्यानसारधाराभिः प्लाविताननपङ्कजा।नान्यत्साचिन्तयद्देवी जगज्जन्मादिसंस्थितिम्

इत्थं ध्यायन्ती चन्द्रशेखरपदं चोत्फुल्लहृत्पद्मगं
देवी नन्दननन्दनेऽपि गिरिजा सापारवश्यान्तरा ।
नान्यत्किञ्चन विद्यते त्रिभुवने निस्सारमेतज्जग-
त्तुच्छीकृत्य महाच्छमानसपरा स्वात्मानमीशं हृदि ॥ ६१ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने देवीपूजास्तुतिकथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

## कैलासप्रासादवर्णनं नाम अष्टाविंशोऽध्यायः.

स्कन्दः—

तस्यान्तरे च प्राकारो नवरत्नविचित्रितः । अष्टाशीतिसहस्राणां योजनोच्छ्रयकल्पितः
चतुर्दशमहेशेन मनसैव प्रकल्पितः । ब्रह्माण्डोर्ध्वगमौली स प्रोद्यद्भानुसहस्रभाः ॥२ ॥
न देवा न च गन्धर्वा न यक्षोरगराक्षसाः । गणेन्द्रैरपि दुष्प्रेक्ष्यःप्राकारो रत्नकल्पितः॥
तत्र शैलाश्शिवेनैव चाष्टदिक्षु प्रतिष्ठिताः । निषदो हेमकूटश्च विन्ध्यो मलयदर्दुरौ ॥
मन्दरो हिमवांश्चैव नीलोऽत्रैव प्रकाशितः । तेषां तपस्यया शम्भुस्सन्तुष्टो नितरां तदा
स्वावासेऽपि महाशैले महाकैलासपर्वते । तेषां नित्यं निवसतिं ददौ कारुण्यतश्शिवः॥
अन्यत्र ते शिलाशैलाः कैलासे रत्नसन्निभाः। तत्प्राकाराष्टकोणेषु विहिताश्शूलपाणिना

---

१. नान्यत्किंचिदमन्यत इति पाठान्तरम् ।

पूर्वतो निषधो भाति चाग्नेय्यां हेमकूटकः ।
विन्ध्योऽसौ दक्षिणे भाति मलयो नैरृते स्थितः ॥ ८ ॥
वारुण्यां दर्दुरो भाति वायव्यां भाति मन्दरः । हिमवानुत्तरे भाति चैशान्यां नीलपर्वतः
अष्टदिक्षु स्थिता एते महाकैलासपर्वते । स्वमौलिभिर्भासयन्ति दिशां स्तोमं नगोत्तमाः
तन्मौलिसौधशिखरैस्सूर्यचन्द्रातिकान्तिकैः ।
माणिक्यकान्तिर्निषधश्चैन्द्र्यामिन्द्रधनुः प्रभः ॥ ११ ॥
ईन्द्रगोपनिभो भाति भाभासितदिगन्तरः । अभ्रङ्कषैस्स्वशृङ्गाग्रैर्लेलिहान इवाम्बरम् ॥
तन्मौलिषु स्थितापाररत्नगोपुरभासुरः । नानारुद्रावतारैश्च वृषभैश्चैव शोभितः॥ १३ ॥
भाति भासितदिक्चक्रो मुष्णंश्चक्षूंषि कान्तिभिः ।
तच्छैलमौलिजोत्तुङ्गगजरत्नोरुकुम्भकः ॥ १४ ॥
सहस्रसिन्धुरोत्तुङ्गधरपीठोऽमितप्रभः । महातलो महासौधस्सहस्रस्तम्भमण्डितः ॥
दाडिमीवीजसङ्काशस्स्वच्छकान्तिततोरुभाः । सोपानवेदिकोपेतसहस्रतलमण्डितः ॥
पद्मरागमणिस्तम्भकलशैश्चैव शोभितः । नानारत्नमहामालापरिष्कृततदन्तरः ॥ १७ ॥
तद्रत्नरत्नकान्त्या च सैन्द्रीदिग्रत्नवर्णका। विभाति मण्डलं भानोस्तत्सौधारुणकान्तिभिः
आरक्तं हि नभो विप्रा भाति तच्छैलकान्तिभिः । तत्रागरुमहाधूमैर्बहुलैर्गन्धवत्तरैः ॥
प्रफुल्लवनजापारगन्धवन्धितमारुतैः । तत्र सिंहासनासीनो देव्या साकं महेश्वरः ॥
क्रीडत्यत्यन्तमुदितो गणवृन्दनिषेवितः । तदखण्डमहास्तम्भान्पद्मरागप्रकल्पितान् ॥
स एव द्योतयत्यन्तः कोटिभास्करसप्रभः । पश्यन्नैन्द्रीन्दिशं शम्भुस्तत्रैवाप्यमरावतीम्
तत्रेन्द्रसदनन्देवानिन्द्रादीनमरानपि । देवानां नन्दनोत्फुल्लकुसुमामोदिमारुतम् ॥
जिघ्रन्स्वाङ्गमहाहारकाकोदरसुपारणम् । सप्ताब्धिचलनास्फालतरङ्गावलिमीश्वरः ॥
फेनबुद्बुदजालैश्च शिवनन्दननन्दितः । तरङ्गहस्तैश्च सदा नमन्त इव सागरान्॥२५॥
तत्तदब्धिमहाद्वीपमण्डलं सरितो नगाः । वनानि देवयानश्च स्वर्गिणाश्च गतीस्तथा ॥
भोगं पातङ्गर्मिणाश्च पश्यन्हृष्यति चाम्बया । निषधेशालयं तत्र मणिकुम्भमनोहरम्॥
निषधो मूर्तिमांस्तत्र तल्लिङ्गं पूजयंस्तदा । भस्मरुद्राक्षसम्पन्नो दिव्यैः पञ्चामृतैस्तदा॥
गन्धैश्चैव च वासोभिर्बिल्वमन्दारचम्पकैः । धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलैश्च नमंस्तदा ॥

प्रदक्षिणाभिस्सततं निषधेशं स्तुवंस्थितः ॥ ३० ॥

निषधः—

निषधेशं भवरोगभेषजं सुनिषण्णं सकलेऽपि भूतवर्गे ।
विषमाक्षं कलुषैर्विहीनदेहं प्रणमामीश्वरमेवमेव नित्यम् ॥ ३१ ॥

स्कन्दः—

एवं स्तौति महादेवं निषधः प्राग्दिशि स्थितः। हेमकूटस्तथाग्नेय्यां दिशि मौलौ महाप्रभः
गोमेदकमहारत्नभासुरोन्नतमस्तकः । स्वकान्तिभिस्तथाग्नेयीं दिशं सम्राडयं स्थितः ॥
गोपुरापारशिखरैः खमौलितटसंस्थितैः । महर्लोकातिगैश्शृङ्गैर्महामणिवराङ्कितैः ॥
रुद्रावतारचरितैर्गोष्टपोत्तममस्तकैः । मणिकुम्भैश्च विततै रत्नमालावलम्बितैः॥ ३५ ॥
तत्र सौधो महानुच्चैर्गोमेदमणिसुन्दरः। गोमेदमणिजोत्तुङ्ग महापालीसहस्रकः॥३६॥
सहस्रपालीपीठस्थस्तम्भविद्रुमपुत्रिकः । सहस्रं पालयंस्तत्र वैडूर्यवरपीठकम् ॥ ३७ ॥
सहस्रतलसंयुक्तो मणिधाराच्छपालिकः । तदाग्नेयमहाकोण गोपुरेष्वन्तरा स्थितः ॥
वेदिकापट्टिकोपेतो देवगोष्ठैश्च मण्डितः । ललामराजद्रूपभो वलभीपरिवेष्टितः ॥ ३९॥

वालार्कविततच्छायस्स्वच्छान्तस्स्तम्भकान्तिकृत् ।
तस्मिन्मणिमये मञ्चे लम्बमाने च संस्थितः ॥ ४० ॥

मणिशृङ्खलसंराजद्वितानपरिवेष्टिते । कुथोपधानैस्स्वास्तीर्णे तिष्ठतीशस्सहाम्बया ॥
आग्नेयबहुलामोदवनगन्धैश्च सुन्दरम् । मारुतो वाति भूपानां प्रमोदामोदसुन्दरः ॥
तमालसुन्दरवनमग्निलोकविभूषणम् । अग्निदिक्सौधगं तत्र सेवितं सुमनोहरम्॥४३॥
अग्नीश्वराभिधं लिङ्गं पूजयन्तो हि वह्नयः। आग्नेयगणपैश्चैव तत्र तल्लोकवासिभिः ॥
पुरा समर्च्य तल्लिङ्गं सर्वभक्षकृता दधत्। विमुक्तस्स तदा वह्निस्तं पश्यन् शङ्करोऽम्बया
तत्रत्यलोकनिचयं सप्ताब्धिपरिवेष्टितम्। द्वीपान्वनानि सरितः पश्यत्यम्बासमन्वितः॥
हेमकूटो महाशैलो मूर्तिमान्लिङ्गमैश्वरम् । हेमकूटेश्वरं नाम्ना प्रतिष्ठाप्यात्र भावनैः ॥
स्तौति देवं महादेवं हेमकूटश्शुभव्रतः ॥ ४८ ॥

१. आनलैस्सौधगैस्तत्रेति पाठान्तरम् । २. हेमकूटो भस्मरुद्राक्षधृङ्गः इति पाठान्तरम् ।

हेमकूटः—

पापाद्रिकूटकुलिशोत्तम हेमकूट वीटीकृताखिल सुमेरुज हेमकूट ।
प्रोद्यत्सुधांशुचयमौलितटोरुभास्वत्कोटीर घोटककृतागमकूट पाहि ॥ ४९ ॥
इत्थं सदा हेमकूटस्तत्र स्तौति महेश्वरम् ॥ ५० ॥
शैलसौधकारे परमेश्या चारुचन्द्रशकलाङ्कितमौलिः ।
नन्दिभृङ्गिकणपैश्च सर्वलः क्रीडति श्रुतिशिखामलवाक्यैः ॥ ५१ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासप्रासादवर्णनं नाम
अष्टाविंशोऽध्यायः ॥ २८ ॥

कैलाससौधवर्णनं नाम एकोनत्रिंशोऽध्यायः.

स्कन्दः—

यः पस्पर्ध पुरा मेरुं विन्ध्योऽसौ चारुकन्दरः । यन्मौलिनिलया देवी सोऽयंपर्वतशेखरः
इन्द्रनीलमयस्तत्र दक्षिणे भाति भूधरः। लिहन्त्सजिह्वया लोकानास्ते सोऽत्यन्तसुन्दरः
त्यक्त्वा स्वानतिजात्यन्तदुःखं तत्र घटोद्भवात्। सूर्यातिगगतीभिश्च शृङ्गैरङ्कितदिक्तटः
महेशाश्रयजोन्मादमुदितो विन्ध्यभूधरः । तन्मौलिगोपुरोत्तुङ्गशिखरैर्वृषभैरपि॥ ४॥
महानीलगणोद्यद्भानीलीकृतदिगन्तरः । तन्मौलितिलकोद्दामपुण्डरीकसहस्रकैः॥ ५॥
दंष्ट्राकरालैर्विकृतैर्धारितस्सौधसत्तमः । वेदिकापट्टिकोपेतसहस्रस्तम्भमण्डितः ॥ ६ ॥
तत्रागरुमहाधूपैर्ज्वालोज्वलितदीपकैः । सहस्रतलसंयुक्तो नीलकुम्भोज्वलच्छिखः ॥
नीलसारैश्च वृषभैर्मणिनेत्रैश्च शोभितः । स्फटिकेन्द्रमहानीलजालकाङ्कितकुट्टिमः ॥
नीरनीलोत्पलकृतचारुमालाविभूषितः । गवाक्षित इवाभाति चाम्बरं तत्र सुन्दरम् ॥
तस्मिन्त्सौधोत्तमे मञ्चे चेन्द्रनीलोरुपादके । तस्मिन्मञ्चोपरिलसन्नीललोहित ईश्वरः॥
देव्या सदास्ते नितरां गणवृन्दनिषेवितः। पश्यन् यामीन्दिशं शम्भुर्यमं संयमिनीश्वरम्
नरकाणां विचित्राश्च गतयस्तत्र शङ्करः । क्लिश्यमानान्दह्यमानान्पच्यमानान्महेनसः॥
अशैवानथ पापिष्ठान्भस्मरुद्राक्षवर्जितान् । लिङ्गार्चनविहीनांश्च शिवनामोज्झितांस्तथा
रुद्राध्यायजपैर्हीनान्पञ्चाक्षरविवर्जितान् । शिवनैवेद्यरहितान्मलाशींस्तत्र शङ्करः ॥

सप्ताब्धिवेष्टितापारभूमिभागान्महेश्वरः। नगांश्च सरितः पुण्या वनान्युपवनानि च ॥
क्रीडत्यत्यन्तमुदितो देवो देव्या महेश्वरः। विन्ध्यमौलिमहासौधे नीलेन्द्रमणिकल्पिते
विन्ध्यो विन्ध्येश्वरं लिङ्गं तत्र सम्पूज्य भक्तितः। पञ्चामृतैःफलरसैश्चन्दनैर्धूपदीपकैः॥
विल्वचम्पकमन्दारकरवीरसुपङ्कजैः। प्रदक्षिणानतीभिश्च मणिनीराजनैरपि ॥ १८॥
सम्पूज्य विन्ध्यस्संस्तौति भक्त्या विन्ध्येश्वरं शिवम् ॥ १९ ॥

विन्ध्यः—

विन्ध्येश वन्ध्यदिवसो न भवेत्कदाचित्त्वत्पादपूजननतिस्तुतिभिर्ममाद्य।
वन्ध्योऽपि त्वत्पदनिवेदितभोज्यभुक्स्याद्विन्ध्योपमं दृढतरं हि सुतं लभेत ॥

स्कन्दः—

इत्थं स्तौति सदा विन्ध्यो विन्ध्येशं तत्र शैलराट्।
मलयो नैरृते भाति राजत्सुन्दरशेखरः ॥ २१ ॥
पुष्परागमणिप्रख्यो नानानिर्झरकन्दरः। रम्यशृङ्गाग्रविलसद्गोपुरावलिभासुरः॥२२॥
रुद्रक्रीडादिसहितो ललामवृषभाश्रितः। स्वप्रभाभासितोल्लासिसर्वलोकातिगो नगः॥
भाति भूमिधरस्तत्र सौधोत्तमविभूषितः। सहस्रसारसोत्तुङ्गशिरोभिर्धारितो महान् ॥
पुष्परागमणीक्लृप्तसहस्रस्तम्भमण्डितः। सुरत्नकलशोपेतस्सहस्रतलमण्डितः ॥ २५ ॥
परार्ध्यरत्नखचितसिंहासनवराश्रयः। रत्नगुच्छमहापुष्पसरालम्बितपीठभूः ॥ २६ ॥
तत्रस्थभूषणोपेतो देव्या क्रीडति शङ्करः। महामलयजोद्भूतचन्दनामोदिमारुतैः॥
चन्द्रचन्दनलिप्ताङ्गो महाकल्पकपुष्पधृक्। गुग्गुलूद्दामसुभगधूमामोदितदिक्तटः॥
तान्नैरृतीं दिशं शम्भुः पश्यन्निरृतिजान्गणान्।
कृष्णान्करालान्विकटान्निस्त्रिंशवरधारिणः ॥ २९ ॥
सप्ताम्बुधीनां कोणानि तदन्तर्गतभूमपि। द्वीपांश्च सरितश्शैलान्वनानि च महेश्वरः॥
मलयेन स्वनाम्ना वै लिङ्गन्तन्मलयेश्वरम्। मणिधाममयं तत्र पूजितं सर्वकामदम् ॥
पञ्चामृतैश्चन्दनैश्च विल्वमन्दारचम्पकैः। धूपैर्दीपैश्च नैवेद्यैः प्रणामप्रक्रमादिभिः॥
संस्तुवन्परया भक्त्या गिरिणा मलयेन च॥ ३३॥

मलयः—

मलयेश महेश शङ्कर प्रमथाधीश्वर चारुचन्द्रमौले ।
त्वयि जातमिदं जगत्किलापि शम्भो प्रलयं याति लये त्वदीयकुक्षौ॥३४॥

स्कन्दः—

इत्थं स्तौति सदा देवं मलयश्शैलसत्तमः। दर्दुरः पश्चिमे भाति नानाशृङ्गवराश्रयः॥
वैडूर्यसारसुभगतत्सूत्रछविना ततः । तन्मौलिगोपुरापारशिखरैरतिभासुरः ॥ ३६ ॥
रुद्रावतारचरितैर्महोक्षगणसङ्कुलः । दोधूयमानशृङ्गाग्रपताकावलिशोभितः ॥ ३७ ॥
महाशार्दूलसाहस्रधारितस्तन्मणिप्रभैः । सहस्रस्तम्भसंयुक्तो वेदिकापङ्क्तिकान्वितः ॥
मुक्ताच्छगुच्छसञ्छादिवितानविततान्तरः । धूपामोदातिवहुलगन्धनन्दितदिक्तटः॥
वैडूर्यसारगर्भाच्छसुन्दरान्तरकाञ्चितः । तत्र सिंह्मासनं दिव्यं पञ्चयोजनकल्पितम्
परार्ध्यास्तरणोपेतं तस्मिन्देव्या महेश्वरः । विहरत्यन्तरगणैर्वरुणो वारुणीं श्रितः ॥
दिशं पयोधिनाथेन पालितां यादसां तदा । वैडूर्यरत्नमकुटतटवद्धेन्दुशेखरः ॥४२ ॥
मणिकुण्डलगण्डोद्यत्प्रभाधवलिताङ्गकः । वलयाहीश्वरोद्भासिफणाफणितहस्तकः ॥
कृष्णागरुसुधूपोत्थधूमधारानुरञ्जितः । महार्हवसनोपेतश्चलच्चामरवीजितः ॥ ४४ ॥
तद्वैडूर्यमहासूत्रधाराविद्योदितान्तरः । पश्यन्पश्चिमदिङ्नाथं वरुणं तद्गणानपि॥ ४५ ॥
पाशहस्तान्हरिद्वर्णान्करालारुणदंष्ट्रकान्। तत्र सप्ताब्धिवलयं नदीनदवनानि च ॥
देवभागांश्च तत्रत्यान् क्षेत्राणि च महेश्वरः। विहरत्यम्बया सार्धं सौधे तस्मिन्पिनाकधृक्
दर्दुरेशाभिधं तेन पूजीतं दिव्यधामगम् । पञ्चामृतासेचनैश्च गन्धैर्बिल्वैश्च चम्पकैः ॥
धूपैर्दीपैश्च नैवेद्यैर्नमनप्रक्रमस्तवैः । तुष्टाव दर्दुरो देवं दर्दुरेशं महेश्वरम् ॥ ४९ ॥

दर्दुरः—

पापापारमतङ्गकुम्भहरणे त्वं शङ्करो दर्दुरो
भीमोऽहीश्वरकङ्कणोत्तमलसत्पाणीनखोद्यत्प्रभः ।

---

१. नदीनां वदनानिच इति पाठान्तरम् ।

सिम्हस्सर्वसुरेश्वरो हि भगवानिन्दूकपर्दोज्वल-
स्सर्वेषां जनिता गेराश्वितगलः काशे गुणैर्वाचकः ॥ ५० ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलाससौधवर्णनं नाम
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## शैलकृतस्तुतिर्नाम त्रिंशोऽध्यायः.

स्कन्दः—

वायव्यां मन्दरस्तत्र मणिसुन्दरकन्दरः । महेशस्य प्रियो नित्यं सर्वमन्दारनन्दितः॥
मन्दारतरुभिस्तस्य मौलिस्थैर्द्योतिता दिशः । हरिन्मणिप्रभाजालपरिष्कृतदिगन्तरः॥
सोऽयुतं योजनायामैर्विस्तारोच्छ्रायविस्तरः । अतुलस्सर्वशिखरिशिखात्रातैकसुन्दरः
चन्दनानन्दितमुखस्सुमगन्धोज्वलच्छिखः । रत्नसालतमालालिमौलिपालिविराजितः
तत्रैव मन्दरोद्दाम शेखरैरमितप्रभैः । विभान्ति तद्धरिमणिहरितास्शाड्वलोपमाः॥ ५ ॥
चकास्ति तद्दिशां वक्त्रं नानापक्षिमृगैर्युतम् । तन्मौलिगोपुरापारकलशद्योतिताम्बरः॥
रुद्रावतारचरितैर्धेनुपोतगणैश्शुभैः । सहस्रहंसमौलिस्थसौधराजिविराजितः ॥ ७ ॥
वेदिसोपानकोपेतस्सहस्रस्तम्भमण्डितः । तलैर्वल्लितपालीभिर्वलभीभिर्विचित्रितैः॥ ८॥
तस्यान्तर्मणिपादाच्छस्वच्छसिंहासनं वरम् । साम्राणिधूपवहलगन्धगन्धवहाश्रयः॥
रत्नजालमहासालजालकावलिकीलितः । मन्दरोत्थमहानन्द सुमसुन्दरमारुतः॥१०॥
दिव्यमन्दारजामोदफुल्लमालावृतोदरः। हरिन्मणिमहादीप सारधारावृतान्तरः॥११॥
तत्रदेव्या हरित्कान्त्या वामभागस्थया शिवः। सेवितो हरितोद्दामपादमश्चेऽधिसंस्थितः
वायुं सत्यवदालोकांस्तत्रत्यान्गणपानपि। सागरान्तरजान्द्वीपान्वनानि सरितो नगान्
देवलोकांस्तथादेवो देव्या लोकान्प्रतीक्षयन् । मन्दरेणार्चितं तत्र लिङ्गं सुन्दरमन्दिरे
नाम्नैव मन्दरेशानमिन्दुकुन्दसमप्रभम् । पञ्चामृतैस्तथा नीरैश्चन्दनैर्बिल्वपल्लवैः ॥
अरविन्दमरन्दैश्च मन्दारतरुजैस्सुमैः । धूपैर्दीपैश्च नैवेद्यैर्नमनप्रक्रमैस्तथा ॥ १६ ॥
आनन्दसुन्दरोदारस्तवैस्संस्तौति भक्तितः ॥ १७ ॥

---

१. गरंजरयिता केशं गुणैरिति हरंजरयिता कोशो गुणैरिति च पाठान्तरम् ।

मन्दरः—

श्रीमन्दरेश विविधागममौलिवृन्दसन्दोहनन्दितपदाम्बुजभृङ्गभावम् ।
सम्प्रार्थयामि तरुणेन्दुकलाललाम बृन्दारवन्दितपदाम्बुजसेवयाहम्॥ १८॥

स्कन्दः—

इत्थं स्तौति सदा देवं मन्दरश्चारुकन्दरः । मम मातामहोद्दामशेखरैरर्दिता दिशः ॥
हीरसारमयो भाति हिमवान् गगनातिगः । हिमसारमहाधाराशशिकान्तशिलामयः ॥
तत्कान्तिकान्तिता लोका महागोपुरभासुरः । रुद्रावतारचरितैर्नृपस्तोमविराजितः ॥
नियुतं योजनायामः कैलासोत्तरभागगः । सहस्रकेसरिसटातटभ्राजिसुपाण्डरः ॥२२
तद्धारितमहाहीरप्रासादोच्चच्छिखाश्रयः । सहस्रस्तम्भसंयुक्तो रम्यसोपानवेदिकः ॥
महाहिमघनीभूतचन्द्रस्फटिकपीठकः । सम्फुल्लमोदिविपिनसुमगन्धितमारुतः॥ २४ ॥
शिलारसमहारीतिगन्धमाद्यत्सुमद्रुमः । तक्कोलागरुकस्तूरीमोदिचन्दनमस्तकः॥ २५॥
कुरवाशोकवकुलचम्पकोद्दामगन्धकः । कर्णिकारमहावक्वस्तिलकाङ्कितमस्तकः ॥
कुटजोद्दाममकुटो वटासटजटाधरः । त्रिपुण्ड्रकृताकारतक्कोलाङ्कोलसुन्दरः ॥ २७॥
महाहिमकराकार महाहिवरधृङ्ङ्गः । हरमौलिजटोल्लासि हिमधामोज्ज्वलप्रभः ॥ २८ ॥
दिव्यगङ्गापयःपूरनिर्झरावृतकन्धरः । स्वकीयमौलिसौधस्थ पङ्कजाकारसप्रभः॥२९॥
गौरीशङ्करपादाब्ज ध्याननिर्धूतहृत्तमः । जामातृकन्यकानन्दं प्रीत्या शैलेश्वरस्तदा॥
नितरां हर्षवर्षाश्रुकणान्मुञ्चन्निव स्थितः । नीलपीतारुणापाररीतिभासुरकन्दरः ॥
तत्र तच्छैलशिखरे महाहीरोपलैः कृते । हीरजालकसञ्छन्ने हीरमञ्चाच्छपादके॥३२॥
परार्ध्यास्तरणास्तीर्णे तगरोद्दामधूपिते । हीरकान्तिमणिज्योत्स्नानिवारिततमोगणे ॥
महाहीन्द्रमणिव्राताकल्पभूषितविग्रहः । देव्या हरिन्मणिततशरीरवरकान्तया ॥ ३४॥
नितरां मञ्चमध्यस्थो भाति भाभिर्महेश्वरः । स्वपितुश्शिखरे देवी नितरां तोषवेषभूः॥
रमयत्येव देवेशं यथा कन्या पितृक्षये । भर्त्रा नित्यं प्रमोदेत न तथा श्वशुरालये ॥
देव्या विहरतीशानः पश्यन्धनपतेर्दिशम् । यक्षोगणोषितां तत्र तथैवैलविलेः पुरीम् ॥
शातकुम्भमहाभूमिमुत्तरांश्च कुरूंस्तथा । देवोद्यानानि पुण्यानि सप्ताब्धिपरिवेष्टनम्
स्वर्णतालफलं तत्र तत्फलामोदिगन्धभूः । ताम्रपृष्ठां तथा भूमिं सहस्रं योजनायताम्॥

सुधासागरमध्यस्थमणिद्वीपं शिवप्रियम् । नीपापारवनं तच्च रत्ननीपैस्समावृतम्॥४०॥
हिमशैलामलाकारधारासौधे महेश्वरः। देव्या विहरति स्वैरं चलच्चामरवीजनैः॥४१॥
रत्नचाम्पेयमालाभिर्भूषितस्तत्र शङ्करः। गणेन्द्रैरुद्यतलसत्त्रिशूलकरभासुरैः ॥ ४२ ॥
हिमाचलेश्वरं लिङ्गं चन्द्रस्फटिकधामगम् । अपारवरिवस्याभिर्हिमशैलेन चार्चितम् ॥
पञ्चामृतैः फलरसैस्सुगन्धैर्यक्षकर्दमैः। बिल्वारविन्दकह्लारैश्चम्पकैर्वकसम्भवैः॥ ४४॥
धूपदीपोपहारैश्च प्रणामप्रक्रमादिभिः। अस्तौषीद्धिमशैलेशं हिमवांश्च कृताञ्जलिः ॥

हिमवान्—

परिणतहिमधामकान्तिराजज्जटयालङ्कृतगङ्गयोरुभासम् ।
भवदाननपङ्कजोत्पलाभे रविसोमानललोचनैर्विलोकयाशु ॥ ४६ ॥

स्कन्दः—

इत्थं हिमाचलस्स्तौति हिममौलिमहेश्वरम्। नीलो विभाति चैशान्यां कैलासामलपर्वते
रम्यसानुशतोपेतस्सहस्रशिखरैर्वृतः । नीलोऽपि वामतश्शैलः प्रवालमणिभासुरः ॥
उदारतरगम्भीरशेखरालेडिताम्बरः। ऐशान्यां गोपुरैर्भाति रुद्रक्रीडापरीवृतः॥ ४९॥
उद्यद्द्युमणिसङ्काशकलशैरतिभासुरः। भूसुराणाञ्च शरणैस्सुभासुरनगावृतः ॥५०॥
महागोपतिभिर्युक्तो विद्रुमाभोऽरुणोरुभाः। तन्मौलिमणिगास्युच्च प्रवालपरिकल्पितैः॥
महाशरभसाहस्रैर्धारितस्सौधसत्तमः । हृत्तमोनाशकस्तत्र रम्यो भूसुरभासुरः ॥ ५२॥
तत्र राजन्ति विविधवेदिसोपानपङ्क्तिकः। सहस्रस्तम्भसंयुक्तः प्रवालमणिकल्पितः ॥
सौधराडगमौलिस्थो भात्युद्यत्तरणिप्रभः। सहस्रतलमौलिस्थप्रवालमणिकुम्भवान् ॥
प्रवालवर्तुलात्यच्छमालागुच्छैकशोभितः । तत्रैव सुमनामोदमाघ्रद्भृङ्कृतषट्पदः॥५५॥
तत्प्रवालमणिज्योत्स्नानिवारिततमस्त्रुटिः। तस्मिन्प्रवालपादाच्छमञ्चके स्तरणास्तृते
देव्या विहरति प्रीत्या चन्द्रचूडो महेश्वरः। सप्ताब्धिवेष्टितापारभूमयो द्वीपकानपि ॥
वनानि सरितश्शैलान्क्षेत्राण्यपि महेश्वरः। ईशानलोकं तत्रैव नानारुद्रगणैर्वृतम्॥५८॥
दिव्यन्तरिक्षभूमिस्थैर्हेतिपाशधरैर्युतम्। वृक्षौषधीष्वथान्ने च पथि शैलेषु ये चराः ॥
ललामराजच्चन्द्रार्कैर्जटामकुटधारिभिः। गणेन्द्रैरुरगेन्द्रैश्च क्रोधारुणितलोचनैः॥६०॥

१. विलोकयाशुमान्त्वमित्यधिकः पाठःक्वचित् ।

ब्रह्माण्डदलनैश्चैव चापीतार्णवघोषकैः । युतमीशानमाशास्यः पश्यत्यम्बासमन्वितः ॥

तत्तन्नगवरोद्दामशिखरेषु शिवालयाः । परितस्सन्ति तेषान्तु नाम्ना लिङ्गोत्तमा अपि
शृणुष्व जैगीषव्यत्वं पापभङ्गाय केवलम्। निषधेशो हेमकेशो विन्ध्येशो मलयेश्वरः ॥
दर्दुरेशो मन्दरेशो हिमशैलेश्वरो हरः । नीलेश्वरोऽहि परितो महासौधवराश्रयाः ॥
रम्यगोपुरकोपेता नगास्तत्र वपुर्धराः । पूजयन्त्यत्र लिङ्गानि बिल्वपत्रैर्मनोहरैः ॥
नीलोऽपि तत्र नीलेशं पूज्यानेकैस्सुमैरपि । धूपैर्दीपैश्च नैवेद्यैस्स्तौति नीलेश्वरं शिवम्
स्वमौलिमणिजापारधामगं प्राञ्जलिस्तदा ॥

नीलः—

नीललोहित महागरकन्धरामलकपालभुजङ्गविभूषण ।
कालकालभगवन्कृपाम्बुधे तारयाशु भवसंसृतिजालम् ॥ ६७ ॥
इत्थं स्तुवन्ति ते शैला गिरीशां गिरिशं तदा ॥ ६८ ॥

गिरयः—

हर हर परमेश देवदेव त्रिपुरयमान्धकजातभीतिनाश ।
अगपतितनयाधव प्रभो नः परिपाहीश्वर देवसार्वभौम ॥ ६९ ॥
भवता भवतापहारिणा वसता नाकशिरोत्थसौधमौलौ ।
वयमप्यमला नगाश्शिलाभिर्नगवल्लीतृणपक्षिवीरुधैः ॥ ७० ॥
सुमृगैरपि चन्द्रचूड शम्भो गतिभाजस्सुतरां च धन्यधन्याः ।
वेदेषु प्रथितोऽसि रुद्र भगवन् मीढुष्टमश्शङ्करो
बभ्रुश्शम्भुरखण्डघोषकरणश्चोग्रोऽसि भीमोऽसि च ।
अस्माकन्त्वधिपोऽसि पाहि दयया ख्यातो निरीशोऽपि च ॥ ७१ ॥

इति श्रीशिवरहस्ये प्रथमांशे शैलकृतस्तुतिर्नाम
त्रिंशोऽध्यायः ॥ ३० ॥

प्राकारवर्णने रुद्रगणार्चनं नाम एकत्रिंशोऽध्यायः.

स्कन्दः—

तस्मादत्युत्तमे विप्रा गणा विष्ण्वादयस्सुराः। कैलासमौलौ तच्छम्भोर्नवरत्नपरिष्कृतः
प्राकारो लक्षमानेन चायामोच्छ्रायसम्मतः। इन्द्रगोपकसङ्काशसुधामणिमहोपलः ॥
कल्पितोऽस्ति महेशेन मनसैव द्विजोत्तमाः। नमयो विश्वकर्मापि तत्कैलासवरालयम्॥
मनसा कल्पितुं शक्यं किं शिल्पैरखिलैरपि। नानारत्नमणिव्रातभासुरश्चन्द्रसुन्दरः ॥
शाणोल्लीढामलमणिकान्तिसारोऽयमुत्तमः। रम्यो गन्धर्वनगराकाराकारोऽयमुन्नतः॥
तत्प्राकारवरोत्तुङ्गमणीन्द्रवृषभाश्रितः। अन्तरिक्षे रुद्रगणास्तच्छ्रीप्राकाररक्षकाः ॥
एकादशसहस्रं वै बाणकार्मुकपाणयः। महानिषङ्गपृष्ठास्ते कपर्दधृतचन्द्रकाः ॥ ७ ॥
सिह्मसंहननास्सर्वे युवानो मृष्टकुण्डलाः। करिशृङ्गाभवृत्तोरुभुजदण्डवरायुधाः ॥८॥
चिन्तामणिगणासारगोपुरं कुम्भरञ्जितम्। रुद्रावतारचरितैश्शोभितं सुमनोहरम्॥
मौलिसंस्थमहानन्दिनन्दिताखिलदिक्तटम्। प्राच्यां तद्गोपुरं शम्भो रक्षन्ति गणपास्सदा
प्राकारश्चापि ते सर्वे त्रिशूलोद्यतपाणयः। तत्र शम्भोर्गणैर्लिङ्गं पूजितं सर्वकामदम् ॥
मणिरुद्रेश्वरं नाम्ना चिन्तामणिगणक्षये। प्रोद्यत्कुम्भैकवसता पूजितं तं गणेश्वरैः ॥
संस्तुतं परया भक्त्या चान्तिरिक्षे गणैस्तदा ॥ १३ ॥

रुद्राः—

संसारतापजमहारुजमाशु चेश सद्यो विनाशय महेश्वर चारुदृष्ट्या।
रुद्रो भवान् श्रुतिशिखामलगीतकीर्ते पाहीश वेदवचनैर्भिषजां त्वमीशः ॥

स्कन्दः—

एवं स्तुवन्ति तं देवं मणिभद्रेश्वरं गणाः। तद्दक्षिणेऽपि प्राकारं मुक्तारत्नविनिर्मितम्॥
तन्मध्यगोपुरवरं मणिमाणिक्यनिर्मितम्। महामणिशिखाकीलकलितं शेखरान्वितम्
रुद्रावतारचरितैर्वृषभैश्चसमन्वितम्। एकादशसहस्रं वै तोमरासिवरायुधाः ॥ १७ ॥
महाबलामहोत्साहा दिव्यास्तत्र गणाश्शुभाः। जटामुकुटशोभाढ्यास्तारानाथकलाधराः
शिवाज्ञाकारिणस्सर्वे यौवनोन्मत्तविग्रहाः। तत्र सम्पूजयन्त्येव दिव्यरुद्रेश्वरं हि ते॥
मणिधाम्नि महालिङ्गं सम्पूज्य स्तुवंतीश्वरम् ॥ २० ॥

रुद्रगणाः—

दिव्येश्वर त्रिदशवर्गजजातदुःखसन्तापवृन्दपुरनाशन ते विनीतम् ।
देवेश ते वरदयारसपात्रमीश त्वस्मान्त्सदाशिव सदैव सुरक्षतान्नः ॥ २१ ॥

एवं स्तुवन्ति ते रुद्रा दिव्यरुद्रेश्वरं तदा । गोपुरं तच्च प्राकारं रक्षन्ति सततं गणाः ॥
तत्पश्चान्मणिसङ्कॢप्तप्राकारं मणिगोपुरम् । रुद्रावतारचरितैर्लैलामवृषशेखरैः ॥ २३ ॥
प्रोल्लसत्ककुदैश्चैव मणीन्द्रमुकुटैरपि । तत्र रक्षन्ति गणपा हेतिशूलवरायुधाः॥ २४ ॥
त्रिपुण्ड्रावलिफालोरुकपर्दवरमौलयः । बालारुणप्रतिप्रख्यचञ्चचन्द्रकलाधराः॥ २५ ॥
एकादशसहस्रं वै रक्षन्ति गणपास्सदा । दक्षाध्वरविनाशाय महेशाज्ञाद्विनिर्गताः ॥
रौम्या नाम गणश्रेष्ठा मत्तमातङ्गविक्रमाः । तत्र ते पूजयन्त्येव रौम्येशं मणिधामगम्
पूजयन्ति स्तुवन्त्येव रौम्यानाम गणाश्शिवम् ॥ २८ ॥

रौम्याः—

त्वद्रोमजातविधयो हरविष्णुसङ्घा रक्षन्ति देव जगतां स्थितिनाशकेऽपि ।
त्वत्पादपङ्कजरजश्शिरसा वहन्तः पाहीश नोऽद्य कृपया सरसार्द्रदृष्ट्या ॥

इत्थं स्तुवन्तिते रौम्या महेशं भक्तिभाविताः। उत्तरे भौमकानाम गणाश्शम्भोर्महात्मनः
एकादशसहस्रन्तु विकोशीकृतहेतयः । दंष्ट्राकरालवदना जटाबद्धेन्दुखण्डकाः॥ ३१॥
सजलोद्दामघनभास्सदेहास्तेऽतुलप्रभाः । भस्मदिग्धास्त्रिपुण्ड्राङ्का रुद्राक्षावलिभासुराः
खेटटकाध्वनिभृतस्तटित्कूटसमारवाः । उरगेन्द्राधिकक्रोधा उरगेन्द्राधिका जवे ॥
शिवाज्ञाकारिणो भौमा बलवीर्यपराक्रमाः । ततोत्तरे च प्राकारे मणिसालोज्वलप्रभे ॥
तन्मध्यगोपुरे चापि रुद्रक्रीडावृषैर्युते। मणिराजन्महाकुम्भे रञ्जिते भानुसप्रभे॥३५॥
तिष्ठन्ति ते च रक्षन्ति प्राकारं तच्च गोपुरम्। तैश्च भौमेश्वरो नाम्ना मणिधामगतोऽर्चितः
संस्तुतः परयाभक्त्यालिङ्गसंस्थोमहेश्वरः ॥ ३७ ॥

भौमाः—

भौमेश भीमरथतुङ्गरथाङ्गदाने सम्मोदितो हरिहराम्बुजलोचनेन ।
भूमातिगाखिलगते परिपाहि सोमधामोत्तमाङ्ग ललनाञ्चितचारुदेह ॥ ३८॥

स्कन्दः—

इति स्तुवन्ति ते भीमा महादेवं घृणानिधिम् । विंशत्सहस्रं परितः प्राकारमणिगोपुरैः
शोभितं वृषभैश्चित्रैर्नानाशिल्पैकसुन्दरैः । मनसाप्यनुमानेन नोपमेयं मनोहरैः॥ ४०॥
चतुर्दिक्ष्वपि ते रुद्रा ब्रह्मविष्ण्विन्द्रहन्तृकाः । हेतिशूलकरास्सर्वे भस्मपाण्डरविग्रहाः॥
रम्भोपमानवृत्तोरुऊरुद्वयविराजिताः । वक्षःकवाटपट्टाभहिरण्यकवचावृताः ॥ ४२ ॥
उष्णीषिणोमुकुटिनश्चोरगेन्द्रोरुमौलयः।धावन्तस्संस्थिताः केचिन्निषण्णास्स्वापकाःपरे
निषङ्गिणः कवचिनश्शरकार्मुकपाणयः । वर्षन्तश्शरवर्षैश्चाप्यशैवान्भुन्नसायकैः ॥४४॥
पथि वृक्षे जले चैव सागरे भुविसंस्थिताः । विपिने च तथा ग्रामे पुरे खर्वे वृके तथा॥

शिवाज्ञाकारिणस्सर्वे चाग्निदीप्ता महौजसः ॥ ४६ ॥

सूतः—

एवन्ते वरगोपुरैश्च सहिता रुद्राश्चतुर्दिक्ष्वपि
प्राकारं मणिसारसुन्दरतमं राजद्वृपाधिष्ठितम् ॥ ४७ ॥

इति श्रीशिवरहस्ये प्रथमांशे प्राकारवर्णने रुद्रगणार्चनन्नाम
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## सभावर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

स्कन्दः—

तस्यान्तरे शिवेनैव मनसा परिनिर्मिताः । विंशत्सहस्रमानेन आयामोच्छ्रायतस्तदा ॥
प्राग्दक्षिणे प्रतीच्यां वै चोत्तरे शूलपाणिना। मणिप्रभाधिकज्योतिकैलासनगमौलिगाः
कलधौतनगोद्दामशिखरे तिलकायिताः । पुमर्था इव राजन्त्यश्चतुर्वेदशिखोपमाः॥ ३॥
रङ्गस्थानं महेशस्य शम्भोस्सन्ध्यानटस्य च । शातकुम्भमहाकुम्भसहस्रेणोपशोभिताः॥
निष्टप्तहेमक्लृप्तास्ते महामेरुगुहोपमाः । तत्तत्कुम्भमहास्तम्भसहस्रपरिशोभिताः ॥ ५ ॥
सुवद्धमणिसोपाना वेदिकापट्टिकोज्ज्वलाः । मरालराजवल्युत्थमुक्ताभक्षितचञ्चुकाः॥
उत्कोचनीलपीताच्छरत्नजालकचित्रिताः । मुक्तागुच्छावृतापारमालाजालकितान्तराः

---

१. खर्वेऽटके तथा इति पाठान्तरम् ।

प्रवाललतिकाक्लृप्तस्तम्भविद्रुमपुत्रिकाः। हरिन्मणिकृतापारपालिबन्धोरुहस्तकाः॥ ८॥
पुष्परागमहासिंहसटामण्डलकीलिताः। गजशुण्डोरुधाराच्छनीलकुम्भोरुमौलिकाः॥
वैडूर्यधारासूत्रोद्यन्नागबन्धविराजिताः। मोलिपालिजहंसालिकपोतकुलसुन्दराः॥
रत्नोत्कीर्णाच्छवलभीवृतोरुमणिमौलयः। कुरुविन्दमहोत्फुल्लमालाजालावृतान्तराः॥
स्फटिकोत्तमगर्भाच्छधारासोपानकीलिताः। विचित्रजालिकापालिचितनीलमहोपलाः
बिम्बाभपद्मरागोत्थकेलिपालिविराजिताः। सुवर्णपरिसंक्लृप्तरम्भापूगैकभासुराः॥
हरिन्मरतकोद्दामगर्भसप्तच्छदावृताः। दन्तिदन्तावलीलग्नहंसालीवृषकीलिताः॥ १४॥
कपोतपालीपीठस्थमणिशार्दूलनासिकाः। सुवर्णकेतकीगुच्छतत्फलावलिभासुराः॥
मणिपानसजाम्रादिफलालिपरिलम्बिताः। मातुलिङ्गैश्च लिकुचैः प्रोतमालावृतान्तराः
मणिधारावृषैः कुम्भैस्सुपल्लवसुमैर्युताः। दमनोरुवितानाच्छसञ्छादिततलाम्बराः॥
उशीरपटगुच्छैश्च लम्बलोलितभासुराः। गन्धबन्धानुबन्धोद्यन्मन्दमारुतसुन्दराः॥
महागरुमहोद्दामधूपधूमशिखावृताः। मणिदीपावलीवृत्तभ्रमद्भृङ्गवराञ्चिताः॥ १९॥
सहस्रदीपपात्रैश्च धूपवृक्षैश्च लम्बिताः। मणिसारैश्च विविधवर्णक्लृप्तोरुकुट्टिमाः॥ २०॥
स्फटिकाक्ततलास्सर्वा रम्यादर्शकलम्बिताः। सुवर्णरेखाविलसन्मणिचित्रविचित्रिताः
नानारुद्रावतारादिदेव्याश्च नटनं तदा। शम्भोर्गणेन्द्रलिलकैर्वृतचित्रविचित्रिताः॥ २२॥
सुरम्यमणिवेदीभिस्संयुता धूपमोदिताः। विस्तारायामबहुलास्सहस्रस्तम्भमण्डिताः॥
पणवादिमहातत्वजालापारावृतान्तराः। राजल्ललामवृषभा रत्नकुम्भपरिष्कृताः॥
रत्नदण्डायुतापारछत्रचामरशोभिताः। दोधूयितपताकाग्रा मणिघण्टावृतान्तराः॥ २५॥
कस्तूरीचन्द्रपाटीरसुगन्धसुमवर्षिताः। मणिदर्पणजोत्तुङ्गबिम्बितामलजालिकाः॥
मेन्दरोद्दामगम्भीरनादापूरितदिङ्मुखाः। शङ्खदुन्दुभिनिस्साणपणवानकगोमुखैः॥
काहलापारनिनदवेणुवीणारवाकुलाः। मणिमन्दारवकुलपाटलाशोकचम्पकैः॥ २८॥
विलम्बिताच्छमालास्तास्तमालतलसुन्दराः। कृतमालमहामालागुच्छसञ्छादितांबराः
कुन्दमल्लीजमुल्लीजजाजीमालावृतान्तराः। गलन्मधुझरीभारगुच्छगुञ्जदलिव्रजाः॥
कदम्बदामसुभगा दमनोद्दामगन्धिताः। कुरवामोदितोशीरमरुवामोदमोदिताः॥

१. मह्लोद्दाम इति पाठान्तरम्। २. गच्छदलिव्रजा इति पाठान्तरम्।

उशीरककृतापारमालान्दोलनसुन्दराः । तारोत्तर्कितभूभागमुक्ताजालावृताभुवः ॥
गणहस्तमहातालझल्लरीनादहुङ्कृताः । रत्नमङ्गुजहुङ्कारगर्भितान्तरसुन्दराः ॥ ३३ ॥
काहलापारगम्भीरनादापूरितदिङ्मुखाः । नटज्झणझणारावशिञ्जन्मञ्जीरनिस्वनाः ॥
गोमुखानकजोद्दामगणवक्त्राब्जकारवाः। शङ्खावलीकृतापारधूत्काररवगर्जिताः ॥
चतुर्वेदशिखोद्दामब्रह्मवक्त्रकृतस्तुतिः । वामदेवमहासामरथन्तररवाकुलाः ॥ ३६ ॥
राथन्तरोत्थफूत्कारभाङ्कृताखिलदिक्तटाः । राजद्राजनहिङ्कारवैराजवरभूपिताः ॥
अष्टवक्त्रोदितात्यच्छचाष्टदंष्ट्ररवाकुलाः । महागणेशशुण्डाग्रलग्नकुञ्जोत्थनादिताः ॥
षडाननकृतोद्दामकाहलारवसुन्दराः । नन्दिभृङ्गिकृतानेकतलघातोरुमद्दलैः ॥ ३९ ॥
धिक्तान्धिक्तानितिरवैरशेषमतिवारकैः । तण्डुडिण्डिमनादोत्थरवसुन्दरदिङ्मुखाः ॥
वाणीपाणिमहावीणाशिवनामालिमूर्छनाः । तन्त्रीयन्त्रितगान्धर्वगीतनादैकसुन्दराः
नारदादिमुनिश्रेष्ठस्तुवदुद्दामगायनाः । हाहाहूहूकृतानेकसुरक्षरतशिक्षिताः ॥ ४२ ॥
यक्षशिक्षाकलालापरङ्गतुङ्गतरङ्गिकाः । रागरागिणिकाकॢप्तरम्यत्रिस्थायिमूर्छनाः ॥
तालमद्दलजोद्दामतान्थिगित्युत्तमध्वनिः । बर्हिपिञ्छाभसुभगस्फाटिकोत्तमभित्तिकाः
मणिनिस्साणनारावप्रबुद्धवरकोकिलाः । कोकिलाकाकलीरम्यध्वनिध्वननरञ्जिताः॥
रत्नपञ्जरमध्यस्थशुकशारिकजारवाः । मृदङ्गघनघोषेण शिखण्डीकृतताण्डवाः॥४६॥
गायद्गन्धर्वनिकरमुखवीक्षणकृन्मृगाः । रत्नधारगजासारपुष्करोद्दामबृंहिताः ॥ ४७॥
पुण्ड्रेक्षुवद्धसुभगस्तम्भरम्भावृतास्सभाः। मणिवल्लीतोरणादिलम्बितान्दोलिताःपुनः॥
मन्दमारुतसञ्चारवितानचलितालकाः । शातकुम्भमहाकुम्भपूरितामृतधारिकाः ॥
सुपल्लवमुखापारराजद्भृङ्गारसुन्दराः । पूगापारमहासाराश्शम्भोस्तत्रमहासभाः॥५०॥
कॢप्तास्तत्र शिवेनैव मनसा मननेन हि । शातकुम्भमयी तत्र सभा प्राच्यां दिशि स्थिता॥
महारत्नसभा शम्भोर्दक्षिणे च प्रकल्पिता । राजती रजताद्रौ तु शम्भोः पश्चात्सभा तदा
चित्सभाचोत्तरेशंभोःकलधौताचलेस्थिता । एवंचतुर्दिक्ष्वपितास्सन्नाहानन्दितास्सभाः
तत्सभावर्णनं देवैर्ब्रह्मविष्णुमहेश्वरैः । मूर्तिमद्भिस्तथा साङ्गैर्वेदनिश्वास ईश्वरः ॥

१. अशैवमतिरावकैरिति पाठान्तरम् । २. तुम्बुरूद्दाम इति पाठः ।
३. भरताक्षरशिक्षिताः इति पाठान्तरम् ।

17

ऋग्वेदस्तु तथाप्राच्यामेकविंशतिशाखकैः । स्तौति तस्यां सभायान्तु देवदेवंमहेश्वरम्
यजुर्वेदस्तथा रत्नसभायां शतशाखकः । स्तौति देवं विरूपाक्षं बद्धाञ्जलिपुटो मुदा ॥
कलधौतसभायान्तु सहस्रवरशाखकः । स्तौति तत्र महादेवं सामवेदोऽथ सामभिः ॥
चित्सभायां तथाथर्ववेदो विंशत्स्वशाखकैः । स्तौति देवं शिरोभिस्स्वैरथर्वैरीशतुष्टिदैः ॥

स्कन्दः—

सभासु च दिवस्पतिप्रकटभानुशीतांशुषु ।
स्फुरत्त्विषि शिखिद्युतिप्रथितरत्नगर्भोद्भव-
प्रकाशकलितास्पदे नटति नृत्तपारङ्गतः ॥ ५९ ॥
सभापतिरतीन्द्रियः प्रमथनाथसङ्घैर्वृतो-
ऽप्यनन्तमहिमारसज्ञश्रुतिशिखाच्छपालीगतः ।
सुरेन्द्रमकुटीतटीविघटिताच्छरत्नच्छविः
प्रसन्ननखसन्ततिर्विधिहरीन्द्रदेवैस्स्तुतः ॥ ६० ॥

इति श्रीशिवरहस्ये प्रथमांशे सभावर्णनं नाम
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

सभासु नृत्तवर्णनं नाम त्रयस्त्रिंशोऽध्यायः.

श्रीस्कन्दः—

सनातनसनन्देन सानन्देन महेश्वरः । पार्वतीहृदयानन्दो देवो यत्र च तास्सभाः ॥
सदसस्पतिरीशानो गणबृन्दनिषेवितः । मया द्विरदवक्त्रेण नन्दिभृङ्गिरिटीश्वरैः ॥
तण्डुहुण्डतुहुण्डाद्यैर्बाणरावणचण्डिकैः । देव्यास्तदग्रे नटनं साटोपं कर्तुमुद्यतः ॥ ३ ॥
सभासु तासु सर्वासु सभापतिरुमापतिः । सायं सायं प्रदोषेषु महाताण्डवपण्डितः ॥
अपस्मारोपरिलसत्पादपङ्कजभासुरः । गजेन्द्रकृत्तिवसनो जटाचूडतटिद्द्युतिः ॥ ५ ॥
जटाकुहरगर्भस्थगङ्गातुङ्गतरङ्गधृक् । तत्रैवोत्फुल्लकह्लारमिलाच्छादितमस्तकः ॥ ६ ॥
गरनीलमहाकण्ठः कुण्डलीश्वरकुण्डलः । सोमधामसमानास्यश्चाम्पेयरदनासिकः ॥ ७ ॥
नयनत्रितयोत्फुल्लपङ्कजोत्फुल्लसुन्दरः । त्रिपुण्ड्ररेखासत्फालो भस्माच्छादितविग्रहः ॥

वामेन पाणिनालम्बिनखरक्ताग्रालक्तकः । धगद्धगितरत्नाच्छपदकालम्बिमालिकः ॥
महार्हीरमणिव्रातमुक्तारुद्राक्षमालिकः । काकोदरफणारत्नमालाकीलितकन्धरः॥१०॥
रत्नग्रैवेयललितः कङ्कणासक्तसत्करः । क्वणत्किङ्किणिकाजालक्षुद्रघण्टालिकाञ्चिकः॥
पाणिनान्येन डमरुं तथान्येनोज्वलप्रभम्। सप्तजिह्वकृतोर्ध्वाङ्गशिखाकाशितसत्करः॥
भक्ताभयकरं साक्षाद्रत्नोर्मिकवराङ्गुलिः । कटीतटपटोद्भासि पुण्डरीकाजिनोज्वलः ॥
तत्पुच्छगुच्छसुभगलम्बमानचलद्युतिः । ब्रह्ममुण्डमहापण्डमालाललितकन्धरः ॥
नृत्यज्झणझणारावमणिमञ्जीररत्नपात् । साकुञ्चितेन नृत्येन पोषयन्तं जगत्त्रयम् ॥
महारत्नपरिष्कारिपीठसंस्थां महेश्वरीम् । पश्यन्दरदलाम्भोजसन्निभामललोचनैः ॥
सुधाधामतिरस्कारि देव्या वदनपङ्कजम् । लीलालकोद्यत्तिलकं रत्नताटङ्कमण्डितम् ॥
उद्यत्कविनिभात्यच्छमुक्तानासामनोरमम् । कण्ठत्रिवलिगम्भीररत्नग्रैवेयभासुरम् ॥
ललच्चिन्ताकसुभगं कण्ठमण्डलमीश्वरः । उत्तुङ्गकरिकुम्भाभस्वर्णकुम्भकुचां शुभाम्॥
त्रिवलीललितोदारत्रिजगत्सम्पुटोदराम् । मृगेन्द्रकटिसङ्काशरत्नकाञ्चितकाञ्चिकाम् ॥
कनकाम्बरजापारधारासारजिताम्बराम् । चम्पकाशोकपुन्नागसौगन्धिकलसत्कचाम्॥
वेणीमण्डलमध्यस्थरत्नसीमन्तसुन्दराम्।अलिकालम्बिलालंह्रिशोभिसिन्दूररेखिकाम्
क्वणन्मणिगणापारकङ्कणैर्नागबन्धकैः । रत्नहस्तसरापारचलद्वलयसत्कराम् ॥ २३ ॥
रत्नाङ्गुलीयविलसद्वलयाङ्गुष्ठवेष्टिताम् । महार्हीरैकफलककल्पिताङ्गुष्ठवेष्टनीम् ॥ २४॥
आरक्तारक्तपादाब्जरङ्गरञ्जितपादुकाम् । पादाङ्गुलीकृतापारझणज्झणमधुव्रताम् ॥
मणिमञ्जीरजारावझणज्झणितभूतलाम् । पाटीरागरुकस्तूरीकर्पूरागन्धमेदुराम्॥२६॥
पटवासमहागन्धनन्दिताखिलदिक्तटाम्। सौन्दर्यधारासर्वस्वाकारां ताराधिपाननाम्॥
हल्लकाक्रान्तसुकरां तथान्येन विलम्बिना । पाशाङ्कुशाभयवरधरां श्रीभुवनेश्वरीम् ॥
निर्यत्कटाक्षाङ्कुरतःपश्यन्तीमाननं विभोः। पश्यन्त्सभासु तान्देवीं सदानृत्यति शङ्करः॥
नन्दिभृङ्गिमहाकालस्कन्दहेरम्बसंवृतः । रम्यवाद्यरवैस्सायं वेदघोषैश्च शङ्करः॥ ३०॥
तत्र तत्र सभास्थाने नृत्यत्यम्बासमन्वितः। तच्छृणुध्वं मुनिश्रेष्ठा गणेन्द्रास्सुरसत्तमाः

राजद्राजकलाविराजितजटाराजीरजोघ्नं सतां
रामालङ्कृतवामभागमनिशं श्रीराजराजार्चितम् ।

नृत्यन्तं नृशिरःकपालकलिकामालास्फुरद्वक्षसं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥ ३२ ॥
नृत्यद्ब्रह्मकपालघट्टनपतद्ब्रह्माण्डकोटिस्रव-
द्वर्षाधारसुपूरपूरितजटागङ्गातरङ्गोद्भटम् ।
सेवार्थागतविष्णुमुख्यसुरताबद्धाञ्जलिप्रार्थनं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥ ३३ ॥
तण्डौ वादिनि डिण्डिमण्डमरुकामाखण्डले वाद्यति
ब्रह्मण्यम्बुजलोचने च नमति श्रीचण्डिकेशे करैः ।
घण्टाडोलनतत्परे सुरनुतं श्रीताण्डवे पण्डितं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥ ३४ ॥
शीर्षाबद्धकपालमालममलं नृत्यज्जटामण्डलं
भूषावेषविषाग्निमिश्रितसुधाधारेषदुष्णार्चिषम् ।
नृत्यन्तं रमणीमुदे निगमवाङ्मूर्धाधिरूढं शिवं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥ ३५ ॥
पादाबद्धहरीशकङ्कणरणत्कारौघनिष्पन्दित-
ब्रह्माद्याखिलजङ्गमं बहुभुजालङ्कारदेव्याः पुरः ।
मन्दस्मेरविराजमानवदनाम्भोजं नटन्तं शिवं
कैलासाचलशातकुम्भसदसि श्रीशम्भुमालोकये ॥ ३६ ॥

इत्थं नृत्यति देवेशस्सायं देव्या सदाशिवः । कैलासहेमसदसि प्राच्यां गणवरैर्वृतः ॥
तद्दक्षिणे रत्नक्लृप्तसदोमध्ये महेश्वरः । नृत्यत्यम्बामुदे देवस्तच्छृणुष्व मुनीश्वर॥ ३८॥

स्कन्दः—

गण्डान्दोलितकुण्डलीश्वरमहाश्रीकुण्डलं ताण्डवे
पाण्डित्यं घटयन्तमण्डजमुखैश्चण्डेश्वराद्यैर्गणैः ।
स्तोष्यन्तं निगमान्तसारवचसामोघैरमोघैश्शिवं
नृत्यन्तं रजताद्रिरत्नसदसि श्रीनीलकण्ठं भजे ॥ ३९ ॥

तण्डूद्दामगिरो जयन्ति सविधं श्रीकैटभारे त्यज
ब्रह्मन्ब्रह्मरवांश्च संहर हरे दूरं परं सारय ।
इत्थं नर्तकचक्रवर्तिनिकटे नृत्योन्मुखे तादृशं
नृत्यन्तं रजताद्रिरत्नसदसि पश्यामि शम्भुं सदा ॥ ४० ॥
नृत्तान्दोलचलच्छिखामृतगलत्खण्डेन्दुसान्द्रोच्चये
भ्राजत्पाटलमण्डलारुणलसद्वृन्दारकाणां गणे ।
मग्नोभुग्नवलग्ननग्ननिभृते चूडाहिवृन्दोछ्वस-
न्नृत्यन्तं रजताद्रिरत्नसदसि पश्यामि शम्भुं सदा ॥ ४१ ॥
नर्तार्तिस्य पदद्वयोः प्लुतिचलद्धेमाद्रिसोमार्यमा-
क्ष्माशेषादिककम्पनं विदधतं नृत्यन्तमीषत्स्मितम् ।
देवी पश्यति शङ्करं च सुमहत्सानन्दनन्दोन्मुखं
नृत्यन्तं रजताद्रिरत्नसदसि पश्यामि शम्भुं सदा ॥ ४२ ॥
यस्मिन्नृत्यत्वमीशे विदधति भरितानन्दसन्दोहधाम्नि
भूषास्पन्दनहानिशङ्किहृदयो मन्दं विधत्ते पदम् ।
यो वासश्शिथिलं भवेदिति करानातन्वते निस्यदा-
न्केशाकुञ्चनतः करोति भगवान्केन्दूच चक्रोत्तमौ ॥ ४३ ॥
नानर्ति प्रसभं प्रसन्नहृदयो रात्रे सभायां शिवः ॥ ४४ ॥
इत्थं राजतशैले च देवो रत्नसभान्तरे । नृत्तं वितनुते देव्याः पुरतस्सायमीश्वरः ॥
पश्चात्सभायां रजतकल्पितायां महेश्वरः। नृत्यत्यम्बा मुखं वीक्ष्य गणवृन्दसमन्वितः॥

श्रीस्कन्दः—

नृत्यन्तं हरिभूषणं विधिशिरोवृन्दालिमालालस-
द्वामाङ्गाकृतिसत्स्त्रिया युतपदे केयूरशिञ्जत्स्वनम् ।
कट्यां सामजचर्मवस्त्रकलितं नृत्यन्तमाशावसं
वद्धार्धाङ्गकलेन वालकलितोत्तंसान्वितांसा वयम् ॥
नृत्यन्तं कलधौतसारसदसि ध्यायामि नृत्तोन्मुखम् ॥ ४७ ॥

वाग्गुम्भान्विविधानकृत्रिममयानम्भोजजाते वद-
त्यानन्दाम्बुधिमग्नचेतसि परे गोविन्दपूज्ये हरे ।
मन्दं मन्दमरन्दपाभिरखिले बृन्दारकाणाङ्गणे
नृत्यन्तं कलधौतसारसदसि ध्यायामि नृत्तोन्मुखम् ॥ ४८ ॥

यस्मिन् नृत्यति जङ्गमाचरमिदं विश्वं नरीनृत्यति
यस्माद्भिन्नतया नकिञ्चिदपि वै वक्तुं नशक्यं बुधैः ।
तादृक्षं नटनार्भटीकृतरुचिं भूषाहिशेषोज्वलं
नृत्यन्तं कलधौतसारसदसि ध्यायामि शम्भोः पदम् ॥ ४९ ॥

चेतस्त्वं भज यद्गतो न पुनरावृत्तिं भजेन्मानवो
यस्माच्चित्रतरं न किञ्चिदधिकं तत्तादृशन्ताण्डवम् ।
कुर्वन्तं करुणाम्बुधिं त्रिणयनं श्रीकालकूटोज्वलं
नृत्यन्तं कलधौतसारसदसि ध्यायामि शम्भोः पदम् ॥ ५० ॥

यस्मिन्भ्राम्यति बम्भ्रमीति सकलं विश्वञ्चराद्यात्मकं
यस्मिन्नुत्प्लुतिमाचरत्यविकलं ब्रह्माण्डमुद्भिद्यते ।
यद्भासा प्रविभान्ति भास्करनिशानाथादयस्सन्ततं
नृत्यन्तं कलधौतसारसदसि ध्यायामि शम्भोः पदम् ॥ ५१ ॥

यस्मिन्नापतिते न शर्म लभते कूर्मोऽपि भग्नास्थिको
नृत्तायासविनिर्गतोरुनयनश्रोत्रोत्थफूत्कारकः ।
साङ्गा सा श्रुतिरिन्दुपेन्द्रसदृशास्तस्याश्रयाज्जीविनः ॥ ५२ ॥

यस्य स्वेदजलं महोदधिरपि प्रोद्यन्मणीनां गणो
रौप्याद्रौ कलधौतसारसदसि श्रीनीलकण्ठं भजे ॥ ५३ ॥

एवं स नृत्यतीशानः कैलासकलधौतजे । सदसि स्वैरमम्बायाः पुरतश्शशिशेखरः ॥
उत्तरे चित्सभायान्तु नृत्यत्यम्बां विलोकयन् । गणेन्द्रैस्सेवितपदो महादेवो महेश्वरः॥

श्रीस्कन्दः—

ह्रीमूर्त्या शिवया विराण्मयमयं हृत्पङ्कजस्थं सदा
ह्रीणानां शिवकीर्तने हितकरं हेलहृदां मानिनाम् ।
ह्रीबेरादिसुगन्धवस्त्ररुचिरं हेमाद्रिवाणासनं
ह्रीङ्कारादिकपादपीठममलं हृद्यं नटेशं भजे ॥ ५६ ॥

श्रीमद्ज्ञानसभान्तरे प्रविलसच्छ्रीपञ्चवर्णाकृतिं
श्रीवाणीविनुताङ्घ्रिपङ्कजयुगं श्रीवल्लभेनार्चितम् ।
श्रीविद्यामनुमोदनं गृतजनश्रीदायकं श्रीधरं
श्रीचक्रान्तरवासिनं शिवमहं श्रीमन्नटेशं भजे ॥ ५७ ॥

नव्याम्भोजमुखं नमज्जनविधिं नारायणेनार्चितं
नागौकोनगरीनदीविलसितं नागाजिनालङ्कृतम् ।
नानारूपकनर्तनादिचतुरं नालीकजान्वेष्टितं
नादात्मानमहं नगेन्द्रतनयानाथं नटेशं भजे ॥ ५८ ॥

मध्यस्थं मधुवैरिमार्गितपदं मद्वंशनाथं प्रभुं
माराराातिमतीव मञ्जुवपुषं मन्दारगौरप्रभम् ।
मायातीतमशेषमङ्गलनिधिं मद्भावनाभावितं
मध्येव्योमसभागुहास्थमखिलं मान्यं नटेशं भजे ॥ ५९ ॥

शिष्टैः पूजितपादुकं शिवकरं शीतांशुरेखाधरं
शिल्पं भक्तजनावने शिथिलिताघौघं शिवायाः प्रियम् ।
शिक्षारक्षणमम्बुजासनशिरःसंहारशीलं प्रभुं
शीतापाङ्गविलोचनं शिवमहं श्रीमन्नटेशं भजे ॥ ६० ॥

वाणीवल्लभवन्द्यवैभवयुतं वन्दारुचिन्तामणिं
वाताशाधिपभूषणं वरकृपावारान्निधिं योगिनाम् ।
वाञ्छापूर्तिकरं वलारिविनुतं वाहीकृताम्नायकं
वामाङ्गात्तवराङ्गनं मम हृदावासं नटेशं भजे ॥ ६१ ॥

यक्षाधीशसखं यमप्रमथनं यामिन्यधीशाननं
यज्ञध्वंसकरं यतीन्द्रविनुतं यज्ञक्रियाधीश्वरम् ।
याज्यं याजकरूपिणं यमधनैर्यत्नोपलभ्याङ्घ्रिकं
यानीभूतवृषं यतीन्द्रविनुतं याज्यं नटेशं भजे ॥ ६२ ॥
मायाश्रीविलसच्चिदम्बरमहापञ्चाक्षरैरङ्कितान्
श्लोकान्सप्त पठन्ति येऽनुदिवसं चिन्तामणीनामकान् ।
तेषां भाग्यमनेकमायुरधिकं विद्यावरान् सत्सुतान्
सर्वाभीष्टमसौ ददाति सहसा श्रीचित्सभाधीश्वरः ॥ ६३ ॥

श्रीसूतः—

तटिन्निभजटार्भटीपटुरिटीड्यवागर्भटी-
निटालककृपीडकं भज भजामहे धूर्जटिम् ।
शिवं कटतटारटद्यमकठोरतुण्डार्भटी-
चपेटविरशूलकं करटिचर्मशोभत्पटम् ॥ ६४ ॥
हटात्कृतशठासुरमसुखभेदकृत्तीरट-
द्विपाठशरधारिणं कमठपृष्ठपादं शिवम् ।
भजामि जठरीधृतत्रिजगन्मूलपीठोत्थित-
जनार्दनपटुस्तवं हृदि सुनिष्ठितं योगिनाम् ॥ ६५ ॥
कुठारवरधारिणं कुमुदनाथचूडामणिं
कुरङ्गवरभूषणं भजत नीलकण्ठं सदा ॥ ६६ ॥
उत्कोशकाशितमहाशिवरातखेटनीलोऽच्छताच्छसुकरोरुशिरोधरांसम् ।
रक्षस्मृतिप्रजनितापगतादिसंज्ञापस्मारमौलिपदपङ्कजनिं भजामि ॥ ६७ ॥
नादोत्थडम्बरमहाडमरुप्रकाण्डमुत्फुल्लपङ्कजवरानलमीशितारम् ।
आरात् प्रणेमुरमरा रजताचलस्थं केक्याखुवाहगणपैः परमेशमेवम् ॥ ६८ ॥
नन्दीशभृङ्गिरिटियस्सुरनन्दिकसोमनन्दिचण्डीशतुण्डवरहुण्डतुहुण्डभद्राः ।
श्रीबाणरावणगणाननकोटिचण्डा ब्रह्मा हरीश्वरमुखा अमरेन्द्रसङ्घाः ॥ ६९ ॥

स्तम्भैर्विद्रुमपुत्रिकौघघटितैर्हैमैर्महामातृकै-
भास्वत्स्वावरणैश्च शक्तिभिरपि प्रोद्दण्डमायामये ।
रङ्गे सर्वजगत्करण्डमखिलं यस्येक्षणाज्जृम्भते
यस्यैवेक्षणतश्च रक्षितमिदं तत्रैव लीनं क्षणात् ॥ ७० ॥

सोऽप्येतादृशरङ्गमण्टपगतस्सर्वैश्च भूतैर्वृतो
रुद्राणीसहितो गणेशगुहयुक्पार्श्वे सुरेन्द्रैरपि ।
पाथोजास्त्रभवेन श्रीधरभवैरन्वास्यमानश्शिवो-
रुद्राणीगणपैश्च सेवितपदो मोदान्वितो रङ्गगः ॥ ७१ ॥

ईषत्पादतलाहतित्रुटितभूभागासहिष्णुत्रुट-
त्स्फूर्जत्कर्पटशर्मदुर्विधमहाकूर्मस्तवाम्रेडितम् ।
अङ्गुल्यग्रपतत्तदीयपवनोत्क्षिप्तस्वधामस्थिर-
ब्रह्माण्डं परमेशितुर्विजयते नृत्तं समस्ताद्भुतम् ॥ ७२ ॥

नम्रान्पाणिगणान्दिशावधिकृते स्वीयान्कपर्दानपि
व्योमान्ते नतिकुञ्चितामपि पुनः पातालमुख्यानधः ।
लोकाख्यान् समतीत्य स्वीयचरणान्कुर्वन्निरालम्बनो
नृत्तं केवलमीश्वरो वितनुते देव्यग्रतः केवलम् ॥ ७३ ॥

सूतः—

सभासु च सभापतिर्हरिहिरण्यगर्भादिभि-
स्सनन्दनसनातनैर्हरसुनन्दिनन्द्यादिभिः ।
कराहतिमहामणिप्रवरमद्दलादुत्थितै-
स्सुतालवरकल्पनैर्नटति नृत्तरङ्गस्थितः ॥ ७४ ॥

वेदाधीश्वर वेद एव भगवन्भक्त्या त्वदीयास्सभा
नौति स्तौति भवन्तमेव हि ततो देवं सभाधीश्वरम् ।
वेदो वेद न वेदरूपमपि ते नीरूपरूपः कथं
तस्मादेवमहो महेश्वर सदा वाचानिवृत्तस्त्वयि ॥ ७५ ॥

प्रोवाचावचनेन रूपमपि ते ज्ञातुं न शक्यं परैः ॥ ७६ ॥

इति श्रीशिवरहस्ये प्रथमांशे सभासु नृत्तवर्णनं नाम
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

चतुर्विधपुरुषार्थ मण्टपवर्णनं नाम चतुस्त्रिंशोऽध्यायः.

स्कन्दः—

तच्छैलमौलिप्राकारो नानासौधान्तरे स्थितः ।
चन्द्रोपलशिलासारैः कल्पितोऽस्ति शिवेन हि ॥ १ ॥
खण्डस्फुटितसन्धानरहितोऽखण्ड एव हि । पर्वोग्रच्छर्वरीनाथकलानिष्पन्दसारकः ॥
त्रिंशत्सहस्रमानेन चायामोर्ध्वविराजितः । शुद्धस्फटिकसङ्काशवृषभैः परिशोभितः ॥
इन्द्रनीलामलाक्षैश्च विषाणैश्चैव शोभितैः । तत्प्राकाराखण्डभित्तौ संस्थिता गोपुरेषु च
प्राकारगोपुरं तत्र दशसाहस्रमुच्छ्रितम् । रुद्रावताराश्चरितं मणिकुम्भवराञ्चितम् ॥ ५ ॥
शोभितं पूर्वभागस्थं तत्प्राकारवरस्य च । दक्षिणे चापि तादृक्षं महास्फटिककल्पितम्॥
रुद्रावतारक्रीडाभिरञ्चितं वृषभैरपि । पश्चिमे चापि तेजिष्ठं स्फटिकोपलगोपुरम् ॥ ७॥
रुद्रावतारक्रीडाभिर्वृषभैः कलशैरपि । शोभितं तत्र तद्भाति दशसाहस्रमानतः ॥ ८ ॥
तदुत्तरेऽपि स्फटिकधवलं गोपुरोत्तमम् । रुद्रावतारैः कलशैश्शोभितं वृषभैरपि ॥ ९ ॥
सहस्रतलभागैश्च शिखरोग्रस्पताककैः । मुक्तागुच्छैः प्रवालालिमालाजालिकशोभितैः॥
देवकोष्ठैः कोणकोष्ठैः कपोतैः पालिपालिभिः । महावलभिकोद्दामस्तम्भविद्रुमपुत्रिकैः॥
प्राक् संस्थो मण्टपस्तत्र व्यायामोच्छ्रायसुन्दरः । सिह्मशार्दूलशरभमातङ्गतुरगाकृतिः॥
शुकभेरुडहंसाभिस्स्तम्भैर्मणिकृतैर्युतः । सिह्ममौलिमहापालिकन्यकालिविराजितैः ॥
रत्नयुक्तस्तम्भयुतश्चागर्भगृहगोपुरम् । विस्तृतो वेदिकाभिश्च रक्तपद्मछविर्महान्॥१४॥
स्वच्छादर्शतलाकारमणिसुन्दरभित्तिकः । धूपैस्तन्मणिदीपैश्च विद्योदितदिगन्तरः ॥
पाटीरसारकर्पूरगन्धसारादिसिक्तभूः । सुमनामोदिमन्दाररत्नमालापरिष्कृतः॥ १६ ॥
तत्राच्छहरिदुद्दाममणिसप्तच्छदावृतः । तत्राच्छविद्रुमापारमुक्तासरविलम्बितः॥ १७॥

अम्लानकुसुमोद्रिक्तरदन्तरकृतान्तरः । तत्र तद्भित्तिगानेकनवरत्नविचित्रितः॥ १८॥
रुद्रावतारक्रीडादितत्तन्मणिमुविग्रहः । मोक्षलक्ष्मीविलासाख्यो मण्टपो भाति पूर्वतः॥
दक्षिणेऽप्ययुतस्तम्भनानामणिगणैश्चितः। आगर्भगृहमुत्सेधविस्तृतो गोपुरावधि॥२०॥
सारूप्यमोक्षदानाख्यो भाति रत्नपरिष्कृतः । गोमेदकान्तिविलसद्वीरधीरावृतान्तरः ॥
सुरत्नमुकुराकारभित्तिरङ्गैकसुन्दरः । तत्रत्यमणिमाणिक्यगणकान्तिततान्तरः॥ २२॥
कस्तूरीतगरामोदगन्धवारिसुपङ्किलः । नन्दनापारकुसुममालाजालवृतान्तरः॥ २३ ॥
रम्भापूगीफलालम्बिगुच्छपालीविराजितः । रत्नोद्गीर्णागरुस्तम्भैर्मरालावलिशोभितः॥
तद्भित्तिनिचितापाररुद्रक्रीडादिविग्रहैः । तत्तद्भूषाविशेषेषु यो यो रागस्तथा तथा ॥
तत्तन्मणिकृतानेकसुन्दरैश्शिवविग्रहैः । गुग्गुलूद्दामसुभगगन्धधूपविधूपितः ॥ २६ ॥
पश्चिमेगर्भगृहतोगोपुरावधिविस्तृतः । सुभगोभातिनियुतस्तम्भमण्डितभूतलः॥ २७॥
सालोक्यमोक्षदानाख्यो मण्टपोऽयुतपादभाक् । तत्रवैडूर्यरचितस्तम्भाखण्डैकसारभूः॥
तत्सूत्रापारधाराभिर्विस्मयाकरकान्तिभूः । सिह्ममौलिमहापीठकपोतावलिसुन्दरः ॥
मणिरत्नचितानेकपालिपालीवराश्रयः । केसराम्बुयुतासारमृगमोदयुतैर्घटैः ॥ ३० ॥
गन्धाम्बुसिक्ततलको मणिमालाविभूषितः । हीरसारमहामुक्तामणिहारावलम्बितः ॥
तत्र वैडूर्यफलकचितोर्ध्वतलकान्तिकः। निर्यत्कान्त्याकान्ततरो [2]विचिताखिलचित्रकः
कृष्णागरुमहारम्यधूमधूपसमाकुलः । मणिकृप्तान्छभित्तिश्चरुद्रक्रीडादिशोभितः॥३३॥
शोभनो नितरां भाति मणिरत्नालिसुन्दरः । सुरत्नकेतकीतालीफलालम्बितपत्रकैः ॥
महासिह्मासनैः पीठैः पालीपालिविराजितः । प्रवालमुक्तापादैश्च सुरौप्यमणिपादुकैः॥
मञ्चोर्ध्वमण्टपालम्बिमुक्ताजालवितानकैः । पुष्पशय्यापरिकरैरुपधानैर्मनोहरैः॥ ३६॥
वासितैर्गन्धबहलशुभास्तीर्णपटावृतैः । सुरुद्रवीणानादैश्च नादितैर्दुन्दुभीरवैः ॥ ३७॥
तत्र मण्टपवर्येषु चैकाकारतयास्थितम् । पश्चादागोपुरतलमागर्भगृहसन्निधि ॥ ३८ ॥
तदुत्तरे चकास्तीशमण्टपो रत्नसुन्दरः। आगोपुरगृहं शम्भोरयुतोच्छ्रितपादुकः॥३९॥
पुष्परागमणीकृप्तमञ्चोर्ध्वाधस्तलमण्डितः । तत्कान्तिकाञ्चितोद्दामविद्रुमामलपुत्रिकः ॥
सारङ्गशुकमातङ्गकुरङ्गविहगाकृतिः । स्तम्भैश्शोभितभूभागमणिसारालिकीलितः ॥

१. कुसुमामोदितदन्तर इति पाठः । २. विम्बिताखिलचित्रकः इति च पाठः ।

रत्नजालकनिर्यद्भातलरञ्जितदिङ्मुखः । सुरत्नवलभीकीर्णस्वच्छभित्तिवराञ्चितः ॥
तत्र रुद्रावतारादिमणिकल्पितविग्रहः । शरच्चन्द्रप्रभाजालतिरस्कारितलोच्छ्रयः॥४३॥
सुरत्नकेतकोद्दामलल्लन्नारेलगुच्छकः । गन्धकर्पूरपाटीरद्रवभारैकगन्धभूः ॥ ४४ ॥
वितानोत्तानिततलो रत्नरम्भापरिष्कृतः । साम्राण्यगरुधूपैश्च नित्यं घुमुघुमायितः ॥
प्रफुल्लरत्नचाम्पेयरत्नराजिविराजितः । नीलनीलोत्पलोत्फुल्लपीठालंविसरैर्वृतः॥४६॥
तत्रत्यस्तम्भविततपुष्परागमणिप्रभः । तत्रान्तर्मण्टपवरं रञ्जितं मणिकान्तिभिः॥४७॥
सुगन्धगन्धजामोदपटवासानुमोदितः । वातपोतसमानीतै रम्यशीलतराऽवृतैः ॥ ४८ ॥
तन्मण्टपवरे देव्या दिव्यसिंह्मासनाश्रयः। आस्ते गणैः परिवृतोऽपश्यंस्तद्दृष्टिकौतुकम्॥
तत्रत्यमण्टपस्याख्या श्रीमहेशेन कल्पिता। सायुज्यलक्ष्मीदानाख्यो रत्नसुन्दरकल्पितः

स्कन्दः—

तत्रत्यामलमण्टपेषु भगवानास्ते सहाम्बो मुदा
भक्तानां निवहेषु तत्र सुकृतापारैश्च भूपादिभिः ।
स्वस्वापाररसैर्वरैस्सुमधुरोदारैर्गणेन्द्रैर्वृत-
स्तत्तत्स्थानवरार्हभूषणवरं भक्तेषु धत्ते शिवः ॥ ५१ ॥

इति श्रीशिवरहस्ये प्रथमांशे चतुर्विधपुरुषार्थमण्टपवर्णनं नाम
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

कैलासलिंगवर्णनं नाम पञ्चत्रिंशोऽध्यायः.

स्कन्दः—

तत्राच्छमण्टपान्तस्थं गोपुरान्तरसुन्दरम् । इन्द्रचापनिभं दिव्यं नानामणिविराजितम्
प्राकारं दशसाहस्रयोजनायामविस्तरम् । क्वचित्पूर्वेषु हरितं क्वचित्कज्जलसन्निभम् ॥
कुरुविन्दामलमणिभास्वत्कान्ततराकृति । तटित्कूटनिभश्चापि नीलाम्बुदनिभं क्वचित्
बालसूर्यकराभासश्चोद्यदिन्दुनिभं क्वचित् । पलाशशल्मलीपुष्पसङ्काशं क्वचिदेव हि ॥

१. दयारसैरिति पाठः । २. क्वचिच्च जलसन्निभमिति पाठान्तरम् ।

इन्द्रनीलामलमणिप्रभासन्निभकाण्डकम् । इन्द्रगोपकसङ्काशं मयूरगलसन्निभम्॥ ५ ॥
पारावतगलाभासं कर्णिकारच्छवीयुतम् । चन्द्रभास्वत्कराकारकनद्धीरनिभं क्वचित् ॥
गोमेदपुष्यरागोग्रद्वैडूर्यरसरञ्जितम् । प्रवालमणिमुक्ताच्छधाराछविनिभं क्वचित्॥ ७ ॥
तत्प्राकारप्रभाजालैर्नभो विविधभायुतम् । मणिमाणिक्यखचितगोपुरालिविराजितम्॥
रुद्रावतारचरितैर्मणिराजद्रूपैर्युतम् । ललामशोभिकलशैश्चतुर्दिक्षु विराजितम् ॥ ९ ॥
तत्रान्तर्गृहमीशस्य गर्भागारं मनोहरम् । नवरत्नाखण्डक्लृप्तस्तम्भपीठविराजितम्॥१०॥
तच्चिन्तामणिभाजालभासितं गर्भधाम तत् । तदग्रतो भाति शम्भोस्सहस्रस्तम्भमण्डितः
सुमुक्तिमण्टपो नाम सर्ववेदशिखास्तुतः। तत्प्रभाभासिता लोका ब्रह्मविष्ण्वादयस्सुराः
दिक्पालयक्षरक्षौघनागाप्सरसकिन्नराः । उरगास्तुरगाश्चैव सारङ्गाश्चामरास्समाः ॥
मयन्त्रस्सामजालावा हरयश्शरभास्तथा । भल्लूकभेकखड्गैश्च हरिणैर्महिषैस्तथा॥ १४॥
कल्पिता मणिजोत्तुङ्गस्तम्भधारासु कोटिशः । मणिजालकसञ्छन्नो रत्नसोपानवेदिकः
पट्टिकातोरणोपेतः पीठगोपानसीयुतः । तदग्ररत्नकलशैरत्नजालकशोभितः ॥ १६ ॥
रत्नगुच्छमहामालाजालाकीलितसुन्दरः । प्रभाकरसहस्राभश्चेन्दुकोटिसमप्रभः॥ १७॥
धूपामोदैकबहुलो मणिदीपप्रभाततः । वितानतानसुभगो हरिन्मणिनिभस्सदा॥ १८॥
नन्दनानन्दितसुममालागुच्छकलम्बितः । अम्लानारक्तकमलोत्पलमालालसच्छविः॥
प्रत्यग्रकेतकोद्दामगन्धोग्रद्रवपिञ्जरः । उत्फुल्लचम्पकोद्दाममालागन्धितदिक्तटः॥२०॥
कदम्बबन्धुरामोदसुन्दरो मणिभासुरः । तत्र सिह्मासनैश्चित्रैः कल्पितैर्मणिभिस्ततैः ॥
पद्मरागामलमणिकाश्चितादर्शभित्तिकः । पताकाकुम्भकोटीभिर्मणिकोटिघृषैश्चितः ॥
लिङ्गाग्रे मण्टपो भाति कैलासेश्वरसन्निधौ । ततोऽन्तरे गर्भगृहं कैलासेशस्य सत्तम ॥
नवरत्नमणीपीठं वेदिकातलसुन्दरम् । गर्भकोष्टैः पट्टिकाभिर्देवकोष्टैर्विराजितम्॥ २४॥
वलभीतलसञ्चारिमरालकुलसुन्दरम् । कपोतपालीपालिस्थमणिसिह्मवृषैर्युतम् ॥
दिक्पालैर्ब्रह्मविष्ण्वाद्यैर्दक्षिणामूर्तिविस्तृतम्। दक्षिणे पश्चिमे चापि प्रागुत्तरदिशि प्रभाः
लिङ्गोद्भवान्धकारातित्रिपुरासुरसंहृतिः । ब्रह्मविष्णूद्भवश्चापि ताण्डवेशश्च सुन्दरः ॥
करिचर्मपरीधानो हेरम्बस्कन्दसंयुतः। भिक्षाटनश्च कङ्कालश्शूलासक्तकरो हरः॥२८॥
मेखलावृतकण्ठोग्रत्पादाम्भोजाक्तपादुकः।जटाजालितसन्मौलिरिन्दुकुन्दशताच्छभाः

सोमावतंसोक्षवाहो गणवृन्दवृतः क्वचित्। उमया संस्थितः पीठे पश्यन् गौरीं मनोहरः
गौरीप्रसादनपरः पश्यंस्तद्धनुकेकरम्। अर्धेननारीवपुषा शोभितो हरिहीरभाः॥३१॥
रत्नाहिकुण्डलज्योतिसोमधामसमाननः। व्याघ्ररत्नाम्बरधरस्त्रिपुण्ड्रतिलकोज्वलः॥३२॥
मणिरिङ्खत्सुभूपाढ्यो नानाभूतिजगन्धधृक्। क्वणन्मञ्जीरपादार्धशेपार्धपदपङ्कजः॥
गरकण्ठार्धको दिव्यमणिकण्ठार्धधृक्छिवः। नवचन्द्रोत्तमाङ्गोत्थगङ्गारयवराश्रयः॥
वामदक्षिणभागस्थलोकेशहरिसेवितः। चण्डांशुतनयोद्गीतलिङ्गालिङ्गद्विजावनः॥
गङ्गातरङ्गकलितकपर्देणाङ्कशोभितः। मुरवैरिमहानेत्रपूजिताङ्घ्रिसरोरुहः॥ ३६ ॥
ब्रह्ममुण्डलसद्दण्डकर्णकुण्डलशोभितः। एवं रुद्रावतारैश्चाप्यखण्डमणिकल्पितैः॥ ३७॥
चन्द्रस्फटिकहारैश्च पुष्पगोमेदनीलजैः। श्रीमहेशमहादिव्यविग्रहैः परितो वृतैः॥ ३८॥
देव्या हरिन्मणिभवैः पद्मरागभवैस्तथा। इन्द्रविष्णुविधातॄणां दिक्पालानाश्च मूर्तयः॥
तत्तद्रागमणीक्लृप्ताः कल्पिता मणिगर्भजाः। मधुरस्मितनेत्रास्यतत्तदङ्कैकभासुराः॥
मणिमुक्ताप्रवालादिभूपणावलिभासुराः। तत्तत्कोणगतात्यच्छराजद्वृषभभासुराः॥
सहस्रदशमानेन योजनायामकल्पिताः। तत्रत्यमूर्तयस्सर्वाः पञ्चयोजनमानतः॥ ४२॥
कल्पितास्श्रीमहेशेन मनसैव मनोरमाः। हीरसारघनोत्तुङ्गपञ्चाशद्योजनोच्छ्रयम्॥
वृत्तायाममहाश्लक्ष्णकोटिभास्करभाततम्। कदलीपुष्पसङ्काशसमुच्छ्रायोरुमण्डलम्॥
ज्वलदिन्दुमहावृत्तब्रह्माण्डोदरदारणम्। गर्भगेहं तत्र शम्भोर्वेदवेदान्तसंस्तुतम्॥४५॥
कैलाससारसुभगमणिवेदिविराजितम्। तत्रैवान्तर्महापीठे कोटिद्युमणिसन्निभे॥ ४६॥
प्रभाभासिजगज्जालं चन्द्राच्छस्फटिकोज्वलम्। आयामवृत्तगोमुख्याहरिब्रह्मोरुपीठकम्
महालिङ्गं महाकारमखण्डस्फटिकोज्वलम्। तल्लिङ्गसारधाराभिः कैलासोऽप्यतिपाण्डरः
भाविभासितदिक्चक्रं सौधगोपुरमण्डितम्। अनर्घ्यवरसंवेष्टवेष्टितं गन्धसुन्दरम्॥४९॥
रत्नकह्लारकमलमालाजालैर्विराजितम्। सहस्रनीलमणिजनीलोत्पलसराश्चितम्॥५०॥
अखण्डहरितोद्दाममणिविल्वोत्तमाङ्गकम्। उत्फुल्लसूत्रवैडूर्यचम्पकाच्छसरैर्युतम्॥५१॥
पुष्परागमणीक्लृप्तं सुपाटलसरावृतम्। निष्टप्तहेमजात्यच्छकर्णिकारसरावृतम्॥ ५२॥
हीरसारमहाधारामल्लिकाच्छसरावृतम्। गोमेदकमणीक्लृप्तकरण्डकसरावृतम्॥ ५३॥
मन्दारकुन्दबन्धूकवकद्रोणार्करत्नजैः। सरकीलितसन्मौलिस्फटिकोपलकल्पितैः॥

मणिप्रभाततात्यच्छशोभितोत्तुङ्गमौक्तिकम् । सहस्रास्यमहाशेषफणामणिविराजितम्॥
पद्मरागमहारागत्रिपुण्ड्रतिलकोज्वलम्। तत्कान्तिकाञ्चितालोकास्तद्धारासारसागराः॥
तत्कैलासमहासारपिण्डशेखरपूजितम् । कैलासेशाख्यममलं लिङ्गं मङ्गलदायकम् ॥
मङ्गलापतिदृक्पातधारासारविजृम्भितम् । तल्लिङ्गमहिमावेदैरपारशिखराश्रयैः॥ ५८॥
ब्रह्मविष्ण्वादिभिर्देवै रुद्रैर्वा मुनिभिस्तथा । नशक्यो ज्ञातुमीषद्वा मूकावेदोक्तयो यथा

कैलासशैलमणिधामनि दिव्यलिङ्गं कैलासनामकमहो त्रिजगद्विचित्रम् ।
तल्लिङ्गमौलिशकलेन्दुकलासुभाभिराप्लावितोरुशिखरोऽत्र विभाति शैलः ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासलिंगवर्णनं नाम
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

कैलासेश्वरपूजाविधानकथनं नाम षट्त्रिंशोऽध्यायः.

स्कन्द उवाच—

तल्लिङ्गजातास्सर्वेऽपि भुवनानि चतुर्दश । तल्लिङ्गजाता देवाद्या ब्रह्मविष्णुहरादयः ॥
तल्लिङ्गे संस्थिता लोकास्सप्तद्वीपवनाकराः। प्रलयेऽपि लयं यान्ति सर्वे लोकास्सुरैस्सह
लयनाल्लिङ्गमित्युक्तं लीनं यस्मिञ्जगद्भुतम्। तस्माल्लिङ्गं मुने प्रोक्तं तत्कैलासेश्वरसंज्ञितम्
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । भूमौ तच्च महालिङ्गं प्रतिष्ठापुच्छमेवतु ॥
एकं ब्रह्मैव तल्लिङ्गमलिङ्गमपि भूसुराः । तदेव ज्योतिषां ज्योतिस्तद्धि चेतनचेतनम् ॥
तल्लिङ्गं सत्यमानन्दमखण्डैकरसंसदा । तल्लिङ्गदर्शने वाऽपि नवाग्गच्छति नो मनः॥
नेति नेति च वेदान्तैस्तल्लिङ्गं प्रतिपाद्यते। तदेव ब्रह्म त्वं विद्धि नेह नानास्ति किञ्चन
ऋतं सत्यं परं ब्रह्म तदात्मामनसोऽतिगम्। निरिन्द्रियं निष्कलङ्कमसङ्ग मजरं हि तत्॥
प्रभुं समस्तभूतोत्थसर्वधर्मविवर्जितम् । आकाशं तदनाकाशं साकारञ्च निराकृति ॥
कारणं कारणानाञ्च ब्रह्म तल्लिङ्गमेवहि। नामरूपातिगं शान्तं गुणातीतं गुणास्पदम्॥
अपाणिपादमत्यच्छमानन्दघनमद्वयम्। शिवस्य निर्गुणं रूपमदृश्यमकृतात्मभिः॥११॥

---

१. ञरीभिरिति पाठान्तरम् ।

तदेव व्यापकं भाति तल्लिङ्गन्तमसः परम् । तन्न वेदैश्च वेदान्तैर्गुरुभिश्श्रुतिभिस्सदा ॥
नप्राप्यं सर्वदा सर्वैर्द्रष्टुं तच्चाप्यथा श्रितुम्। तदेव देवदेवस्य निर्गुणं रूपमद्भुतम्॥१३॥
निर्गुणश्चाऽपि लोकानां दृष्टिगोचरवत्स्थितम्। तल्लिङ्गं सर्वदा शम्भुर्देव्या पूजयतिस्वयम्
वाह्यैराभ्यन्तरैश्चाऽपि पूजाभिः परमेश्वरः । त्रिणेत्रो नीलकण्ठश्च चन्द्रार्धकृतशेखरः॥
अहम्भावादिरहितो भावाभावविवर्जितः । अहं ब्रह्मैवेदमिति [१]यं वदन्ति नरामराः ॥
ध्यानध्येयातिगो भूत्वा स्थितस्समहिमातिगः। एवं सम्भावयन्देव्या शिवएव हि केवलः
तमः परो महादेवो देव्या सगुणनिर्गुणः । पूजां वाह्योपचाराद्यैर्मनोवाचामगोचरः ॥
कल्पयत्येव मनसा सर्वकालेषु शङ्करः । प्रदोषेषु विशेषेण कैलासे चन्द्रशेखरः॥१९॥
तत्पूजां सावधानेन समाहितमनाश्शृणु । चतुर्देहातिगो भूत्वा सर्वेन्द्रियविवर्जितः ॥
अहम्भावं परित्यज्य शिवोऽहं केवलोऽद्वयः।व्याप्येषु व्यापकश्चाहं गुणेषु निहतोस्म्यहम्
नान्तो नचादिस्सकलश्चाहं विश्वं सदैवहि । विश्वातीतोहमजरोऽसङ्गोऽसङ्गविवर्जितः॥
व्यापकोऽहं सदा पूर्णो गुणजालविवर्जितः । नीरूपो विश्वभूतात्मा देहधर्मविवर्जितः॥
आकाशो व्यापकश्शीर्यश्शीर्णेष्वहमवस्थितः। सत्यं ज्ञानोऽहमानन्दो बोधबोधकवर्जितः
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥
इत्येवं भावयन्धीरो वाह्ये लिङ्गं समर्चयेत् । धृतभस्मत्रिपुण्ड्राङ्को रुद्राक्षवरभूषणः ॥
पञ्चास्यध्याननिरतः पञ्चाक्षरपरायणः । प्राङ्मुखोदङ्मुखोवाऽपि स्थितश्चेलकुशासने॥
ध्यात्वा स्वहृत्पद्मसंस्थं शुद्धस्फटिकसन्निभम्। प्रसन्नास्यं त्रिणयनं त्रिपुण्ड्रपरिशोभितम्
चन्द्रार्धमुकुटं देवं नीलग्रीवमुमापतिम् । आवाहयेद्वाह्यलिङ्गे स्फाटिके बाणधातुजे ॥
मृल्लिङ्गे सिकतायाश्च पूजयेत्स्थावरेऽपि च । पञ्चामृतैःपञ्चगव्यैर्नीरधारादिभिश्शिवम्
पञ्चब्रह्मैः पावमानै रुद्रैर्वेदसमुद्भवैः । अभिषिच्य प्रयत्नेन सामभिश्च महेश्वरम्॥३१॥
वस्त्रैरावेष्ट्य तल्लिङ्गं गन्धलेपेन लेपयेत् । अक्षताभिस्तथा रत्नगोलकैर्भूषयेच्छिवम् ॥
विल्वपत्रैश्च कह्लारैश्चम्पकैः करवीरकैः । पुष्पैरारण्यकैश्चैव तथान्यैश्च सुगन्धिभिः ॥
धूपैश्च दीपैर्नैवेद्यैस्ताम्बूलैर्मणिदीपकैः । नीराजनैश्छत्रमुख्यैश्चामरैर्व्यजनैरपि॥ ३४॥
प्रणामस्तोत्रपठनैः प्रदक्षिणसुनर्तनैः । पुनः प्रदक्षिणैश्चैव पञ्चाक्षरजपैस्तथा ॥ ३५॥

---

१. तुर्यातीतोऽजरोऽमरः इति पाठः ।

हृत्पद्मे सन्निवेश्येशं पूजोद्वासनमारभेत् । एवं पूजाविधानेन पूजयेत्परमेश्वरम् ॥ ३६॥
एककालं द्विकालं वा त्रिकालं योऽर्चयेन्नरः । स एव लभते ज्ञानमाभ्यन्तरवरार्चनैः॥

कैलासेश्वरलिङ्गमेतदमलं स्वर्गापवर्गप्रदं
तन्नैवाखिलवेदजालतिलकैर्ज्ञातुं न तत्पार्यते ।
ईशेनापि गजाननेन च मया देव्या गणेन्द्रैरपि
विष्णुब्रह्महरामरैर्मुनिगणैस्तन्त्रैस्तथैवागमैः ॥ ३८ ॥
तल्लेशायुतलेशलेशमहिमा कोट्यंशकोट्यंशकं
वक्तुं श्रोतुमथेक्षितुं त्रिभुवने नास्तीति मन्ये द्विज ॥ ३९ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासेश्वरपूजाविधानकथनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

कैलासवासमहिमानाम सप्तत्रिंशोऽध्यायः.

स्कन्दः—

एवं कैलासशैलोऽयं विहितश्शूलपाणिना । मणिप्राकारसौधाश्च गोपुराण्यपि भूसुर ॥
रत्नानाङ्गिरयस्तत्र गणावसथकल्पनाः । नानारुद्रावताराणां सभामण्टपनिर्मिताः॥ २॥
तथानान्यत्ररमते सर्वावासोऽपि शङ्करः। देव्यापि स्कन्दहेरम्बनन्दिकेशादिभिः प्रियः
महेशस्य निवासोऽयङ्गिरीशो गिरिशस्य हि । नाविमुक्तेऽपि रमते न तथा हिमभूधरे॥
मन्दरे निषधेऽपीशस्तथाद्रौ गन्धमादने । तथान्येषु नगेन्द्रेषु प्रीतिर्नैव पिनाकिनः ॥
लिङ्गालयोऽयङ्कैलासो रम्यसानुतरूज्वलः । सुरम्यमणिशृङ्गाग्रश्चारुसुन्दरकन्दरः ॥
कलधौतप्रभाधूतदिक्तमस्स्तोमसन्ततिः । सर्वतीर्थमयश्शैलस्सर्वलिङ्गमयो नगः ॥ ७॥
गणेश्वरोऽयङ्कैलासस्सर्वदा शिववासभूः । सर्वक्षेत्रमयश्शैलः क्षेत्रेशाश्रयतस्सदा॥ ८॥
सर्वौषधिमयश्चायमोषधीशसमाश्रयात् । वनाश्रयोऽयङ्कैलासो वनाधिपसमाश्रयात् ॥
मृगावासो हि सततं सदा पशुपतिप्रियः । नास्य रूपमहोवेदैर्ज्ञातुमेव न शक्यते॥१०॥
कैलासापारशिखरैस्सर्वलोकोऽतिपावनः । तन्मौलितलसंस्पृष्टा वाताः पावनपावनाः॥

१. नन्दिकेशादपीति पाठान्तरम् ।

ब्रह्मादयस्स्वलोकस्थाः प्रार्थयन्त्यनिलन्ततः। विष्णुब्रह्मादयोदेवा मुनयोऽपिमुनीश्वर
कदास्मान्पावयेद्वायुः कैलासशिखरागतः। अस्माभिर्नतपस्तप्तङ्कैलासालोकनाय तु ॥
अण्डजानामपि गतिर्निषिद्धा शशिमौलिना। सूर्यचन्द्रानलानान्तु प्रभाविद्योतनं न हि
तस्यैव शिखरोद्दामप्रभाभिर्भासिता दिशः। कैलासमौलिसंस्थस्य यत्सुखं क्षणमात्रतः॥
न हि तद्वैष्णवे ब्राह्मे कल्पावधि सुखोत्तरम्। न चैन्द्रे मेरुमौलौ वा नन्दने स्वर्गमण्डले
दिक्पालानां पुरौघे वा सौरे चान्द्रमसेऽपि वा। न चतुर्दश लोकेषु तत्सुखांशांशकोटिकम्
प्रसादेन विना शम्भोर्गमनन्तत्र दुर्लभम्। न कर्मणा न तपसा धर्मैश्च विविधैरपि ॥
कैलासाचलवार्तापि न शक्या गमनङ्कथम्। सुरा विष्ण्वादयः पूर्वे ब्रह्मापि भगवद्गणाः
मुनयस्तपतेऽद्यापि कैलासनगवीक्षणे। कैलासगमने लिप्सान्धृत्वा ते सुरसत्तमाः ॥
शिवप्रसादसिध्यर्थं तप्यन्ते परमन्तपः। केचित्पञ्चाग्निनिरतास्समीरणसुपारणाः ॥
वृन्तश्लथच्छदाशाश्च केचिद्वारिषु संस्थिताः। कटधूमशिखापानाः केचिच्चैवोर्ध्ववाहवः॥
भस्मच्छन्नाभस्मसंस्थाःकेचिच्छ्रीरुद्रजापकाः।भस्माङ्गाबिल्वमूलेषुकेचित्पञ्चाक्षरादराः
रुद्राक्षवरकोटीराश्शिवनामपरायणाः। केचिल्लिङ्गार्चनपरास्त्रिकालं बिल्वपल्लवैः ॥
एवं तपोभिरत्युग्रैस्तप्यन्ति मुनयस्सुराः। सदाशिवप्रसादो हि तेषाम्भावि मुनीश्वराः
सर्वलोकेषुगन्तारस्सर्वधर्मपरायणाः। पुनरावृत्तिनस्सर्वे न कैलासगता मुने ॥ २६ ॥
यतयोऽपि निवर्तन्ते ज्ञाननिर्धूतकल्मषाः। शिवप्रसादलभ्योऽयङ्कैलासो ह्यतिदुर्लभः॥
मेरुशृङ्गकैलासशिखरे वरशाम्भवाः। पूजया श्रद्धया शम्भोरीशानस्य पदङ्गताः ॥
सुखिनस्सम्प्रमोदन्ते स्वर्गकोटिगुणाधिके। महाकैलासगमनमस्माकङ्किं पुनर्नृणाम् ॥
शिवप्रसादहीनानां तत्कथाश्रवणं न हि। अनेककोटिकल्पोत्थतपसा प्राप्य एव सः ॥
मेरुमन्दरसङ्काशरत्नस्वर्णादिदानतः। सत्रातिरात्रकलनैर्वेदाध्ययनकोटिभिः ॥ ३१॥
गवाङ्कोटिप्रदानैर्वा विद्यया तपसापि वा। इष्टापूर्तादिधर्मैर्वा कैलासप्राप्तिरेव न ॥
शिवप्रसादाल्लभ्योऽयं प्रसादो दुर्लभो नृणाम्। देव्या मया गणेशेन नन्द्याद्यैर्गणपैरपि।
कैलासबाह्यप्राकारे तपसा याचिता स्थितिः। अनेकयुगसन्तप्ततपसा तोषितश्शिवः ॥
शिवप्रसादेन वयं तद्बाह्यशिखराश्रयाः। गण्यन्ते सिकता भूमौ गण्यन्ते दिवि तारकाः
कैलासापारशृङ्गस्थलिङ्गानाङ्गणना न हि। तत्रापि कोटिलिङ्गानामुत्तमानां श्रुता मया

ततोऽपि लक्षलिङ्गानां ततोऽयुतसहस्रकम् । उत्तमानाञ्च देव्यै तद्दता श्रीशिवेन हि॥
गणना गण्यते केन कल्पकोटिशतैरपि । अनिर्वचनमायस्य मायिनश्श्रीत्रिशूलिनः ॥
को वेद महिमानं तु तत्र तन्मौलिलिङ्गगम् । स वेद वेदनिश्वासस्सर्वज्ञश्शशिशेखरः॥

शिवसन्निधिरेव सन्निधिस्स्याद्विबुधाधीशपदाब्जरत्नवारिधिः ।
जनिनाशप्रभवापराधसन्धिः प्लुतिजापारविशेषतोपगाधिः ॥ ४० ॥
निधिरेवाखिलसम्पदां युगाधिर्भवभक्तामलचेतदारिताखिलाधिः ॥
एवङ्कैलासशैलामलशिखरवरैर्मौलिकुम्भैकजालै-
स्तत्रापारशिवालयस्थितमहालिङ्गौघलिङ्गाश्रयैः ।
ईशापारमनोविलासजनितैर्दृष्ट्वा महेशस्स्वयं
बालार्धाकृतिरिन्दुमौलिरनलालङ्कारफालाक्षकः ॥ ४१ ॥
कालारिः कलधौतशैलशिखरं लिङ्गालिपूर्णङ्करोत् ॥ ४२ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवासमहिमा नाम
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## कैलासलिंगवर्णनं नाम अष्टत्रिंशोऽध्यायः.

जैगीषव्यः—

भगवंस्तारकाराते शिवभक्तवरामल । नमामि त्वत्पादाम्भोजं किन्तद्देव्यै शिवोदितम्॥
रहस्यंवा प्रकाशंवा तन्मेव्याख्यातुमर्हसि । तदुक्तं सम्प्रधार्यैव स्कन्दोमन्दस्मिताधरः
भवभक्तं महाप्राज्ञं सुराणां शृण्वतां तदा ॥ ३ ॥

सूतः—

मुनीनाञ्च सुराणाञ्च गणेशानाञ्च सन्निधौ । प्रोक्तवाञ्छ्रीमहादेवन्ध्यात्वा हृत्पङ्कजेऽमले

स्कन्दः—

देव्या कैलासजोत्तुङ्गशिखरे वरगोपुरे । एकाकिना सञ्चरता विस्मिताक्षेण पश्यता ॥
शिवेन नन्दिता देवी प्राह प्राञ्जलिरीश्वरम् ॥ ६ ॥

देव्युवाच—

देवदेव महादेव शङ्कर करुणालय। एणाङ्कमौले सर्वज्ञ गङ्गाजलजटाधर ॥ ७ ॥
भव भर्गामरेन्द्रेन्द्र फणामणिविभूषित। वृषध्वजेश कामारे पुरान्तक यमान्तक॥ ८॥
खट्वाङ्गडमरूद्दामघोषघोषितविष्टप। त्रिशूलपाणे भूतेश व्योमकेश दिगम्बर ॥ ९ ॥
त्रिजगज्जालनिर्माणस्थितिनाशकर प्रभो। विस्मयस्तव नास्त्येव लीलेयं तव शङ्कर ॥
लोका लोक्या ब्रह्मविष्णुहरामरवरासुराः। तेषामुत्थानसंस्थानविनाशनमपीश्वर ॥
त्वदपाङ्गैकसङ्गेन सर्वेषां प्रलयोदयौ। तव को विस्मये हेतुस्तद्ब्रूहि परमेश्वर ॥ १२ ॥

ईश्वरः—

शृणु देवि प्रवक्ष्यामि गिरीन्द्रवरनन्दिनि। त्वयि गोप्यं न मे किञ्चित्त्रिषु लोकेषु विद्यते
न प्रकाश्यं त्वया देवि रहस्यं मम हृद्गतम्। तथापि त्वयि वक्ष्यामि लिङ्गाध्यायमिमं शिवे
कैलासाचलमौलिस्थं लिङ्गमण्डलमम्बिके। तज्ज्ञातुन्नैव शक्यं हि मयैव मनसा ततम्॥
कोटिलिङ्गाकृतिरहं तत्पूजाकल्पकोऽप्यहम्। न तानि देवमुनिभिर्गन्धर्वैः पूजितान्युमे
नामरेन्द्रवरैर्देवि श्रुतानि किमु दर्शनम्। पूजने का कथा देवि चागम्यो मम भूधरः॥
तत्पश्यामि प्रसन्नेन मनसा विस्मयेन च। मदीक्षणेन सर्वेषां लिङ्गानां पूजनं भवेत् ॥

शिवे पश्य महादेवि यावत्ते दृष्टिसन्ततिः ॥ १९ ॥
लिङ्गमण्डलमिदन्नगात्मजे चन्द्रखण्डललितोत्तमाङ्गकम्।
कुण्डलीशसुफणाविभूषितं पापजालसुगिरीन्द्रखण्डनम् ॥ २० ॥
पुण्ड्रशोभितकपालमालकं विल्वचन्दनसुपङ्कजार्चितम्।
पश्य पश्य गिरिजे नगमौलौ तोषदायकमतीव ममेष्टम् ॥ २१ ॥
कैलासोऽयमतीव सुन्दरमहालिङ्गालयानां शिवे
कोटीभिः परितो वृतो मणिगृहैस्तादृक्षलिङ्गैरपि।
मालूरोत्तमशाखिशेखरशिखस्तस्याच्छपुष्पैः फलै-
रानम्रच्छदभारपल्लवयुतैस्तद्गन्धवन्धानिलः ॥ २२ ॥
शिखिशिखकुलाग्रपिञ्छभारैर्मम लिङ्गालयमार्जनं सदैव।

---

१. करुणावरुणालय इति च पाठः। २. नमद्गणैरिति पाठान्तरम्।

वनवेणूद्भवदावमध्यलग्नैस्सगरामोदसुधूपितं सदैव ॥ २३ ॥
मणिगर्भगृहोत्थरत्नदीपैस्सततन्दीपितमेव लिङ्गसङ्घम् ।
वनविल्वछदपुष्पगन्धवाहैरभिनीतैश्च सुपूजितानि पश्य ॥ २४ ॥
पाटलपटलैश्च कर्णिकारैस्सरसोत्फुल्लसुमुल्लसत्परागैः ।
अरविन्दैः कुरुविन्दबृन्दवर्णैर्नवनीलोत्पलहल्लकैस्सुफुल्लैः ॥ २५ ॥
सितरक्तामलवर्णशीर्यवृत्तैरतिगन्धैर्मकरन्दवृन्दलीलैः ॥ २६ ॥
मन्दारैरतिसुन्दरैर्मम शिवे लिङ्गालिमौलिस्सदा
मल्लीफुल्लसुपुण्डरीककुमुदैस्सत्कर्णिकारैश्शिवे ।
सञ्छन्नानि तरां सदाघनफलैः मोघत्सुधासारकै-
नैवेद्येषु शिवे सदा सुरचितं लिङ्गालयेपूद्यतम् ॥ २७ ॥
करिकरपुष्करशीकरोत्थसारैरभिषिक्तानि स्वमौलिचन्द्रसारैः ।
कस्तूरिकामृगमदाङ्गजघर्षणेन गन्धायितानि नगमौलिषु पश्य देवि ॥ २८ ॥
उत्फुल्लचामरकुलैरभिवीज्यमानं नृत्तं शिखण्डिविहितं पिकहंसरागम् ।
सम्पूज्य पूजितमिदं मम लिङ्गसङ्घं पापापहारि सुगतिप्रदमुत्तमञ्च ॥ २९ ॥

स्कन्दः—

इत्थं कैलासशैलेनवरतकथया स्वर्धुनीतुल्ययासौ
देवीं पश्यन्नगौघन्दलितशिववरोद्दामलिङ्गानि पश्यन् ।
कालारिर्नियतीन्दुशेखरवरोत्तंसोद्यमाङ्गो महा-
मौलिं स्वं धुनयन्नतीव करुणादृष्ट्या प्रपश्यन्नगम् ॥ ३० ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासलिंगवर्णनं नाम
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

१. शीर्णवृन्तैरिति पाठान्तरम् ।

कैलासशैललिंगमहिमानाम एकोनचत्वारिंशोऽध्यायः.

ईश्वरः—

पश्य लिङ्गानि मे देवि मणिधामगतान्युमे। धाममौलिमहाकुम्भधाराव्याप्तानि शङ्करि
चन्द्रचन्दनलिप्तानि त्रिपुण्ड्रोज्वलितानि च । मणिसुन्दरमन्दारपुष्पमौलीनि शङ्करि
विल्वोत्तमाङ्गसौन्दर्यसारगर्भाणि पार्वति । वरकाकोदरानद्धफणाभूषणकान्यपि।। ३।।
नन्दनानन्दमालाभिश्चन्दनालङ्कृतान्यपि । दावदग्धागरुरसैर्धूपितानि सदाम्बिके ।।
दीपितानि मणिज्वालाजालकान्तीनि पश्य मे । यथा मे देवदेवेशि मनो लिङ्गप्रपूजने
न तथा जगतो जालनिर्माणे मे मनोऽम्बिके । तत्पालने तद्धनने नान्यधर्मेषु मे मनः।।
नगोऽयं मम कैलासस्सर्वानन्दपयोनिधिः । एतस्य तपसा तुष्टः प्रायच्छं वरमुत्तमम्।।
तवमौलौ निवत्स्यामि नानालिङ्गसमाश्रयः। प्रलयेनैव नाशोऽस्ति मत्सान्निध्यबलात्तव
इत्युक्तो गिरिराजोऽयं ममानन्दप्रदस्सदा । प्रलये सागरास्सर्वे कैलासस्य शतोत्तरे ।।
पादमूले स्थितिं देवि यास्यन्ति च नगा अपि । महर्लोकावधि महावीचीकल्लोलसङ्कुलैः
सप्तभिः पवनैर्वापि चालितास्ते तदाद्रिजे । हिमाचले मन्दरेऽपि केदारेश्वरसंज्ञकः ।।
निवत्स्यामि शुभापाङ्गि सदा लिङ्गाश्रयो हि सः। मेरावपि महादेवि शिखरं मम सुन्दरम्
तदुत्तरेऽपिकैलासे नानालिङ्गैकभासुरम् । शिखरं तत्र देवैश्च पूजितो निवसाम्यहम्।।
एक एवाहमद्वैतो नीरूपोऽहमिहाद्रिजे । त्वया कैलासशिखरे तुष्टो वासमरोचयम् ।।
सर्वावासोऽप्यहं देवि कैलासे निवसाम्यहम् । अनन्तार्बुदलिङ्गानि मम कैलासपर्वते।।
तत्प्रासादमणीरागशिखराद्योदितप्रभाः। तिरस्कृतार्कचन्द्रेन्द्रा न तच्छक्यं हि वर्णितुम्
तत्रापि कोटिलिङ्गानां गणना किल सुन्दरि । उत्तमेषु महादेवि तत्रापारेषु पार्वति।।
तत्रापि लिङ्गसाहस्रं ममैव प्रीतिदायकम् । दर्शनात्संस्पर्शनाच्च पूजनान्मोक्षदायकम् ।।
विना ज्ञानेन तपसा कर्मणा श्रद्धया शिवे । नयज्ञैर्न व्रताचारैर्योगैस्साङ्ख्यैर्महेश्वरि ।।
सागतिर्नैव लभ्येत यथा तल्लिङ्गपूजया । कैलासाचलमौलिस्थलिङ्गानां दर्शनं शिवे ।।
दुर्लभं सर्वदेवानां नृणां किमुत शङ्करि । कैलासेश्वरमुख्यानि लिङ्गान्यत्यद्भुतानिच।।
मणिगर्भगृहाधारसंस्थितान्यगजे सदा । प्रोद्यत्कुम्भपताकानि मया सम्पूजितान्यपि।।

---

१. प्रदग्धिवः इति पाठः ।

प्रातस्सङ्गवसायाह्नप्रदोषेषु महेश्वरि । तेषु लिङ्गावलिं भद्रे शृणु वक्ष्यामि सादरम् ॥
कीर्तनश्रवणेनापि पापभेदीनि शङ्करि । स्वर्गापवर्गदान्याशु नृभिस्सङ्कीर्तितान्यपि ॥
पूर्वतो मम कैलासे नानालिङ्गकुलेष्वपि । तद्गिरेर्दक्षिणे चापि पश्चादपि शुभानने ॥
तदुत्तरेऽपि देवेशि नानाज्योतिर्मयानि च । न शक्यं वर्णितुं देवि देवैश्शेषेण भामिनि
कल्पायुतैरपि शिवे तल्लिङ्गमहिमा नु किम् । नशक्यं विस्तराद्वक्तुं तन्नामानि शृणु प्रिये
पञ्चाशदुत्तरन्देवि शतद्वयमितं दिशि । प्रथितानि महादेवि ह्यपरेष्वपि सादरम् ॥
कैलासापारशिखरगर्भधामोरुमौलिगम् । कुम्भमण्डलमानाकं लिहन्निव च संस्थितम्॥
शुद्धाच्छफलकारत्नकल्पितं योजनोन्नतम् । शरच्चन्द्राच्छधवलप्रभामण्डलमण्डितम् ॥
रत्नगर्भगृहान्तस्थं सुरम्यमणिवेदिकम् । मणिप्रभाततं दिव्यं नीलपीतारुणप्रभम् ॥
प्रवालपुष्परागादिगोमेदकविद्रूरकैः । पीठोज्वलप्रभाक्रान्तं शुद्धस्फटिकमप्युमे॥३२॥
चर्चितं चन्दनाद्यैस्तु ह्यर्चितं बिल्वपल्लवैः। मन्दारकुन्दमालाभिरिन्दुखण्डैकभूषणम्॥
भुजङ्गमणिसञ्छन्नं मणिदीपप्रभोज्वलम् । दिव्यागरुमहाधूपैर्धूपितं गन्धमोदितम् ॥
हीरसारत्रिपुण्ड्राङ्गं कस्तूरीतिलकाञ्चितम् । महाकैलासशृङ्गाग्रसौधशेखरशोभितम् ॥
मणिकुम्भोद्यतापारलसत्कान्तिचिताम्बरम् । पश्य लिङ्गकुलं भद्रे भद्रदं दर्शनेन च ॥
तत्सौधकुम्भधाराग्रदर्शनेनापि मुक्तयः । प्राप्नुवन्ति सुरा देवि नराश्श्रवणसादराः ॥
प्रणामं कुरु देवेशि शृणुष्वावहिता भव । लिङ्गानां नामधेयानि वेदान्तोत्थानि शैलजे
भाति लिङ्गकुलं भद्रे मुक्त्यङ्कुरमिवोद्यतम् । पुण्यप्रदं श्रवणतोद्दर्शनान्मुक्त एव सः ॥
भूलोके चैव पाताले स्वर्गे वै सत्यलोकके । नैतादृशानि लिङ्गानि किं पुनर्भारते भुवि॥
भूलोकलिङ्गादुत्कृष्टंलिङ्गंपातालोकगम् । पातालात्स्वर्गलोकस्थंततोविष्णुविधीन्द्रगम्
आद्यं मङ्गलदं देवि कैलासेश्वरसंज्ञितम् । यन्नवेदैरपिज्ञातं वेदान्तैरखिलैरपि ॥ ४२॥
अस्मिन्नेव लयं यान्ति ब्रह्मविष्णुमहेश्वराः । लयनात्सर्वजगतां लिङ्गमित्युच्यते बुधैः॥
ममैव निर्गुणं साक्षाद्रूपमेतन्महेश्वरि । अस्यैव भासा सर्वेऽपि भान्ति लोकाश्चतुर्दश ॥
अस्यैव चेतनात्सर्वजगच्चेतयति प्रिये । अस्यैवानन्दलेशेन सर्वानन्दमयं प्रिये॥ ४५॥
लिङ्गमेतद्ब्रह्मधामसोमधामप्रभाधिकम् । एतद्ब्रह्मैव देवेशि ममैव परमं प्रियम् ॥ ४६ ॥

---

१. मालतः इति पाठान्तरम् ।    २. अत्रैवान्तेलयमिति पाठान्तरम् ।

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। स्वच्छस्फटिकसंशुद्धमाकाशात्मकमुत्तमम्॥
यतो भूतानि जातानि यत्र संस्थानि सर्वदा। यत्रैवान्ते लयं यान्ति तल्लिंगमिदमद्रिजे
यतो ब्रह्मेशविष्ण्विन्द्रास्सम्प्रजाता नगात्मजे। यत्सत्यं ज्ञानमानन्दं ब्रह्मैवेदं सनातनम्
सूक्ष्मात्सूक्ष्मतरं साक्षान्नैव स्थूलं न चाणुकम्। सर्वेन्द्रियविनिर्मुक्तं सर्वधर्मविवर्जितम्
अगन्धमरसस्पर्शं तन्न गन्धरसाश्रयम्। तदिदश्चक्षुषाश्चक्षुस्सर्वप्राणमयं सदा॥ ५१॥
सर्वेन्द्रियगुणातीतं भूतेषु च ततं सदा। सदा ह्यशीर्णं शीर्णेषु नेह नानास्ति किञ्चन॥
यस्मिन्त्सम्पूजितेज्ञातेध्यातेस्वात्मनिशैलजे। लिंगीलिंगातिगोभातितदिदंलिंगमुत्तमम्
नामरूपातिगं भाति कैलासेश्वरसंज्ञितम्। तन्नामानि शृणुष्वार्ये सादरं कमलानने॥

बिल्वोरुसुन्दरवनच्छदिताच्छशाखासञ्छन्नभूतलमुमे मम शैलपालिः।
सम्फुल्लपुष्पजपचेलिमगन्धवन्धसन्दोहगन्धवहजातफलो ममेष्टः॥ ५५॥
उत्फुल्लपङ्कजपरागजधूलिपालिरुद्दामकेलिरभियासितशीतवातः।
पुष्णाति गात्रवरमम्बिकया समेतं कैलासशैलसरसीरुहपालिलग्नः॥ ५६॥
रत्नसालकुलमूलगसौधपूगजालपरिसर्पिसुधाब्धौ।
अण्डजाविव शिवौ रमणीयौ क्रीडतुर्दिवसनाथजतापैः॥ ५७॥
त्वमेकाकिनी सौधजालेऽस्मदीये विशिष्टासि कान्त्या तवाद्यानेनेन्दुः।
न चैवोपमीते मनाक्छैलकन्ये स दोषाकरो नैव ते सोमधाम॥ ५८॥
कैलासाचलमौलिपालिविलसल्लिंगानि तुंगानि मे
व्यालीमौलिजपालिकालिविलसत्पुच्छोत्थधूलीभरैः।
केलीभिर्नगकुञ्जरोत्थमदजैर्धारालिपालीभरै-
श्श्राम्यद्गन्धफलीकदम्बजरजः पुञ्जालिकीलानि च॥ ५९॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासशैललिंगमहिमानाम
एकोनचत्वारिंशोऽध्यायः॥ ३९॥

---

## कैलासप्राग्भारस्थलिंगाभिधानन्नाम चत्वारिंशोऽध्यायः.

ईश्वरः—

श्रीकैलासेश्वरो देवि भूतेशश्चाम्बिकेश्वरः। सूतेश्वरो गणेशेशस्स्कन्देशस्तारकेश्वरः ॥
गङ्गेश्वरो नन्दिकेशो भृङ्गीशो बाणकेश्वरः। चण्डीश्वरो मुण्डिकेशो रत्नेशो गन्धकेश्वरः
गर्भेश्वरोऽथ वीरेशो ज्येष्ठेशः कुसुमेश्वरः। वीरभद्रेश्वरो देवि कन्दुकेशः फणीश्वरः ॥
सुधेश्वरो गभस्तीशो रुद्रेशो भैरवेश्वरः। करवीरेश्वरश्चैव निषधेशो वटेश्वरः ॥ ४ ॥
कच्छपेशः काश्यपेशश्चावटेशो घृणीश्वरः। कलशेशो देविकेशः पद्मेशो मगधेश्वरः ॥
तुण्डेशश्चैव ढुण्डेशस्सौरेशो वरुणेश्वरः। नैरृतेशो वैद्युतेशो मोक्षेशो दण्डकेश्वरः ॥ ६ ॥
मण्डलीशः कुण्डलीशः खण्डेशो भाण्डलीश्वरः। गण्डेशो गरुडेशश्च चन्द्रेशो मारुतेश्वरः
विधीश्वरस्सुधीशश्च तुण्डकेशो मुनीश्वरः। उमेश्वरः कपर्दीशो भद्रकर्णेश्वरस्तथा॥ ८ ॥
वेगेश्वरोऽथ विष्ण्वीशो वैराजेशोऽमरेश्वरः। अहिर्बुध्न्येश्वरश्चैव जमदग्नीश्वरस्तथा ॥
विश्वामित्रेश्वरश्चैव रावणेशो बलीश्वरः। मनोन्मनीश्वरश्चैव सुधाधामेश्वरोऽद्रिजे ॥
मार्ताण्डेशो ललन्तीशस्स्वर्लीनेशो ध्रुवेश्वरः। गन्धर्वेशोऽतिविश्वेशः पारिभद्रेश्वरस्तथा
गर्भेशो मरुधन्वीशस्तोरणेशो धृतीश्वरः। उत्पलेशो महेन्द्रेशस्स्थाण्वेशो भरितेश्वरः ॥
अनन्तेशः कर्दमेशो मृडेशो बभ्रुकेश्वरः। वागुरीशो वर्मकेशः पटभद्रेश्वरस्तथा॥ १३॥
श्रामरेशो मृगेन्द्रेशो हिरण्येशः पवीश्वरः। आग्नीध्रीशस्सन्नतीशो बृहतीशो रणेश्वरः ॥
किरातेशो गर्जकेशो वेणुदारेश्वरस्तथा। जयन्तेशो मध्यमेशस्संगमेशोऽगतीश्वरः ॥
विद्युद्गर्भेश्वरो देवि त्रिपुरेशो हरीश्वरः। बलप्रमथनेशश्च सर्वभूतदमेश्वरः ॥ १६ ॥
उशीनरेश्वरश्चैव गर्गेशो मन्त्रकेश्वरः। तन्त्रेश्वरस्सामकेशो व्योमकेशो दिगीश्वरः ॥
कपालमोचनेशानो मणिगर्भेश्वरस्तथा। जातुकर्णेश्वरश्चैव नृगेशः पाटलेश्वरः॥ १८ ॥
कर्णिकेशश्छत्रकेशः पिंगलेशश्शिलेश्वरः। मध्वीश्वरो वामकेशो यौवनेशस्स्थिरेश्वरः॥
भ्रान्तीश्वरोजह्नुकेशोगोमेदेशोऽखिलेश्वरः। विशालेशस्सिद्धिकेशोघण्टाकर्णेश्वरोऽद्रिजे
व्याघ्रेशो जम्बुकेशश्च ललितेशो धृतीश्वरः। वेदेश्वरो दिण्डिकेशः कहोलेशो ध्वनीश्वरः
बिन्दुकेशो गण्डकीशो नर्मदेशोऽनिलेश्वरः। पिचण्डिलेश्वरोऽत्रीशः कनकेशोऽध्वरेश्वरः

१. मुंजिकेश इति पाठः ।

सद्योजातेश्वरश्चैव कुलिशेशः प्लवेश्वरः । सोमेश्वरो वारुणेशश्शरभेशो जटेश्वरः॥ २३॥
भागकारेश्वरो मुग्धकेशो रोगेश्वरस्तथा । भल्लूकेशो विरागेशः क्रथनेशो धनेश्वरः ॥
उरगेशः कठोरेशो दर्दुरेशोर्वरीश्वरौ । क्षिप्रेश्वरश्च दाल्भ्येशो विनतेशश्शशीश्वरः ॥
ककुदेशो मुकुन्देशो भवानीशश्शनीश्वरः । वृषभेशो धेनुकेशस्संवर्तेशः कणेश्वरः ॥
ऋक्षेश्वरश्च चन्द्रेशो मत्स्येशो भावनेश्वरः। तुरंगेशो मतंगेशः कणादेशो भगीश्वरः ॥
जलन्धरेश्वरश्चैव श्वेताश्वेशः पिकेश्वरः । रैभ्येशो मुचुकुन्देशः कङ्कणेशः प्रथेश्वरः ॥
विद्याधरेशो नीलेशः कक्षीवेशः प्रभेश्वरः। मरुतेशश्चर्कुतीशस्स्वर्गेशो मलयेश्वरः॥२९॥
मङ्कणेशो जागतीशो विबुधेशो गिरीश्वरः। चर्वणेशो निघूर्णेशो गोरक्षो वा गजेश्वरः॥
कन्दर्पेशस्सूर्यकेशः पुष्टेशस्तुष्टकेश्वरः । विनायकेश्वरश्चैव मणिकण्ठेश्वरस्तथा ॥ ३१ ॥
रन्ध्रेशः पार्वतीशश्च विद्रुमेशो लतेश्वरः । विरिञ्चीशो भद्रकेशः प्रसन्नेशो विशेश्वरः ॥
भारभूतेश्वरश्चैव लोकेशः प्राणिकेश्वरः । अन्धकेशो मुक्तिकेशो हरिकेशो ऋपीश्वरः॥
गारुडेशः पतंगेशः कन्येशो धवलेश्वरः । जातुकर्णेश्वरश्चैव गन्धभद्रेश्वरस्तथा ॥ ३४ ॥
चक्रेश्वरोऽरुणेशश्चाप्यदाल्भ्येशः खगेश्वरः । त्रियम्बकेश्वरश्चैव गौतमेशः खलेश्वरः ॥
वितण्डेशश्च कण्ठेशो वराहेशः कुलेश्वरः । केदारेशः फलेशश्च किन्नरेशोऽमृतेश्वरः॥ ३६॥

स्कन्दः—

कैलासशैलामलमौलिवर्ये प्राग्द्वारलिंगालयकल्पनं शिवे ।
ईशानकोणानलकोणसंस्थितं कैलास ईशाद्यमृतेश्वरान्तम् ॥ ३७ ॥
प्रोद्यत्पताकावलिमौलिकुम्भं मणीन्द्रधामस्थसुलिंगमण्डलम् ।
विल्वोत्तमांगं फणिभूषणाश्चितं त्रिपुण्ड्रसंशोभितफालदेशम् ॥ ३८ ॥
पश्याद्रिजे लिंगकुलं ममेदं सन्दर्शनात्पापहरं सदैव ॥ ३९ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासप्राग्द्वारस्थलिंगाभिधानन्नाम
चत्वारिंशोऽध्यायः ॥ ४० ॥

कैलासदक्षिणद्वारलिंगकथनं नाम एकचत्वारिंशोऽध्यायः.

ईश्वरः—

एवं लिङ्गकुलं भद्रे प्राक्कैलासशिखाश्रयम् । तथैव दक्षिणे चापि प्रवक्ष्ये शृणु शैलजे॥
अघोरेशः कपालीशः कुक्कुरेशोऽनलेश्वरः । इन्द्रेश्वरो यमेशश्च नैरृतीशो नभेश्वरः ॥
उदावर्तीश्वरश्चैव दक्षिणावर्तकेश्वरः । विकुण्ठेशः कुठारेशो मानवेशः कुलेश्वरः॥ ३ ॥
जापकेशो मौलिकेशश्चार्जुनेशः कनीश्वरः । भगदन्तेश्वरश्चैव नहुषेशोऽमृतेश्वरः॥ ४ ॥
तङ्कणेशश्च सन्धीशो मध्यमेशो गलेश्वरः । विघ्नेश्वरः पन्नगेशः क्रथनेशो निशेश्वरः ॥
दिवोदासेश्वरो राथीरथेशश्शौनकेश्वरः । गणभद्रेश्वरश्चैव शेषेशो वासुकीश्वरः ॥ ६ ॥
शङ्खपालेश्वरश्चैव चित्रगुप्तेश्वरस्तथा । दण्डपाणीश्वरश्चैव दुर्गेशस्मारसेश्वरः ॥ ७ ॥
हंसेश्वरो मयूरेशश्चक्रवाकेश्वरस्तथा । मन्थानेशो मन्मथेशोरतीशो गन्धकेश्वरः ॥ ८॥
भाण्डीरेशो वनेशश्च पुरन्ध्रीशः फलेश्वरः । कारणेशस्तारणेशः कृत्तिवासेश्वरस्तथा ॥
जनार्दनेशो विश्वेशो महाकालेश्वरस्तथा । सरस्वतीशो लक्ष्मीशश्शचीशश्शक्रकेश्वरः ॥
पुलहेशः पुलस्त्येशो वृद्धकालेश्वरस्तथा । भारद्वाजेश्वरश्चैव सागरेशो रमेश्वरः॥ ११॥
विलेखनेश्वरश्चैव चित्रेशः पादकेश्वरः । पिण्डारेशो वसीशश्च तिलकेशो ध्रुवेश्वरः ॥
[१]भवेश्वरोऽर्णवेशश्च क्षीभ्रणीशो दलेश्वरः । करन्धमेशः कृष्णेशो रमेशः कर्णकेश्वरः ॥
गङ्गाधरेशो मौनेशः कुरुभद्रेश्वरस्तथा । कन्दलेशश्च सालेशस्तालेशो [२]विल्वकेश्वरः ॥
अप्सरेशो मोक्षकेशो भूदारेशः पथेश्वरः । विराधेशः कोङ्कणेशो रभसेशश्चलेश्वरः॥
हरिद्रेशः कुङ्कुमेशो नरकोत्तारणेश्वरः । सुखेश्वरो ज्ञानकेशो भक्तीशो मुक्तिकेश्वरः ॥
[४]ऋणमोचेश्वरश्चैव कान्तीशः पावनेश्वरः । पवनेशः पुरञ्जेशो गोकर्णेशो वटेश्वरः ॥
शालिकेशो विशालेशो वीतिहोत्रेश्वरस्तथा । विश्वेश्वरश्च भीमेशश्शङ्करेशोऽमितेश्वरः॥
पारिजातेश्वरश्चैव मन्दारेशो जटेश्वरः । त्रिजटेशश्शिखण्डीशो वर्हीशः पनसेश्वरः ॥
फणामणीश्वरो देवि रामेशो लक्ष्मणेश्वरः । अरुन्धतीशो वागीशः पद्मगर्भेश्वरस्तथा ॥
हरिन्मणीशो भक्ष्येशः कुशलीशस्तरीश्वरः । उद्दालकेश्वरो नक्तश्चरेशो[३]ऽपर्णकेश्वरः॥

१. विल्वेश इति पाठान्तरम् । २. बभ्रेश्वर इति पाठान्तरम् ।
३. पर्णकेश्वर इति पाठान्तरन् । ४. ऋणमोचनेशः कान्तीशो धर्मेशः पावनेश्वरः इति पाठान्तरम् ।

शाण्डिल्येशश्छागलेशो निरिच्छेशः कुशेश्वरः। दूर्वेश्वरोऽनमित्रेशः कर्कन्धेशोऽगुणेश्वरः
कुरुविन्देश्वरश्चैव पट्टीशः कुटजेश्वरः। श्रीशैलेशो गणेशश्च हरिद्वारेश्वरस्तथा ॥ २३ ॥
गङ्गाद्वारेश्वरश्चैव कुरुक्षेत्रेश्वरस्तथा। सुराभाण्डेश्वरश्चैव ययातीशः कुथेश्वरः ॥ २४ ॥
वाराणसीश्वरश्चैवाप्यविमुक्तेश्वरस्तथा। कालहस्तीश्वरश्चैव विष्णुचक्रप्रदेश्वरः ॥ २५ ॥
रोमन्थेशोऽप्यगस्त्येशो मालवेशो भगेश्वरः। अङ्कोलेशः प्रधानेशो मारुतेशो भवेश्वरः ॥
नक्षत्रेशस्तालकेशो मल्लिकेशः कुहेश्वरः। रोगहारीश्वरश्चैव त्रिजटेशो घनेश्वरः ॥ २७ ॥
सुपर्णेशस्ताण्डवेशो मण्डलेशो मतीश्वरः। तक्षकेशः प्रवालेशो हरिभद्रेश्वरस्तथा ॥ २८ ॥
विरोधेशस्तुम्बुरेशो नारदेशो गरेश्वरः। रम्येश्वरो विद्रुमेशः कर्दमेशस्तृणेश्वरः ॥ २९ ॥
शूलटङ्केश्वरश्चैव छत्रकेशो वलीश्वरः। मरुग्रामेश्वरश्चैव सिन्धूरेशो घृणीश्वरः ॥ ३० ॥
व्रातेश्वरः प्रयागेशः प्रतिष्ठानपुरेश्वरः। गोदावरीश्वरश्चैव ताम्रपर्णीश्वरस्तथा ॥ ३१ ॥
मरुद्वृधेश्वरश्चैव पम्पेशः पङ्क्तिलेश्वरः। फेनेशो बुद्धदेशश्चाप्यावर्तेशस्सुसेश्वरः ॥ ३२ ॥
कुलेश्वरो विराटेशः पलाशेशस्स्थितीश्वरः। प्रलयेशो जाग्रदीशस्त्रिलोकेशः क्षितीश्वरः ॥
पञ्चकेशो व्रतीशश्च यज्ञेशो दुम्बरेश्वरः। वालीशश्चैव पालीशः पलीशो बभ्रवेश्वरः ॥ ३४ ॥
गन्धद्वारेश्वरश्चैव घण्टेशो वरुणेश्वरः। प्रभासेशः पुष्करेशो रुद्रकोटीश्वरस्तथा ॥ ३५ ॥
वल्मीकेशस्सुन्दरेशस्तृणज्योतीश्वरस्तथा। गायत्रीशस्सवित्रीशः कालद्वारेश्वरस्तथा ॥
तुङ्गेशो भीमचण्डेशो रत्नगर्भेश्वरस्तथा। देवेश्वरो हीरकेशो रन्तिदेवेश्वरस्तथा ॥ ३७ ॥
कालञ्जरेश्वरोऽब्धीशः पैप्पलादेश्वरस्तथा। गन्धर्वेशस्त्रिशूलेशो रजनीशो दिनेश्वरः ॥
चित्रघण्टेश्वरश्चैव द्वारपीठेश्वरस्तथा। त्रिकूटेशो मङ्गलेशस्तथैवामलकेश्वरः ॥ ३९ ॥
मुद्रेशस्ताटकेशश्च त्रिदण्डीशोऽगजेश्वरः। कात्यायनीश्वरश्चैव याज्ञवल्क्येश्वरस्तथा ॥
त्वष्ट्रीशो विश्वकर्मेशो यमेशो रथकेश्वरः। वसुन्धरेश्वरश्चैव क्षौमेशो नालकेश्वरः ॥ ४१ ॥
मित्रेश्वरश्च कर्त्रीशः काव्येशो विबुधेश्वरः। भौमेश्वरो भर्तृकेशः करहट्टेश्वरस्तथा ॥ ४२ ॥
गृध्रेशः कङ्कर्तीशश्च काव्येशस्स्वर्णदेश्वरः ॥ ४३ ॥

एतानि दिव्यमणिधामगतानि देवि लिङ्गानि याम्यसुभगोद्यतसोममौलि ।

---

१. कण्ठेश इति पाठान्तरम् ।

चन्द्रोपलाकलितलिङ्गततीनि पश्य चाग्नेयनैरृततततानि शिवेऽघहन्तृ॥ ४४॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासदक्षिणद्वारलिंगकथनं नाम
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

कैलासपश्चिमद्वारलिंगकथनं नाम द्विचत्वारिंशोऽध्यायः.

ईश्वरः—

कैलासदक्षिणापारगृङ्गौघे ते शिवालयाः। अनन्तान्यपि लिङ्गानि तेषूत्कृष्टा मयोदिताः
पाश्चात्यापारगृङ्गेषु शृणु लिङ्गकुलं शिवे। प्रसिद्धान्यपि लिंगानि ममेष्टानि शृणु प्रिये॥
तत्पूरुषेशस्स्थाण्वीशः पैंगेशो रुडजेश्वरः। साल्वेश्वरस्स्थानकेशो वैनतेशस्सलेश्वरः॥
मुसलेशो हाटकेशो रुद्रधन्वीश्वरस्तथा। ज्वरापहारकेशश्च तथा क्षयहरेश्वरः॥ ४॥
प्राणेशश्च विदर्भेशो देवेशस्त्वचलेश्वरः। अनंगेशश्शाम्बरेश उग्रेशो धान्यकेश्वरः॥ ५॥
बलाशनीश्वरश्चैव घनघोषेश्वरस्तथा। वेदगर्भेश्वरश्चैव ओङ्कारेशश्शिखीश्वरः॥ ६॥
गदाधरेश्वरश्चैव विल्वमूलेश्वरस्तथा। सूत्रेश्वरो भारतीशस्तुंगभद्रेश्वरस्तथा॥ ७॥
सनातनेशो वैघ्रेशः कुलिङ्गेशः प्रजेश्वरः। माण्डव्येशस्ताम्बकेशो बोधेशो विघसेश्वरः॥
प्रघसेशोऽथ ऋभ्वीशो गणगीतेश्वरस्तथा। शुक्रेश्वरः प्रसिद्धेशस्सिद्धेशश्च शनीश्वरः॥
पक्षीशः पत्रिकेशश्च कुलीशोऽथवनीश्वरः। पर्वेश्वरः पर्वतेशस्सर्वेशः कान्तिकेश्वरः॥
बर्हिध्वजेश्वरश्चैव कपोतेशः खणीश्वरः। शतेश्वरो रोमकेशः काव्येशो वर्पकेश्वरः॥
सोमनन्दीश्वरश्चैव त्रिफलीशः खरेश्वरः। हंनेहतीश्वरश्चैव शतचेंशो भवेश्वरः॥ १२॥
विदूरथेश्वरश्चैव करम्भीशस्सुवेश्वरः। गणेश्वरो वर्धिकेशस्सद्धीशः क्रिककेश्वरः॥
चित्रव्याधेश्वरश्चैव रौप्येशो वन्धकेश्वरः। तथा पशुपतीशश्च भयहारीश्वरस्तथा॥ १४॥
जन्महारीश्वरश्चैव दुःखहारीश्वरस्तथा। ब्रह्मयोनीश्वरश्चैव विष्णुगर्भेश्वरस्तथा॥ १५॥
रुद्रलोमेश्वरश्चैव चेन्द्रधामेश्वरस्तथा। चन्द्रचूडेश्वरश्चैव अग्निगर्भेश्वरस्तथा॥ १६॥
वायवीशो जलेशश्च मेघेशो वैद्युदेश्वरः। अमोदेशस्तित्तिरीशो द्यावाभूमीश्वरस्तथा॥
गजाजिनधरेशश्च नरसिंहेश्वरस्तथा। औपासनेश्वरश्चैव हव्येशो गणकेश्वरः॥

---

१. हनंहतीश्वर इति पाठः।

कर्णिकेशोदर्धीचेशो झङ्केशः कर्कटीश्वरः । जावालेशस्सुवालेशः पुरहारेश्वरस्तथा ॥
ऋग्वेदेशोऽथर्वकेशः पुराणेशोर्वशीश्वरौ । इतिहासेश्वरश्चैव धर्मसारेश्वरस्तथा ॥ २०॥
साङ्ख्येश्वरश्चयोगेशोमौलीशःपालिकेश्वरः। कुजम्भेशश्च जम्भेशोराजराजेश्वरस्तथा॥
कौथुमीशोविशाखेशस्स्कन्नेशःफलिकेश्वरः। कदलीशःपृष्ठकीशःपृथ्वीशःकार्मुकेश्वरः॥
अन्तरिक्षेश्वरश्चैव मैत्रेशः कुमुदेश्वरः। उदात्तसेश्वरश्चैव मल्लेशो ब्रह्मकेश्वरः ॥ २३ ॥
तरङ्गेशः कुरङ्गेशो मकरन्देश्वरस्तथा । सुधाधरेश्वरश्चैव धृतकेशेश्वरस्तथा ॥ २४ ॥
व्यालेश्वरो वितर्केशः काननेशो मुनीश्वरः। भद्रमालेश्वरश्चैव केतुमालेश्वरस्तथा॥ २५॥
मन्दरेशो विन्ध्यकेशो हिमेशो नीलकेश्वरः । महेन्द्रेशः कर्मकेशो ऋत्वीशो धूननेश्वरः
वीतहव्येश्वरश्चैवाप्यश्वत्थामेश्वरस्तथा । शिशिरेशस्तीर्थकेशो हिमेशो नीलकेश्वरः॥
महेन्द्रेशः कर्मकेशस्त्रिनवेशोऽब्जकेश्वरः । अपस्मारहरेशश्च सोमचण्डीश्वरस्तथा॥ २८॥
तथा मार्गसहायेशो देवीशोऽरुणजेश्वरः । ज्वलनेशः पावकेशस्तथैवाङ्गिरसेश्वरः ॥
दक्षेश्वरो विदक्षेशो मैनाकेशस्सतीश्वरः । प्रमथेशः प्रमाथीशो भोजेशो विक्रमेश्वरः॥
ईड्येश्वरश्च याज्येशः कर्णवेधेश्वरस्तथा । तर्णकेशः पाण्डरेशो मेघवाहेश्वरस्तथा ॥
कनिष्ठेशश्च ज्येष्ठेशस्ताम्रेशश्शौनकेश्वरः । अनाहतेश्वरश्चैव पीतेशो धूम्रकेश्वरः॥ ३२॥
वन्धमोचनकेशश्च तथा देवि शतेश्वरः। भ्रमरेशः काण्ठकेशो द्रुमचण्डीश्वस्तथा॥३३॥
विशालाक्षेश्वरश्चैव वसन्तेशः खगेश्वरः । गजासुरहरेशश्च नीलकण्ठेश्वरस्तथा॥ ३४ ॥
सुमित्रावरुणेशश्च कलहंसेश्वरस्तथा । सावित्रीशो गोमतीशो गोनर्देशो वृषेश्वरः ॥
गतिप्रदेश्वरश्चैव व्यासेशो गोलकेश्वरः। महाभूतेश्वरश्चैव रसेशो गन्धकेश्वरः ॥ ३६॥
वाडवेशो भटेशश्च सर्वप्राणातिगेश्वरः । तटातकेश्वरश्चैव गर्भकोशेश्वरस्तथा ॥ ३७ ॥
तोरणेशो रथीशश्चाप्यातपेशश्शर्शीश्वरः । दुन्दुभीशस्सिन्धुरेशो जवनेशः कूपेश्वरः ॥
वरभद्रेश्वरश्चैव कर्णदारेश्वरस्तथा । ताम्रध्वजेश्वरश्चैव कोविदारेश्वरस्तथा ॥ ३९ ॥
शैतद्रुतीश्वरश्चैव महारोगहरेश्वरः । कामदानेश्वरश्चैव विल्वादेशो निर्मारवरः ॥ ४० ॥
रुद्रेशो नागकेशश्च तारणेशोऽम्बिकेश्वरः ॥ ४१ ॥

१. तिमीश्वर इति पाठः । २. कृषीश्वर इति पाठान्तरम् ।

ईश्वरः—

शरच्छशिगलत्सुधारससमानलिङ्गावलि-
हरिन्मणिनिभच्छविप्रथितविल्वमौलीन्दुकम् ।
फणीन्द्रफणिमण्डलाकलितफालपुण्ड्राङ्कितं
मणीन्द्रवरधामगं वसितगन्धवन्धाम्वरम् ॥ ४२ ॥
पश्चाद्भागनगे ममैव विहितां लिङ्गावलीन्दु प्रभाम् ॥
प्रपश्य गिरिकन्यके नयनयुग्मधन्योत्तरां
महाघकुलदारिणीं सकलशोकसंहारिणीम् ।
रवीन्दुकरपेपिणीं मम गणेन्द्रसन्तोपिणीं
फणीन्द्रवरभूपणीं मदनदेहसंप्लोपणीम् ॥ ४३ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासपश्चिमद्वारलिंगकथनन्नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## कैलासोत्तरद्वारलिंगसौधकथनन्नाम त्रिचत्वारिंशोऽध्यायः.

ईश्वरः—

एवं पश्चिमभागस्थलिङ्गसङ्ख्या मयोदिता । तदुत्तरापारगृङ्गे शृणुतत्कथयाम्यहम् ॥
तदपि शृणु भक्त्या त्वं सुमनस्का सदाम्बिके। लिङ्गसङ्घं सुपुण्यानां मुकुटं पश्य पार्वति
वामदेवेश्वरो देवि गिरिकेशस्सुकेश्वरः । बृहस्पतीश्वरश्चैव वर्धनेशः पिकेश्वरः ॥ ३ ॥
कोकिलेशः पिचण्डेशो वामकर्णेश्वरस्तथा । आनन्देशः कर्मरेशश्चामरेशः पतीश्वरः ॥
वैराग्येशः कल्पकेशो हरिब्रह्मेश्वरस्तथा । गणेशस्त्रिगुणेशश्च ब्रह्माण्डेशश्शठेश्वरः ॥
विलासेशस्सुकेशेशश्चामकेशः प्लवेश्वरः । अन्नकोशेश्वरश्चैव प्राणकोशेश्वरस्तथा ॥
विज्ञानेशोऽघनाशेशश्चात्मेशोरक्षकेश्वरः । आहनन्येश्वरश्चैव मुग्धेशः कोटिकेश्वरः ॥ शर
निसर्पीशो नामनेशश्चामेशः कमठेश्वरः । शनाशनेश्वरश्चैव चोरुगायेश्वरस्तथा ॥ ८ ॥
कपिञ्जलेश्वरश्चैव कर्केशष्पण्डकेश्वरः । असंगेशश्च संगेशो ज्योतीशः कारणेश्वरः ॥
हरिरुद्रेश्वरश्चैव कृपाणेशो निमीश्वरः । कनकावर्तकेशश्च हरीशो भारुणेश्वरः ॥ १०॥

आम्रेश्वरो दभ्रकेशो दन्दशूकेश्वरस्तथा। उदारेशेन्दुमौलीशौ मखेशश्च सभेश्वरः॥
हरिकेशः किशोरेशः कुद्दालेशोऽर्भकेश्वरः। युवेश्वरश्च वृद्धेशो दर्दुरेशो व्रसीश्वरः॥
मतीश्वरो वनस्थेशो ग्रहस्थेशोऽरिजेश्वरः। सहस्रेशश्शतेशश्च लक्षेशः कोटिकेश्वरः॥
चाषेश्वरो भानुकेशो दन्दिरावर्तिकेश्वरः। कस्तूरीशो मदन्तीशो मनस्वीशोऽर्बुदेश्वरः
ऐरावतेश्वरश्चैव तञ्जेशो लिन्दुकेश्वरः। अहङ्कारेश्वरश्चैव फालनेत्रेश्वरस्तथा॥ १५॥
तथैवैलविलेशश्च कृकेशश्चरकेश्वरः। पद्मासनेश्वरश्चैव वारेशस्तरगेश्वरः॥ १६॥
वटमूलेश्वरश्चैव त्रसन्नेशो लुतीश्वरः। नकुलेशोऽथ वंशेशः पद्मनेत्रेश्वरस्तथा॥ १७॥
उपशान्तेश्वरश्चैव दमेशो व्रतकेश्वरः। उलूकेशोऽथ रुण्डेशः कालेशः कमलेश्वरः॥
भगन्धरेश्वरश्चैव भद्रेशो भरणीश्वरः। अश्विनीशो रोहिणीशः पङ्कजेशोऽवटेश्वरः॥
निधनेशस्तथोर्ध्वेशो भस्मेशश्च समेश्वरः। भवेशश्चैव सर्वेशो वेदेशश्शाश्वतेश्वरः॥२०॥
ज्वालेश्वरस्सालकेशस्तमालेशः पुण्यकेश्वरः। उपध्येशोऽणिमाण्डेशस्सर्वरक्तेश्वरस्तथा
शुनः पर्णेश्वरश्चैव मादनेशः प्रथेश्वरः। शिपिविष्टेश्वरश्चैव अंशेशोऽथ मृगेश्वरः॥ २२॥
गजाननेश्वरश्चैव बाणेशो वीरकेश्वरः। चण्डेश्वरश्च मुण्डेशश्चक्रेशः फणिकेश्वरः॥२३॥
अनसूयेश्वरश्चैव गन्धमादेश ईश्वरः। भण्डेश्वरः प्रजङ्घेशः कालकण्ठेश्वरस्तथा॥२४॥
मृत्युञ्जयेशश्शैलेशस्सारसेशोऽगतीश्वरः। स्वप्नेशो जाग्रतीशश्च सुषुप्तीशोऽहनीश्वरः॥
शितिकण्ठेश्वरश्चैव सूर्येशः कान्तिकेश्वरः। स्फटिकेशश्च रुद्रेशो वरदेशोऽनृणीश्वरः॥
शार्दूलेशो रभस्येशः पुण्ड्रेशो नटनेश्वरः। रुद्राक्षेशः कवीन्द्रेशः कवचेशो मणीश्वरः॥
पिलिप्पिलेश्वरश्चैव आमर्देशो द्रुणेश्वरः। पितामहेश्वरश्चैव कुटिलेशो झषेश्वरः॥ २८॥
भरतेशः केसरीशश्चक्षुश्श्रोत्रेश्वरस्तथा। दण्डकेशश्च लङ्केशो मणिभद्रेश्वरस्तथा॥ २९॥
घटोत्कचेश्वरश्चैव पुरेशोऽथ नटेश्वरः। करमर्देश्वरश्चैव तथैवाम्रातकेश्वरः॥ ३०॥
फणिभूषेश्वरश्चैव रत्नभूतेश्वरस्तथा। विडालकेश्वरश्चैव अणीशो महतीश्वरः॥ ३१॥
पूरुषेशोपरम्भेशौ गिरीशो रमणीश्वरः। कवङ्गेशः करीन्द्रेशो माघेशो वाष्कलेश्वरः॥
महानादेश्वरश्चैव मण्टपेशो वलीश्वरः। जरितेशः कूर्मकेशश्चतुर्भद्रेश्वरस्तथा॥ ३३॥
पुष्परागेश्वरश्चैव गोमेदेशो लवेश्वरः। तृतीश्वरः क्षपेशश्च प्रसादेशः कुलेश्वरः॥

१. अभ्रेश्वर इति पाठान्तरम्। २. क्रकेशोऽञ्चरकेश्वर इति पाठान्तरम्। ३. रजतेशः इति पाठान्तरम्।

वज्रेश्वरः क्षेत्रकेशः कर्णिकारेश्वरस्तथा । करवीरेश्वरश्चैव पुण्डरीकेश्वरस्तथा ॥ ३५ ॥
वीणापाणीश्वरश्चैव तन्त्रीशो नागकेश्वरः । हाहाहूहीश्वरश्चैव पयोदेशः क्रथेश्वरः ॥
गुडसारेश्वरश्चैव श्वेतदानप्रदेश्वरः । प्रदानेशश्शिलादेशः कन्देशः पददेश्वरः ॥ ३७ ॥
त्रिलोचनेशो भाङ्गेशस्स्थूलकर्णेश्वरस्तथा । प्रकटेशो धारकेशः कोशातीतेश्वरस्तथा ॥
यन्त्रेश्वरश्च मन्त्रेशस्तथा कनखलेश्वरः । गर्गरेशः प्रतापेश आतार्येशः कुणीश्वरः ॥
भगीरथेश्वरश्चैव दिलीपेशः कृतीश्वरः । अनादीशो मन्त्रविदेश्वरो गुणहरेश्वरः ॥ ४० ॥
शङ्गेश्वरः पिशङ्गेशः पार्येशस्तारणेश्वरः । ककारेशो मातृकेशः कुष्टहारीश्वरस्तथा ॥
हारीतेशस्तथाक्षेशो वकदाल्भ्येश्वरस्तथा । लोपामुद्रेश्वरश्चैव सुराभाण्डेश्वरस्तथा ॥
मणिहस्तीश्वरश्चैव तथा चित्रध्वजेश्वरः । रत्नध्वजेश्वरश्चैव कामेशो रुद्रणीश्वरः ॥ ४३ ॥
अवन्तीशः कर्पटीशोध्वजेशश्छत्रकेश्वरः । देवकन्येश्वरश्चैव नागकन्येश्वरस्तथा ॥
सत्येश्वरस्सुनाथेशः कुबेरेशो वनेश्वरः । पवित्रेशो वलक्षेशो महोक्षेशो नगेश्वरः ॥
सुधेशो विबुधेशश्च फुल्लशैलालिकेश्वरः । शयनेशो धावतेशस्समासीनेश्वरस्तथा ॥
सर्वकामसमृद्धीशस्सच्चिदेशस्सुखेश्वरः । प्रणतार्तिहरेशश्च पञ्चगव्येश्वरस्तथा ॥ ४७ ॥
पद्मनाभेश्वरश्चैव पञ्चवक्त्रेश्वरस्तथा । पञ्चाक्षरेशश्चन्द्रेशस्सुदेशः कौशिकेश्वरः ॥ ४८ ॥
आदर्शेशः कालकेशः कालावर्तेश्वरस्तथा । ताम्रध्वजेश्वरश्चैव तथा हंसध्वजेश्वरः ॥
वृषध्वजेश्वरश्चैव तथा सिंहध्वजेश्वरः । पिच्छेश्वरः कुमारेशो निषंगेशः कुलीश्वरः ॥
ईशानेशो विकर्तेशस्सुरभीशोऽग्रुकेश्वरः । सारंगेशः खड्गकेशो वन्धुरेशो गमेश्वरः ॥
शचीश्वरो साधुरेशस्तथा रुद्रगणेश्वरः ॥

ईश्वरः—

एतत्तेदिव्यलिंगानां नामानि कथितान्युमे । यइदं प्रातरुत्थाय पूजयेत पठेत्तवै ॥ ५२ ॥
सकैलासस्थलिंगानां पूजाफलमवाप्नुयात् । लिंगाध्यायमिमं पुण्यं पठन्रुद्रगणो भवेत् ॥
सहस्रं कथितं तेषु तेषूत्कृष्टतमं शिवे । अनन्तान्यपिलिंगानि कोटीशः कमलानने ॥ ५४ ॥
सारभूतानि लिंगानि कथितानि तवाम्बिके । सन्ति कैलासशिखरे मयातूक्तानि पार्वति ॥
किम्पुनर्बहुनोक्तेन सर्वलिंगमयोनगः ॥ ५६ ॥

१. कुम्भजन्मेश्वरस्तथा इति पाठान्तरम् । २. पञ्चगंगेश्वरस्तथा इति पाठान्तरम् ।

कैलासशैलमणिधामगदिव्यतुंगसोमोपलाकलितलिंगकुलं किलेदम् ।
तन्मौलिपालिविहितेन्दुकलाझरीभिराप्लावितोऽद्रितनये नगमौलिरेषः॥ ५७॥

तन्मौलिसंगशिवलिंगमणीन्द्रधामकुम्भैर्विभाति किल शैलकुलावतंसः ।
नानार्कसोमशतकोटिसहस्रकान्तः कान्त्याधिको नगवरः प्रविभाति देवि ॥

कुलाचलकुमारिके मधुहराक्षि पङ्केरुह-
प्रभायुतपदाम्बुजाश्रयणतोऽतिकान्त्या मम ।
विभाति सुमशेखरद्रुमवनोत्थगन्धानिलै-
र्ममांगकलिताक्षिजश्रवणपारणैश्शैलराट् ॥ ५९ ॥

कलधौतकलाविलासशैलोममौलिस्थकलाधरोरुभासा ।
धगधगितजटोरुजातहर्षो मम सौधोत्तमकुम्भशेखरैर्गिरीन्द्रः ॥ ६० ॥

श्रीलिंगधामविलसद्द्युमणिप्रभाभिः कुम्भैर्विचुम्बितमहाम्बरकोशकाशः ।
भ्राजत्पताकनिवहारुणवातपोतदोधूयिताखिलशिखो नगराड्विभाति ॥६१॥

उद्यद्बालदिवाकरेन्दुसदृशैः कैलासशृंगाग्रगै-
र्माणिक्यामलहीरकैश्च कलितैः कुम्भैश्शिवागारगैः ।
तत्तल्लोकनिवासिभिश्शिवगणैस्सञ्जातविस्मापकै-
र्नानासूर्यशशाङ्कसम्भवमहाकान्त्याधिकोऽयं नगः ॥ ६२ ॥

ताराराजविराजमानमुकुटालङ्कारलिंगार्चकैः
प्राप्येयं कलधौतशैलवसतिर्धूताघसङ्घैरपि ।
नप्राप्यैव यमानिलाशनतपोयोगादियोगैरपि
ब्रह्मेन्द्रादिमरुद्गणैरपि सदा प्राप्यान्धकारैर्मम ॥ ६३ ॥

भक्त्यालिंगितमानसैश्च सुकरं नान्यः पन्थास्तस्य हि
धन्यः कैलासशैलो नगकुलतिलको लिंगसङ्घैकमौलिः ।
सन्तोष्याम्बुजमित्रचित्रविशिखस्स्वर्भानुभक्षाक्षको
मत्तोपारयुगोत्थशुद्धतपसा लेभे वरं शङ्करात् ॥ ६४ ॥

तस्मिन्नेव निवास ईशितुरिति प्रेमास्पदत्वं पुरा
संयाचेऽखिलमुक्तये किल गिरीन्द्रेशऽशिवप्रीतिकृत् ॥ ६५ ॥

स्कन्दः—

इति शिववचनं निशम्य गौरी प्रणनामेन्दुकलाधरस्य पादौ ।
परितोऽभिसमीक्ष्य लिंगसङ्घं घनगात्रोत्पुलकैरुवाच देवी ॥ ६६ ॥

पार्वती—

शम्भो भीम भवान्धकासुरहर त्र्यक्षाक्षरोमापते
मन्नाथ प्रमथाधिनाथ दयया मे खण्डपर्शो वद ।
किं दानेन तव प्रसादजनकं तप्तं तपस्तेन हि
कैलासेन तवैव वासकरणं पुण्यैरगण्यैरपि ॥ ६७ ॥
किं वानेन तपःपरं सुविहितं चीर्णं चिराद्यत्प्रभो
लिंगाराधनमेव केवलमहो प्रेमास्पदं ते प्रभो ।
किं वाकारि नगेन्द्रधन्यतिलकेनाराधितस्त्वं कथं
लिंगापारशिवालयोऽयमधुना नान्यं नगेन्द्रात्परम् ॥ ६८ ॥
धन्योऽयं गिरिराजराजतिलको लिंगालिमौलिस्सदा
चैकं वा क्षणसंस्थितं त्वघकुलं लिंगं हरत्येव ते ।
यत्रापारमहेशसौधवरगं लिंगोत्तमानां कुलं
चैतत्संगतवागुपेतगतितो लोका विमुक्ताखिलाः ॥ ६९ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासोत्तरद्वारलिंगसौधकथनं नाम
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

कैलासतपश्चर्यानाम चतुश्चत्वारिंशोऽध्यायः.

ईश्वरः—

शृण्वपर्णे तपश्चर्याकारणं भूधरस्य च । मम कैलासवर्यस्य सर्वलिंगालयस्य च ॥ १ ॥
नगेन्द्रतिलकश्चायं नानानिर्झरकन्दरः । नानाशाखिशतोपेतो नानापक्षिविराजितः ॥
देवि पक्षिगणारावैस्स्तोष्यन्निव स मां स्थितः। नानामृगगणाकीर्णो नानाद्रुमलतायुतः॥

नानाशिखरिगोद्भासिशृंगमौलिरयं शिवे। पुरा मयैव मनसा कल्पितोऽयं महीधरः॥ ४॥
मत्सृष्टिमात्रादत्यन्तं मनसः प्रीतिमानभूत्। मत्प्रसादाय च पुनस्तपश्चक्रे युगद्वयम्॥
धराधरेन्द्रो देवेशि तच्छृणुष्वाखिलं मम। ज्वलदंगारसन्तापैस्सन्तप्ताखिलगात्रकः॥
ऊर्ध्वे रविकरैस्तप्तश्शतरुद्रजपादरः। सहस्रहायनं शैलः पर्णभुग्वायुभुक्ततः॥ ७॥
सहस्रं धूमभक्षश्च सहस्रं सलिलाशनः। निराहारस्सहस्रं स्याद्भस्मछन्नस्सदैव हि॥ ८॥
युगमेकमथोवास मम लिंगार्चने रतः। शैलेश्वराभिधं तत्र तल्लिंगम्बिल्वपल्लवैः॥ ९॥
त्रिकालमर्चयद्भक्त्या ध्यायन्मां स्वहृदा नगः। त्रिणेत्रं नीलकण्ठञ्च राजचन्द्रकलाधरम्
गंगातरंगविलसत्पद्ममालाविराजितम्। भस्मोद्धूलितसर्वांगं जटामुकुटमण्डितम्॥ ११॥
नागयज्ञोपवीतञ्च फणिभूषाविराजितम्। भस्मोद्धूलितसर्वांगं त्रिपुण्ड्रपरिशोभितम्॥
उमया सहितन्देवमंगरागोज्वलांगकम्। मन्दारकुन्ददामोद्यत्कन्धरालङ्कृतोरसम्॥
करिकृत्तिपटीभास्वत्कटीतटविराजितम्। फणिमौलिमहारत्नगणाञ्चितसुकुण्डलम्॥
हीरतारमहासारपद्मरागसुकङ्कणम्। आरक्तोरुमहापट्टराजत्पादाम्बुजद्वयम्॥ १५॥
महार्हवसनं देवं प्रसन्नास्यं सदाशिवम्। अष्टमीसोमसङ्काशनखराजिविराजितम्॥
उत्फुल्लपुण्डरीकाक्षवदनं स्मरसुन्दरम्। दाडिमीबीजसङ्काशरदनावलिभूषितम्॥
पक्वबिम्बफलोदाररदमच्छदशोभितम्। नीलेन्दीवरसङ्काशमानीलारक्तलोचनम्॥
प्रसादसुमुखं साक्षाज्जगतां साक्षिमीश्वरम्। हरिन्मणिनिभाकारां ममाङ्कस्थाञ्च त्वामपि
दध्यौनगेन्द्रतिलकःपुष्पधंमिल्लशोभिताम्।चांपेयकलिकोद्भासिदिव्यनासाविराजिताम्
उद्यत्कविनिभात्यच्छमुक्ताफलसुनासिकां। सीमन्तरेखासिन्दूरराजत्फालसुशोभिताम्
मणिध्वजमहाचापसन्निभभ्रूयुगोज्वलाम्। कस्तूरीतिलकोल्लासिफालभागमनोहराम्॥
उद्यदुत्फुल्लनीलाच्छदलरक्तदृशा युताम्। हीरसारकणात्यच्छदन्तपंक्तिविराजिताम्॥
दाडिमीपुष्पसङ्काशाधरधारारसां शिवाम्। ताम्बूलापूरितमुखीं प्रसन्नां सस्मितामुमाम्
तपनोडुपविभ्राजत्कर्णताटङ्कमण्डिताम्। कर्णपत्रमणिव्रातभास्वन्मण्डितगण्डकाम्॥
कपोलपालिकादर्शधगद्धगितदिक्तटाम्। चम्पकोद्दामकह्लारवकुलाशोकनागकैः॥२६॥
मरुद्दमनकोद्भासिमल्लीमुल्लीसरावृताम्। वेणुमण्डलरत्नाङ्कचन्द्रखण्डशिखण्डकाम्॥
ग्रैवेयलग्नमणिजसरावलिलसद्गलाम्। चिन्ताकल्लोलमुक्ताच्छराजत्पदकसन्ततिम्॥

नवरत्नमणिभ्राजद्वीरहारोरुवक्षजाम् । सुरत्नपुष्पगुच्छाच्छधारितायतवेणिकाम् ॥
पराकेतोत्थितापारपीतोद्यत्केतकैर्युताम् । केतकीगन्धसुभगशीतवातायिताङ्गकाम् ॥
त्रिभङ्गीसुभगाकारतलोदरविराजिताम् । तारास्वच्छमहावृत्तमुक्ताहारविराजिताम् ॥
स्फुरत्पदकरत्नाच्छकान्तिकाञ्चितदिक्तटाम् । रत्नहारमणीभास्वन्नवरत्नालिशोभिताम्
उन्मत्तकरटीकुम्भसुवर्णाभकुचोज्वलाम् । पाटीरसारकस्तूरीचन्द्रचन्दनचर्चिताम् ॥
पटवासागरुभवतैलगन्धैकभासुराम् । निचोलरत्नपर्यन्तमुक्ताजाललसत्कुचाम्॥ ३४॥
त्रिवलीललितोदारसुनाभ्युदरशोभिताम् । मृणालनालसुभगरत्नबाहुद्वयाञ्चिताम् ॥
नानादलचितानेकबाहुभूषणभूषिताम् । नागबन्धफणारत्नलोलितापारमौक्तिकाम् ॥
वङ्किकाफलिकाभ्राजद्रत्नपङ्कजशोभिताम् । मणिमाणिक्यखचितहस्तकङ्कणशोभिताम्
रत्नाङ्गुलीयविलसन्नखपंक्तिविराजिताम् । महाहीराच्छफलकाङ्गुष्ठवेष्टनवेष्टिताम् ॥
तदङ्गुष्ठशिरोत्तुङ्गचलनात्कान्तदिक्तटाम् । सुरत्नकाञ्चीखचितनवरत्नप्रभोत्कटाम् ॥
तदधस्ताल्ललत्क्षुद्रघण्टारणितसुन्दराम् । दाडिमीफुल्लकुसुमकान्तिरञ्जितचेलिकाम् ॥
रत्नपर्यन्तसाराच्छधाराप्लुष्टकुंचोत्तराम् । मणिमञ्जीरशिञ्जानलग्नपादाम्बुजद्वयाम् ॥
पदपाथोजकाङ्गुष्ठवेष्टनाग्रोत्थगुच्छकाम् । पादाङ्गुलीयभूषाभिरालक्ताङ्कितपद्वयाम् ॥
ब्रह्मेन्द्रविष्णुजननीं ममाङ्कघनविद्युतम् । एतादृशीं त्वां ध्यायन्त्स नगराट्स्थिरमानसः
उमासहायं मामेवं ध्यायन्नास्ते सदा मुदा । स्वहृदुत्फुल्लपाथोजविकासनरविं शिवम् ॥
बहून्वर्षगणान्देवि कैलासधरणीधरः । निदाघे पञ्चवह्निस्थो वर्षासु गगनाश्रयः॥४५॥
हेमन्ते जलशायी च कन्दमूलफलाशनः । पर्णाशनोयुगं साग्रं युगं कन्दाशनोऽभवत्॥
युगञ्च वायुभक्षस्स्याद्वाताशन इव स्थितः । मम लिङ्गार्चनपरो मौलिरुद्राक्षभूषणः ॥
पञ्चाक्षरजपासक्तः पञ्चास्यध्यानपूर्वकम् । रुद्राध्यायजपासक्तो रुद्रविन्यस्तमानसः ॥
एवं युगानां दशकं तप्यमानो नगेश्वरः । उग्रार्चनरतोऽप्युग्रं तपश्चक्रे निरर्गलम्॥४९॥
स त्वनुग्रमना देवि देवानां विस्मयावहम् । मुनीनाञ्च गणेन्द्राणां मामयं तोषयन् गिरिः
स पिधायेन्द्रियग्रामं नासाग्रन्यस्तलोचनः । यमादिनियमोपेतः प्राणायामहताशुभः ॥

१. रत्नचित इति पाठान्तरम् । २. कुचोत्तरामिति पाठान्तरम् ।
३. भूतिरुद्राक्षभूषण इति पाठान्तरम् ।

प्रणवप्रवणो नित्यं योगं युञ्जन्मदाश्रयः। अष्टाङ्गयोगनिरतश्चाष्टमूर्तेः पदाश्रयः॥५२॥
उटजैकनिकेतश्च कूटस्थो विकटोज्वलः। धूर्जटिप्रेमसदनं मानसं कृतवान्नगः॥ ५३॥
वल्मीकेनावृततनुर्गिरिरप्यतिकर्शितः। तपैकराशिर्वाराशिरिव मानसपङ्कजम्॥ ५४॥
हृदुत्फुल्लमहाम्भोजमध्यगं मामनुस्मरन्। ध्यानधारानविच्छिन्नं कदाचिन्नाकरोदयम्

शाखाग्रात्पतितैः प्रवातचलनादालूनवृन्तैः फलैः
पत्रैः केसरकर्णिकादिभिरुभे कुर्वन्त्स्ववृत्तिं नगः।
वर्षाणामयुतं चचार नियतं भूयस्तपोमेदुरं
कुर्वन्प्राणविदारणं वनगवां रोमन्थफेनाशनः॥ ५५॥
मद्भक्तस्तु सरित्पतिं चुलुकवत्खद्योतवद्भास्करं
मेरुं पश्यति लोष्टवच्छिवरतः कल्पद्रुमं काष्ठवत्।
चिन्तारत्नशिलामणिं शकलवद्भूमेः पतिं भृत्यव-
त्संसारं तृणराशिवत्किमपरं देहं निजं भारवत्॥ ५६॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासतपश्चर्यानाम
चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

---

कैलासवरप्रदानं नाम पञ्चचत्वारिंशोऽध्यायः.

ईश्वरः—

तस्य तं भावमालोक्य त्वयाहं प्रेरितस्तदा। कालेन बहुना देवि तस्याहं निकटङ्गतः॥
शारदाभ्रघनाकारवृषभोपरि कल्पिते। रत्नसिंहासने भास्वत्प्रभामण्डलमण्डिते॥ २॥
रत्नपल्याणविलसन्मुक्तानासाविराजिते। सुशृङ्गमुकुटोद्भासिकर्णालम्बितचामरे॥
उद्यद्द्युमणिसङ्काशं नेत्रकान्तिविराजितम्। मणिघण्टाचणत्काररञ्जितग्रीवया युते॥
धवले शर्वरीनाथकान्तिधर्षितकेतुके। त्वयाहं वृषभे देवि संस्थितः कामगे शिवे॥ ५॥
तस्यैव निकटं प्राप्तो गणवृन्दनिषेवितः। नन्दिप्रोत्सारितसुरो मुनिवृन्दसुसंस्तुतः॥
तुहुण्डधृतरत्नाच्छछत्रावृतमहोज्वलः। सोमनन्दितुहुण्डुभ्यां मणिदण्डैश्च चामरैः॥ ७॥

---

१. मुनिगन्धर्व इति पाठः।

वीजितो व्यजनोद्यद्भाभाण्डकेनाथ चण्डिना। शोभितस्सेवितो वातैस्सुगन्धतरशीतकैः॥
पताकाप्रोज्ज्वलाकारबाहुभिर्मे गणेश्वरः। बाणबाणासनधरोत्राणोबाहुसहस्रकैः ॥ ९ ॥
शोभितः परितो देवि कलापधरमुण्डिना। भृङ्गिताण्डवसन्नाहदर्शनानन्दितान्तरः॥
तण्डुडिण्डिमनादेन डम्बराम्बरदिङ्मुखः। सानन्दशङ्खधवलरवास्फोटितदिक्तटः॥
चण्डीशमद्दलोद्दामध्वनिध्वनितव्योमभूः। हेरम्बबृंहितापारघनघोषोरुसुन्दरः॥ १२॥
षड्वक्त्रकाहलापारनादापूरितदिङ्मुखः। रत्नपादुकमौलिस्थभैरवेणानुमोदितः॥ १३ ॥
उक्षाधस्तलसञ्चारिभद्रमौलिकपादभूः। नारदोदारमधुरवीणाक्वणनसुन्दरः॥ १४ ॥
देववन्दिरवापारनमस्तां स्तुतिसुन्दरः। मणिभद्रमहाहेतिपाटितैःपटहैर्युतः ॥ १५ ॥
लेखोत्तमसुखैस्तत्र सेवितोऽहं त्वयाम्बिके। झल्लरीवरकोद्दामरवानन्देन केशिना॥
सुकेशमुखवायूत्थशृङ्गध्वनियुता दिशः। आनकोद्दामजारावसुभद्रेण प्रकल्पितः॥१७॥
विष्णुब्रह्मामरेन्द्रैश्च सुकृतिस्तुतिसंस्तुतः। तमद्राक्षमहं देवि धमनीकृशविग्रहम्॥ १८॥
मल्लोकोऽयं गिरिवरं कैलासं मुनिवत्स्थितम्। स्वतोऽपिधवलश्चोमेभस्मनाचापिपाण्डरम्
छायाच्छन्नमहं मौलिमपिसूर्यांशुतापितम्। नीरजावलिसञ्छन्नसरःपूरितमप्युमे॥
नीरसैः पाण्डुपत्रैश्च कृताहारं नगोत्तमम्। दृष्ट्वा मे करुणा जाता वरेण छन्दितोऽपि सः॥
कमलामलसम्फुल्लकरेणास्पर्शि सो मया। मत्करस्पर्शमात्रेण तदोत्तस्थौ नगेन्द्रराट्॥
दृष्ट्वा मां प्रणतः प्रह्वः कृताञ्जलिरिदं जगौ। नयनस्राविसलिलैर्नृत्तताल्करारवः॥
सुन्दराङ्गोत्थपुलकैर्गद्गदप्रवणं वदन्॥ २४ ॥

कैलासः—

भव शिव भगवन् पिनाकपाणे सुरवरकिन्नरमौलिशोभिताङ्घ्रे।
निरवधिकरुणापयोधिराजच्छशिधामन् प्रणतोऽस्मि ते पदाब्जम्॥ २५ ॥
गुणगणनन्दितनामरूपहीन त्रिगुणातीत जराविहीन शम्भो।
हरिरुद्राब्जजसार्वभौम भूमन् स्तुतवेदोत्थितदेवजालमौले॥ २६ ॥
शशिसूर्यानलशोभिताक्षिफाल स्फुरदुरुसोमकलाधर प्रसीद।

१. महाहस्तपटहाहतिपाटितैरिति पाठः।

२. स्पर्शितो मया इति पाठः।

स्फुरदुरुगाङ्गसत्कपर्द शम्भो मयि दृष्टिं वितराशु सम्प्रसादाम् ॥ २७ ॥
मुनिजनकुवलोत्थचन्द्रमौले दुरितापह पारतार धीर ।
दृशि शशिविहितेन चक्षुषा मां परिपाहीश दयाकटाक्षसारैः ॥ २८ ॥
सुरगणनुत वेदवेद्य शम्भो उरगेन्द्रामलहार नीलकण्ठ ।
अव शिव दयया ममैव मौलौ वसतिस्तेऽस्तु गणेन्द्रता ममाद्य ॥ २९ ॥

इत्थं गिरीन्द्रवचनात्प्रसन्नोऽस्मि महेश्वरि । तस्मै दत्तं मया देवि गाणापत्यमनुत्तमम् ॥
गिरीन्द्रसार्वभौमत्वे गिरीन्द्रस्त्वभिषेचितः । हिमवान्निषधो विन्ध्यो मन्दरो मेरुरेव च
नीलो महेन्द्रो ऋषभस्त्रिकूटश्चित्रकूटकः । कङ्कतो रैवतो देवि पारियात्रोऽथ केसरी ॥
ऐरावतोऽथ भद्रश्च मैनाको गन्धमादनः । इरावान्हस्तिशैलश्च मलयो दर्दरस्तथा ॥
सह्यो गोवर्धनश्चैव उदयास्तमयस्तथा । एते प्राधान्यतस्तत्र शैलेन्द्रास्स्मृतिमात्रतः ॥
ममाग्रतस्ते सम्प्राप्ता मान्नत्वा तुष्टुवुर्नगाः ॥ ३५ ॥

नगाः—

भगवन्भव भूतनाथ शम्भो उरगेन्द्रामलहार पार्वतीश ।
परिपश्यामलचक्षुषा प्रसादैस्त्वं पादाब्जरजोत्थमौलयो नः ॥ ३६ ॥
तव सन्निधिरेव शोकहारी स्मृतिमात्रेण तवागता वयम् ।
वद किङ्करवाम देवदेव तव दृष्ट्या [2]विवशेषु देहि चाज्ञाम् ॥ ३७ ॥

इति शैलवचश्श्रुत्वा तानवोचमहं प्रिये । प्राञ्जलीन्प्रणतान्प्रह्वानभिनन्द्याहमेव हि ॥

ईश्वरः—

कैलासो मम वासभूस्सुविहितो दत्ता गणाधीशता
शैलेन्द्रत्वमपि प्रसादविहिता दिष्ट्या मया तोषितः ।
तेनापारतपःप्रचारकृतितस्तुष्टोऽस्मि कष्टापहो
यूयं शैलवरं ममैव वसतिं सम्पूज्य नत्वा मुदा ॥ ३९ ॥

---

१. जटधारितगांग इति पाठः ।

२. विततां विधेहि चाज्ञामिति पाठः ।

यात स्थानमहोऽभिषिच्य सुघटैस्सौवर्णनीरैरपि

चेत्युक्त्वा गिरयस्तदा पुरहरं नत्वा समानिन्यिरे ।

सिह्मस्यासनमुत्तमं शशिनिभं छत्रञ्च सचामरे

चेन्द्रोपेन्द्रमरुद्गणैस्सह तदा कैलासशैलेश्वरम् ॥ ४० ॥

शैलेशं त्वभिषिच्य शङ्करगिरा देवा नगाः प्रोचिरे

धन्योऽस्यत्र सुरामरेन्द्रगिरिराड्विश्वेशभक्तो ह्यसि ।

त्वन्मौलौ निवसञ्छुभानि वितरत्वेषेश्वरः केवलं

तन्मौलिस्थितचन्द्ररश्मिनिकरैस्संशोधितस्त्वं सदा ॥ ४१ ॥

नानानिर्झरसन्मृगायुतयुतो वर्धस्व नश्श्रेयसे ॥ ४२ ॥

इति गिरिवचनाच्छिवैकतानो ववृधेऽत्यन्तशिखासमूहमेघपालिः ।

कलधौतरसैर्विवर्धिकेव प्रसभं वाक्यमिदं जगाद हर्षात् ॥ ४३ ॥

कैलासः:—

प्रालेयाचलकन्यकापरिलसद्वामार्धभागं सदा

ज्वालाजालयुतानलाक्षितिलकम्फाले त्रिपुण्ड्रोज्वलम् ।

लीलावीक्षितदग्धकामवपुषं कल्पद्रुमूले स्थितं

लीलाचालितलोकजालमनिशं कालान्तकं भावये ॥ ४४ ॥

त्रिशूलविलसत्करं तदपरेण वालादरं

कुरङ्गविलसत्करं कुमुदिनीशभूषामणिम् ।

नीलोद्दामतमालसन्निभगलं गङ्गाजलाप्लावितं

स्फारोत्कूटजटाकुटीरविलसत्सोमार्धचूडं सदा ॥ ४५ ॥

वन्देसुन्दरताण्डवादिचतुरं कैलासमौलिस्थितम् ॥ ४६ ॥

इलामिलन्मौलिरुवाच शम्भुं नमो नमस्ते गिरिशेति शैलः ।

स्वमौलिगापारमहोरुलिङ्गपालीषु च प्रीतियुतश्च भूयाः ॥ ४७ ॥

---

१. समानिन्युः कुम्भोत्तरैरित्यधिकः पाठः क्वचित्।

२. अपीन्दु मौलिं प्राहस्वमौळौ निवसेति शैलः इति पाठः ।

वेदोऽपि स्वयमाद्यमाह भगवन्रुद्रैर्नमोन्तैः पदै-
स्त्वत्सर्वात्मकतां गदत्यथ तरां भक्त्या परं त्वां सदा ।
त्वत्सान्निध्यबलेन मामपि विभो स्तोष्यन्नमस्यन्पुन-
र्मन्त्रैर्यत्न निषीदसीति च पुनर्धन्यो मदन्यो हि कः ॥ ४८ ॥

इत्थं कैलासशैलस्य श्रुत्वा वचनमम्बिके । तमब्रुवं महाशैलं कैलासं वरभूधरम्॥ ४९॥

शिवः—

कैलासशैल वरसानुगतोर्ध्वसौधलिङ्गावलीषु सततन्निवसामि कामम् ।
पापं हरामि सुतरां जनतादिलोकदुःखं च मुक्तिमथ भुक्तिमथो दिशामि ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवरप्रदानं नाम
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

कैलासचालने रावणकृतस्तुतिर्नाम षट्चत्वारिंशोऽध्यायः.

ईश्वरः—

मत्तो लब्धवरो देवि कैलासो धरणीधरः । किञ्चित्स्मययुतश्चासीत्प्रियोऽहं पार्वतीपतेः
नमत्समस्तशिखरिषु सर्वलिङ्गाश्रयस्सदा । मयि देवस्सदाध्यास्ते मणिप्रासादमौलिगः॥
रुक्मेरुःपारियात्रश्चमैनाको मन्दरोऽपिवा । विन्ध्योवानिषधोगौरि हिमवान्वानगाधिपः
नीलोऽस्त उदयो वापि भद्रो वा शतशृङ्गकः । रैवतोवामनश्श्रीकः कुमुदोगन्धमादनः
महेन्द्रो मलयस्सह्यो दर्दुरश्चित्रकूटकः । के वा कुलाचलास्सर्वे शम्भोः प्रियतरा इति ॥
अहमेव प्रियश्शम्भोस्सर्वदा वास एव हि । गर्वपर्वतसङ्क्रान्तस्सकैलासः पुराम्बिके ॥
शैलसारस्वहृदयकाठिन्येन नगोत्तमः । तस्यतद्भावमालोक्य देवानामपि शैलजे॥ ७॥
दक्षमन्यौ ममैवाद्यमन्युना देवतागणाः । विष्णुरुद्रादयस्सर्वे शिक्षिता भद्रकेण हि ॥
निर्दग्धान्निन्दनाद्देवि सदक्षान्ब्रह्मपूर्वकान् । पुनः पुनस्तान्दुःखौघैर्दैत्यैर्देवि युगे युगे॥
पातयामिसुरान्युद्धेभवाब्धौभक्तिवर्जितान् । दुःखाम्बुधौमहादेविममभक्तिविवर्जिताः॥
पतन्ति सर्वदा सर्वे मम भक्तिविवर्जिताः । स्वर्गेषु नरकेष्वेव तानशैवान्त्सदाशिवे ॥

---

१. जन्ममृत्यु जरासुच इति पाठान्तरम् ।

मयि भस्मनि रुद्राक्षे शैवे वा ये च दूषकाः । शिवलिङ्गे शिवक्षेत्रे त्रिपुण्ड्रे वेदवर्त्मनि॥
मद्भक्तं दूषयेद्यस्तु यो वा को वा सुरोऽपि वा । भूपतिर्वा यतिर्वापि तन्दुःखे पातयाम्यहम्
वेदान्ते वा गुरौ मोहादविमुक्ते महेश्वरि । पञ्चाक्षरे मुक्तिदे तु रुद्राध्यायेऽपि वा मम॥
शतशाखाश्रुतं मन्त्रं पापस्तोमनिवारकम्। सर्वश्रुतिस्तुतिन्देवि श्रीमहादेवपूजने॥२५॥
एक एव महारुद्रः पूज्य इत्याह हि श्रुतिः । रुद्रं विश्वाधिकं मान्तु योऽन्यतुल्यतया वदेत्
सर्वमन्यत्परित्यज्य ध्येयोऽहं पार्वतीपतिः । नमत्समश्चाभ्यधिको दृश्यते श्रूयतेऽपि वा॥
अणुरस्त्वणीयसामस्मि महताश्च महत्तरः । इन्द्रमित्रादिवाक्यैश्चाप्यहमेकोऽखिलान्तरः
मामेववेदावेदान्ता वदन्तिश्रुतयोऽखिलाः। तुरीयोऽहं शिवाद्वैतस्सत्यंज्ञानंप्रियस्त्वहम्॥
मां नयत्यन्यथा वाक्यैर्वेदोक्तैर्मोहिता जनाः । तान्पातयामि नरके दुर्बुद्धीन्पापयोनिषु
ममैव हि परा शक्तिस्त्वं जगत्कारिणी शिवा । तवेक्षणाज्जगज्जालं सम्भवेत युगे युगे ॥
मम सर्वान्तरस्त्वं हि अविज्ञाय सुराधमाः । नरा वा भूसुरा वापि मम लिङ्गस्य पूजने ॥
मतिर्न तेषां पापानां कलौ देवि भविष्यति। तस्माद्दुःखाम्बुधौ मग्नाभविष्यन्ति सुरासुराः
मम भक्तिविहीना ये ब्राह्मणाश्चापि सङ्कराः । भवन्ति ते महापापास्तेषां दुःखं पदे पदे॥
अनर्चितमहेशानामशैवानां दुरात्मनाम् । भवन्ति विपदस्सद्यो नरकाश्चापि दारुणाः॥
अजप्तशतरुद्राणामशैवानां दुरात्मनाम् । भवन्ति विपदस्सद्यो नरकाश्चातिदारुणाः ॥
अजप्तपञ्चब्रह्माणामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ २७ ॥
अजप्तलिङ्गसूक्तानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ २८ ॥
अध्यातपञ्चपञ्चास्यध्यानहीनान्तरात्मनाम् । भवन्ति........दारुणाः ॥ २९ ॥
अजप्तपञ्चवर्णोत्थपञ्चाक्षरनिवर्तिनाम् । भवन्ति........दारुणाः ॥ ३० ॥
अनुद्धूलितदेहानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३१ ॥
त्रिपुण्ड्ररहिताङ्गानां फालकण्ठोरुबाहुषु । भवन्ति........दारुणाः ॥ ३२ ॥
अधृताक्षसराणाञ्च अशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३३ ॥
अदृष्टममलिङ्गानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३४ ॥
प्रदोषार्चनहीनानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३५ ॥
भूतार्चनविहीनानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३६ ॥

सोमवारविहीनानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३७ ॥
अष्टम्यर्चनहीनानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३८ ॥
मम क्षेत्रोज्झितानाञ्च अशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ३९ ॥
अन्यक्षेत्रस्थितानाञ्च अशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ४० ॥
मम नामविहीनानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ४१ ॥
ममनैवेद्यहीनानामशैवानां दुरात्मनाम् । भवन्ति........दारुणाः ॥ ४२ ॥
मम लिङ्गसमं देवि विष्ण्वादिपरिपूजनम् । ये कुर्वन्ति महापापास्तेषां दुःखमनर्गलम्
भवन्तिविपदस्सद्यो नरकाश्चातिदारुणाः। विल्वपत्रोज्झितानान्तु अशैवानांदुरात्मनाम्
भवन्ति विपदस्सद्यो नरकाश्चातिदारुणाः। मांपश्यन्ति समं देवि ये तु विष्ण्वादिभिस्सह
तेषां नदूरगा देवि चापदो निरया अपि । मद्भक्तमन्यभक्तैश्च समं पश्यन्ति ये जडाः॥
तेषां नदूरगा देवि चापदो निरया अपि । एवंधर्मोज्झितधियो नरा अपि सुराश्शिवे ॥
तएव रासभा जाता विद्वांसो वहुविश्रुताः । मृदोर्ध्वपुण्ड्रं ये कुर्युरशैवा जडबुद्धयः ॥
तएव नारकाः पापास्ते यमातिथयोऽम्बिके। भस्मत्रिपुण्ड्ररुद्राक्षे येषां लज्जा शिवार्चने॥
तएव रासभा देवि ते यमातिथयोऽम्बिके । सर्वश्रुतिश्रुतं नित्यं लिङ्गार्चनमुमे मम ॥
त्यक्त्वान्यदेवपूजायां [1]ये रता रासभाधराः। ग्रहस्था यतयो देवि ते यमातिथयोऽम्बिके
मृत्फाला दग्धचक्राङ्का ये विप्रा वेदवर्जिताः । आचारभासुराश्चापि असुरा भूसुराश्च ते
येऽन्यदेवसमं मत्वा मां तिष्ठन्ति क्षणं शिवे। ते सर्वेऽप्यन्त्यजा एव कर्मानर्हास्तएव हि॥
मल्लिङ्गश्चान्यलिङ्गैश्च पूजयन्ति च येऽधमाः। तएव लिङ्गदग्धाङ्गास्सूकरीयोनिसम्भवाः
तस्मान्मदर्चनं ध्यानं नत्याज्यं वैदिकैर्द्विजैः । तेषामेवात्मविज्ञानं ममलिङ्गार्चनेरताः॥
ये भस्मनिष्ठास्सततं रुद्राध्यायार्थवित्तमाः । तेषां........रताः ॥ ५६ ॥
ये तु पञ्चाक्षरासक्तास्सदारुद्राक्षधारिणः । तेषां........रताः ॥ ५७ ॥
ये तु मत्क्षेत्रनिरताश्श्रुत्युक्तेनैव वर्त्मना । तेषां........रताः ॥ ५८ ॥
तस्मान्मत्परमो भूयादहं तेषान्तुमोचकः । पापसंसारदुःखाब्धेस्तारकोऽहम्महेश्वरि॥
सुराणां गर्वनाशार्थं सृष्टो विश्रवसस्सुतः । विष्णुश्च भृगुशापेन मानुषेषु जनिष्यति ॥

१. रतारासभभूधराः इति पाठान्तरम् ।

तस्य भार्यापहरणान्मुनिसंपीडनादपि । कदाचिदागाद्धर्षेण कैलासं मम रावणः ॥
अखर्वगर्वसङ्क्रान्तः कैलासस्यापि गर्वहृत् । तोलयामास वाहुभ्यां कैलासं ममशैलजे ॥
कैलासश्चालितस्तेन नानालिङ्गसमाश्रयः । महामन्योर्मम तदा मन्युनासोऽधरीकृतः॥
तेन स्तुतोऽस्मिवेदैश्च वेदवेद्योऽहमीश्वरि । साम्ना सहस्रं शरदां तुष्टावाष्टाकृतिं हिमाम्
मदङ्गुष्ठाग्रनिर्मग्नधरणीधरमूलगैः । वाहुभिः पीडितो देवि दशास्यैर्मामरोरवीत् ॥
दयया मोचितंरक्षस्तदास्तोत्रेणमांस्तुवत्। स्तुत्वानत्वानिर्जगामदिशम्मेनावलोकयन्॥
कैलासोऽपि महादेवि त्यक्तगर्वो वभूव ह ॥ ६७ ॥

देवी—

कथं तेन महादेव संस्तुतोऽसि वदाद्य तम् । किं वा तेन तपस्तप्तं श्रोतुमिच्छास्ति मे प्रभो

ईश्वरः—

तत्स्तुतिं सावधानेन पार्वति शृणु ते वदे । रावणो रोरवीद्देवि मच्छैलवरमूलगः ॥
दीनस्वरोऽतिविकृतं साम्नाविलविलोचनः ॥ ७० ॥

रावणः—

ताराराजविराजमानमकुटं काकोदराकल्पकं
कर्पूराभशरीरकान्तिविलसन्माराङ्गभस्मादरम् ।
कैलासाचलतोलनेन कुपिताङ्गुष्ठाग्रसम्पीडितः ॥
शैलाघातस्ववाहुभग्नजरठद्वैराजसामश्रवा-
दुन्मुक्ताखिलरावणं पुरहरं देवं भजे शङ्करम् ॥ ७१ ॥
वैराजराजनगहिङ्कृतिकातितुष्टं राजच्छशाङ्कधवलं ललितोत्तमाङ्गम् ।
यक्षाधिराजकृतसख्यमुमासहायं देवं नमामि सुरराजकृतप्रणामम् ॥ ७२ ॥
इलाधरसुताप्रियं वरसुनन्दिवाहप्रियं
सुरेन्द्रवरसुप्रियं प्रभवकुन्दमालाप्रियम् ।
मुकुन्दनयनार्चितं भवहरं सुमेरुस्थितं
रमारमणसुन्दराक्षियुगपूजितं शङ्करम् ॥ ७३ ॥

१. साम्नाविलविलोचनः इति पाठः । २. हिंकृतिगानतुष्टमिति पाठः ।

गन्धवन्धमधुरालकलोलं रुद्रनेत्रसुचरित्रमपारम् ।
दयानिधानाखिलमित्रशक्ते कृपाम्बुधे कामद कामवैरिन् ॥ ७४ ॥
स्तौमि प्रकृष्टवचसा परमेश मित्र सामैर्भवन्तमगतः परिमोचयाशु ॥ ७५ ॥

पर्वानन्दितशर्वरीरमणवत्कान्तेन्दुधामानन
गात्रार्धाधिकृतस्वकान्तिवदने नेत्रे च मौलौ तथा ।
देवेशेन सदैव शोभितकलायुक्तेन बालाङ्कधृ-
क्तादृक्षं जगतां गुरुं त्रिजगतां पापापहं तम्भजे ॥ ७६ ॥

एवं तुष्टाव चाष्टाकृतिमखिलतनूद्भासिकोशैककाशं
मामीशं जगदार्तिनाशनमुमे चार्तस्तदा रावणः ।
कैलासाचलतो विमुक्तभुजधृङ्गत्वा ययौ धामकं
लङ्कामूलनिकेतनं मम सदा लिङ्गार्चकश्शङ्करि ॥ ७७ ॥

सुरशरगजजोरुसद्विषाणैः [1]परिधृतकिणतः किणाक्तवक्षाः ।
रणभुवि रावितदेवराजसङ्घः [2]पणितप्राणगणस्सरावणेशः ॥ ७८ ॥

नालीकासननन्दनोद्भवभवः पौलस्त्य एषोऽम्बिके
मामाराध्य गणेन्द्रतामगसुते प्राप्तो ह्यवध्यस्सुरैः ।
येनाकारि तपस्स्वकीयमनलेचोत्कृत्य मांसञ्जहौ ॥ ७९ ॥

मल्लिङ्गे विदधादयं स्वशिरसः पद्मालिमालां पुरा
भ्रातृभ्यां निजवीर्यनिर्जितमहासीमैकभूमायशः ॥ ८० ॥

वैरूपवैराजबृहद्रथन्तरैश्श्रीवामदेव्यैर्वररुद्रशाङ्करैः ।
श्रीरैवतेलाधरकैर्महेन्द्रैर्महाष्टदंष्ट्रावरवैश्वमित्रैः ॥ ८१ ॥
तुष्टाव सामैश्शशिमौलिमम्बिके ।
सरावणोरावितसर्वलोको रवैस्तदा सामसुगानतोषितम् ॥ ८२ ॥

---

१. परिध्वष्टःप्रणतः किणत्सुवक्षाः इति पाठः ।

२. पणितप्राणगणेशरावणोऽद्रिकन्ये इति पाठः ।

धीरोदारपयोजजापतिकृतापारारविन्दार्चना-
स्तुष्टं कष्टहरं प्रकृष्टवचसा स्रष्टॄ पुनस्संस्तुतम् ।
त्वष्ट्रा शातकराब्जगन्धसहनासक्तैरवी ॥ ८३ ॥
मित्रायेऽस्य शिवस्य नेत्रनिवहाः पान्त्वद्यदृष्ट्यादिमां
तेनैवामितगन्धपर्वतमहापापादपायाच्छिवः ॥ ८४ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासचालने रावणकृतस्तुतिर्नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## वेदरहस्यकथनं नाम सप्तचत्वारिंशोऽध्यायः·

देव्युवाच—

देवदेव महादेव करुणारसवारिधे । विश्व विश्वाधिकाशास्य प्रणतानन्ददायक॥ १ ॥
चन्द्रशेखर भूतेश प्रणतानन्ददायक । किञ्चिद्विज्ञप्तुमिच्छामि तन्मे कारुण्यतो वद॥
सुगोप्यमपि देवेश करुणापात्रतां मयि । ज्ञात्वा तद्वद देवेश रहस्यमपि शङ्कर ॥ ३ ॥

स्कन्दः—

तदा देव्या वचश्श्रुत्वा कैलासशिखरे स्थितः। मणिप्रासादमध्यस्थमहामञ्चासनस्थितः
सोमधामशतोद्भासिमुखेनेन्दुकलावता । त्रिलोकोद्यत्प्रभाकारसोमसूर्याग्निलोचनः ॥
सजलोद्दामघनवत्कण्ठमण्डलमण्डितः । फूत्कृतोरुफणिभ्राजन्मणिकुण्डलमण्डितः ॥
नवरत्नचितानेकमालाजालविराजितः । त्रिपुण्ड्रतिलकभ्राजत्सुललाटतटोज्वलः ॥
कुन्देन्दुहिमधावल्यनिन्दकोत्तमदेहकः । चन्दनागरुकस्तूरीपाटीरासारगन्धधृक् ॥
दिव्यमन्दारमालानां बृन्दसन्दोहबन्धुरैः । आमोदोद्दामगम्भीरवातैस्संसेवितश्शिवः
महार्हकाशिवास्तीर्णे रत्नपर्यङ्कमण्डले । वररत्नाम्बरचित उपधानसुशोभिते ॥ १० ॥
नानादर्शकुलोद्भासिमणिकुट्टिममण्डिते । दीपिते मणिदीपेन प्रभाविद्योदितान्तरे ॥

---

१. अयं पादोऽपूर्णतयावर्तते । २. त्रिणेत्रमदानन्दक इति पाठः ।
३. सुकुण्डलतटोज्वलः इति पाठः । ४. उपधानशतोत्तरे इति पाठः ।

तद्वातायनजालैश्च पश्यन्लोकविचेष्टितम् । निमीलनोन्मीलमिषाच्चन्द्रसूर्यानलेक्षणः ॥
स्वर्गौकसाञ्च देवानां दैत्यानां वैरयातनम्। तेषां भागाश्च विविधा नन्दनादिषु सुन्दराः
भूमण्डले नृपाणाञ्च परस्परजयैषिणाम् । युद्धश्चद्धासखानाञ्च धर्माचरणमुत्तमम् ॥
तपस्विनाञ्चाश्रमिणां तनुसंशोषणक्रियाम् । स्वर्गादिगमनञ्चैव तत्र भोगपरम्पराः ॥
भोगान्ते पतनञ्चैव पुनर्जन्मपरम्पराः । पापिनां पतनञ्चैव नरकांश्चातियातनाः ॥
गतागतञ्च लोकानां जन्मनाशस्थितीरपि । पश्यन्सर्वं स्वनयनैः कुर्वन्कालगतीस्तथा
उदयास्तमने चैव रात्र्यहानि क्रमेण तु । नाशवृद्धी च भूतानां सर्वेषां भूतनायकः ॥
देव्या प्रासादमध्यस्थो विहरत्येवमीश्वरः । कालकालो महादेवः कालावच्छेदवर्जितः
कालावच्छेदयुक्तानां ब्रह्मविष्णुहरात्मनाम्। इन्द्रादीनांमुनीनाञ्च ग्रहाणाञ्चऋषेस्तथा
सप्तर्षिणाञ्चसिद्धानां पितृणाञ्च सनातनः। भूतानाञ्चभविष्याणां साम्प्रतानाञ्च शङ्करः
करोतिसृष्टिंनाशञ्चस्थितिंकालस्यकल्पनां। मायाभिर्मोहितानाञ्चब्रह्मविष्णुहरात्मनाम्
शरीराणिप्रविश्यैवकरोतीदञ्चराचरम् । स एव सर्वभूतानां प्राणानादायोदेति च ॥
स एव सर्वभूतानां प्राणानादायास्तमेति च । स्वयन्नपानोपभोगैश्च तत्तद्देहेषु सर्वदा ॥
परां प्रीतिं वितनुते जडेष्वजड ईश्वरः। स एव जाग्रदाद्यासु ह्यवस्थास्वपि शङ्करः ॥
अवस्थारहितश्चायं सर्वेष्वन्तर्गतस्थितिः । स एव जाग्रद्भूतेषु स्वपित्येको महेश्वरः ॥
स एवानन्दमूर्तिर्हि तस्यानन्दैकलेशतः । प्रियात्मकं जगज्जालं कुरुते दुःखदायकम्॥
असत्यमेतच्चजडं स्वसत्यात्सत्यवत्स्थितः । करोति च जडं सर्वं चेतनानां सचेतनः ॥
असङ्गोऽपि सदा भाति जगत्स्वेतेषु शङ्करः। समवानपि विश्वेशश्शिवस्सर्वान्तरङ्गतः ॥
बुद्धेर्बोधयिता मन्ता मनसश्च गतागतिः । अप्राणः प्राणरूपेण ह्याकाशादपि चोत्तरः
ब्रह्म ब्रह्ममयो भाति शिव एव सनातनः । न तस्य करणं कार्यं न क्रिया परमार्थतः॥
शीर्णेषु देहजालेषु ह्यशीर्णस्सर्वदा स्थितः । विकारभूते जगति निर्विकारतया स्थितः॥
नं नश्यन्न च सीदानो शिव एव हि केवलः। गुहाहितो निरिच्छोहि सदा भेदविवर्जितः
कारणं कारणानाञ्च महान्हि तमसः परः। यस्माद्ब्रह्मेन्द्रविष्ण्वाद्या रुद्रास्सर्वे मरुद्गणाः

१. संगवानिव विश्वेशोऽसंगस्सर्वान्तरंगकः इति पाठः ।

२. नसन्दृशे रूपमस्य शिव एवेति पाठः ।

सम्प्रसूता महादेवान्न ततोऽस्त्यधिकः परः।यस्य निश्वसितं वेदा नानाशाखाविभूपिताः
यस्य ज्ञानेन सर्वेषां मुक्तयस्सर्वतो द्विजाः । स सन्तरति संसारमसारं भयदायकम् ॥
सरसोऽयं यद्रसेन जगद्रसमयं भवेत् । स एव ज्योतिषाञ्ज्योतिस्स चक्षुस्स तपो महत्॥
स भूमा केवलानन्दस्स बोधः केवलं शिवः। स एव स्थूलमनणू रुद्रो विश्वार्तिनाशकः॥
निरिन्द्रियश्चेन्द्रियाणां गतिश्शास्ता महेश्वरः । निराभासो निरासङ्गो विश्वभासप्रवर्तकः
सर्वं तस्मिन्महादेवे जगद्ब्रह्मणि लीयते । विभाति मायया साक्षात्तस्मिन् ज्ञाने मुनीश्वराः
सर्वं शिवतया भाति प्रसादेन महेशितुः । स पोडशात्मा पुरुषो नेह नानास्ति किञ्चन॥
विकारमेतत्सर्वं हि अविकारे विकारितम् । तस्यैव तपसा ध्यानात्तल्लिङ्गार्चनतोद्विज॥
सर्वं शोकं तरत्येव नात्रकार्या विचारणा। भिद्यन्ते ग्रन्थयस्सर्वा एकत्वेनानुपश्यतः ॥
तमात्मानं महादेवं विश्वाकारतया स्थितम् । वह्निर्वायुर्जलं क्ष्मा च वियते तन्महेश्वरः ॥
एतेषामानुलोम्येन प्रातिलोम्येन सृष्टयः । सञ्जाता अत्र लीनाश्च तस्मिन्नेव महेश्वरे ॥
तस्माद्भूतानि जातानि तत्र जीवन्ति तान्यपि । तस्मिन्नेवलयंयान्तिईशसंस्थंचराचरम्
ईशावास्यमिदं सर्वं तस्मिंत्सर्वं प्रवर्तते । एवं यो वेदवेदान्तैः प्रसादात्पारमेश्वरात्॥
गुरोश्च श्रद्धया चैव सर्वज्ञस्स च शांभवः । समुनिस्सशिवश्चापि स शिवज्ञानवित्तमः ॥

स्कान्दः

अपाणिपादोऽसि निरिन्द्रियोऽसि रूपस्पर्शश्शब्दगन्धो रसादिः ।
सर्वस्य वेत्ता त्वं त्वां न वेत्ति कश्चिद्दृष्टेर्द्रष्टारं त्वां न वेत्त्येव कश्चित्॥ ४९ ॥
वृद्धो बालः पूरुषस्त्वं युवासि स्त्रीत्वं क्लीबो न त्वमेवासि किञ्चित् ।
स्थाणुर्गच्छद्भूतभव्यं जगद्वै देहैर्युक्तो भासि तस्मान्नतोऽस्मि ॥ ५० ॥

इति श्रीशिवरहस्ये प्रथमांशे वेदरहस्यकथनं नाम
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

१. ब्रह्मपिपीलिकमिति पाठः ।
२. वियदेतदिति पाठः ।
३. दृश्यं यस्मिन्निति पाठः ।
४. गुरूक्त्येति पाठः ।

शिवगौरीसंवादोनाम अष्टचत्वारिंशोऽध्यायः

स्कन्दः—

एतादृशं महादेवं नीरूपं रूपवत्स्थितम् । प्राह देवी महादेवं प्राञ्जलिः प्रणता तदा ॥

देव्युवाच—

करुणासागरापारसुधाकरशिखण्डक । ब्रह्ममुण्डमहापण्डमालाकलितकन्धर ॥ २ ॥

अनाधार महादेव जगदाधार धूर्जटे । प्रेयवजितमन्दार सुन्दरानन्दविग्रह ॥ ३ ॥

कथं कैलासमौलिस्थलिङ्गानामुद्भवश्शिव । श्रोतुं मे कौतुकं शम्भो वद सर्वज्ञ मत्प्रिय

शैलमौलौ महादेव लिङ्गानामुद्भवोऽत्र हि । कथं समभवच्छम्भो तन्मे विस्तरतो वद॥

स्कन्दः—

इत्थं गौर्या तदा पृष्टो महादेवो दयापरः । तामुवाच प्रहृष्टात्मा जगदात्मा महेश्वरः ॥

ईश्वरः—

शृणु शैलसुते बाले कमलामललोचने । रहस्यमेतद्गोप्यन्ते नाख्येयं यस्य कस्यचित्॥

मद्भक्तायैव देयं स्यादन्यथा पतितो भवेत् । यो भूतिभूषणासक्तो यस्त्रिपुण्ड्रैकभासुरः

यो रुद्राक्षाङ्कितकरो रुद्राक्षामलभूषणः । यो रुद्रजपसुप्रीतो योमल्लिङ्गार्चने रतः॥ ९ ॥

यो भस्मशायी सततं पञ्चाक्षरजपादरः । यो बिल्वार्चनसुप्रीतो यश्च बिल्वार्चनप्रियः ॥

यो मद्भक्तिसुधापारकथाश्रवणतत्परः । यो मन्नैवेद्य भोजी स्यादन्यनैवेद्यवर्जितः ॥

यो मद्ध्यानमना नित्यमन्यध्यानविवर्जितः । मन्नामपरमो यश्चाप्यन्यनामविवर्जितः ॥

यो मत्क्षेत्रनिवासीस्यादन्यक्षेत्रविवर्जितः । यो मद्भक्तजनप्रीतोऽप्यन्यभक्तपराङ्मुखः

धनैः पुष्णाति यो भक्तान्मदीयान्त्सततं शिवे। यमादिनियमोपेतस्सर्वदा शिवपूजकः

वेदान्तसारपारज्ञः प्रकाश्यं तेष्विदं शिवे । नान्येषु मेऽत्र देवेशि रहस्यं गोप्यमेव हि॥

विद्याविदि कथासारं दत्वा मुक्तिमवाप्नुयात् । प्ररोहं याति सुभगे सुभूमौ वटबीजवत्

मूढेऽल्पप्रज्ञतापन्ने दत्वेदं शाम्भवं रहः । यथामकुम्भे क्षिप्ताम्भो वृथाभवति शङ्करि ॥

तद्वद्भवति मूर्खेषु पशुधर्मेषु शङ्करि । महापापमवाप्नोति तस्य नैवेह निष्कृतिः॥ १८ ॥

यथा सुगन्धकर्पूरचन्दनैर्भूषितः खरः । रथ्याभस्मकरीषेषु स्वाङ्गं संलेपयेत्सहि ॥

१. प्रपन्नजनमन्दार इति पाठः । २. अन्नैरिति पाठः ।

तथैवाशाम्भवे दत्तं नोपकाराय भामिनि । शाम्भवप्रवरे दत्तं विस्तारं याति शङ्करि ॥
यथोत्सृष्टं जले तैलं विस्तारमुपगच्छति । तस्माद्रोप्यतमं देवि साधुष्वेव विदर्शयेत् ॥
ममैव मनसा सृष्टः कैलासोऽयं महीधरः । नानातरुगणछन्नस्सर्वपक्षिवराश्रयः॥ २२॥
रत्नसौधवरोपेतो रम्यपुष्करणीयुतः । कोटियोजनविस्तारश्शून्य एव महीधरः॥२३॥
रम्योऽयमपि शैलेन्द्रो विपिनावलिमण्डितः । मृगाश्रयोऽपि सततं शून्य एव विभाति मे
तस्मान्मया महादेवि मनसेदं सुनिश्चितम् । तत्सर्वं मङ्गलाकारं शिवलिङ्गाश्रयं हि तत्
लिङ्गोज्झितं हि यद्देवि तदमङ्गलमीर्यते। यस्मिनग्रामेऽपि वा देवि पुरे वा विपिनेऽपिवा
मदीयलिङ्गहीनश्च स्मशानसदृशं शिवे । यत्र वा शिवलिङ्गंस्यादुत्तुङ्गालयमध्यगम् ॥
ग्रामे वा विपिने वापि तत्क्षेत्रमविमुक्तकम्। प्रातस्तद्ग्रामनिवसाः पश्यन्नपि शिवालयम् ॥
न तेषां पापसम्बन्धस्तद्दष्टात्प्रतिमुच्यते । यत्र लिंङ्गालयं देवि धन्यो देशस्स एव हि॥
यत्रैव शाम्भवा विप्रा यत्र लिङ्गार्चनप्रियाः। भस्मत्रिपुण्ड्ररुद्राक्षमालालङ्कृतविग्रहाः ॥
यत्र रुद्रजपासक्ता यत्र पञ्चाक्षरप्रियाः । यत्र विल्ववनं भद्रे तद्धन्यं परमं शिवे॥ ३१॥
तद्दर्शनेऽपि पापानां प्रलयो भवति क्षणात् । त्र्यक्षलिङ्गेक्षणादेव क्षणान्नश्यति पातकम्
धिग्भस्मरहितंफालं धिग्ग्राममशिवालयम्। धिगनीशार्चनंजन्म धिग्विद्यामशिवाश्रयाम्
शिवलिङ्गकुलं[1] भद्रे कल्पितं मणिसौधगम् । समाधिनिष्ठो ह्यभवं शतं वर्षाणि शैलजे ॥
व्याघ्रचर्मपरीधानो भस्मधृग्भस्मसंश्रयः । त्रिपुण्ड्रविलसत्फालो जटागङ्गेन्दुशोभितः॥
समासीनशिरोग्रीवो नासाग्रन्यस्तलोचनः। आत्मन्येवात्मना ध्यायंस्तद्वक्तुं नैव शक्यते
शर्वं सर्वातिगं शान्तमोतप्रोतं सनातनम् । अजमव्ययमाशास्यं हृत्स्थं [2]व्याप्य जगच्च यः
अक्रियं मनसा वाचा वेदैर्वा वक्तुमक्षमम् । कोशातिगं कोशभानं देशकालादिवर्जितम्
अस्थूलमणुकाहीनमसङ्गमरसं विभुम् । [3]अखण्डतेजसां राशिं तेजोहीनं गुणातिगम् ॥
व्याप्यव्यापकताहीनं महान्तं विस्तृतश्च तत्। आनन्दमरसं भोग्यं भोगभोग्यादिवर्जितम्
विशोकं विरजं सूक्ष्ममजिघ्रक्षं गुणातिगम् । सत्यकामञ्च सङ्कल्पं कल्पनाजालवर्जितम्
नान्यत्किञ्चिच्च वेदाहं सत्यज्ञानादिवर्जितम् । आनन्दरूपो निश्चेष्टस्तदहं ब्रह्म केवलम्

१. लिंगकुलमिति पाठः । २. व्याप्तजगत्त्रयमिति पाठः ।
३ अगन्धं तेजसामिति पाठः ।

एवं स्थितस्य मे गात्रात्पुलकस्सम्बभूव ह। देहीदेहाङ्गनाशोत्थस्वात्मैक्यपरमात्मनोः
आनन्दाम्बुनिधेर्मत्तःकाश्चवीच्यस्समुत्थिताः।मद्रोमकणलिङ्गानि कैलासस्थानिपार्वति
ततः कालान्तरे देवि समाधिविरते मयि। पश्यामि तानि सर्वाणि लिङ्गाकाराणि शैलजे
प्रोद्यत्सुधांशुधवलज्वालामौलिषु शङ्करि। कैलासेश्वरमुख्यानि त्रीणि कोट्यधिकानि च
मणीन्द्रसारसुभगमौलिकण्ठोरुभासुरैः। प्रासादावरणोपेतैर्दिव्यपूजाभरैरपि ॥ ४७॥
बिल्वमन्दारमौलीनि फणामौलिततानि च। दृष्ट्वाश्चर्येण तल्लिङ्गकुलम्मङ्गलदायकम्॥
कैलासशैले तल्लिङ्गं पूज्यं तानि च पूजये। लोकलीलाविनोदाय कार्यमेतन्मम प्रियम्
एतत्ते कथितं देवि नाख्येयं यस्य कस्यचित् ॥ ५० ॥

अशाम्भवजनेऽर्पितं गदितमेतदाद्यं यदि
वृथा भवति तद्द्रुतं निगमहीनभस्मे हुतम् ।
मरूषरभवस्तरुर्न भवति प्ररूढो यथा
तथापि तृणकोपमो भवति भाग्यहीने नरे ॥ ५१ ॥
अशाम्भवजनाश्रयो नरकवर्गदुःखाम्बुधि-
स्स एव तदुपाश्रयो भवति भस्मपुण्ड्रोज्झितः ।
ममार्चनकथासुधाश्रवणहीनपीनान्तरः
कथं मलजलाविलो भवति सूकरस्सिह्मवत् ॥ ५२ ॥
अगाधजनिनाशनप्रभवभूतिदुःखाम्बुधिं
न सन्तरति मानुषः कुमतिरिष्टविष्टाशनः ।
अरिष्टमरणोन्मुखश्शिवमहेशनामोज्झितः
करण्टककुलोद्भवो भवति भाग्यहीनोऽधमः ॥ ५३ ॥
एषा सा शिवनामसन्मधुरसा श्रीदिव्यनामानि मे
व्याख्येयेत सुजिह्वया करयुगैश्श्रीबिल्वपत्रार्चकाः ।
कथासु मम शाङ्कराः प्रथितश्रोत्रपात्रादरा
भवन्ति सुकृतैः परं परमनन्यभावं गताः ॥ ५४ ॥

१. कुम्भोरुगोपुरैरिति पाठः।

तेषां मुक्तय एव लभ्यत उमे मद्भावसारादरा
हीरोदारकुमारदारनिकरैस्सौख्यैकसाराश्च ते ।
पारावारविकारसंसृतिभवं दुःखं न तेषु ध्रुवं
मत्पादाब्जपरागसंहतमनस्तापादिरागादयः ॥ ५५ ॥
सुखाम्बुधिसुधाम्बुधिप्रचललीलल्लीना हि ते
निधानकलशास्सदा भुवि सदैव तेषां सुखम् ।
शरीरविगमेऽपि ते प्रथितचन्द्रचूडार्चका
नगेश्वरमिमं शिवे समधिवाप्य मे सद्मगाः ॥ ५६ ॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादो नाम
अष्टाचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## देववाक्यं नाम एकोनपञ्चाशोऽध्यायः.

ईश्वरः—

पुरा मां सुखमासीनं मन्दरे चारुकन्दरे । नानातरुवरापारशोभिते चित्रकन्दरे॥ १॥
रम्यपुष्करविस्तीर्णे पुष्करिण्यास्तटे शुभे । देवदारुवनच्छन्ने देवोद्यानमनोहरे ॥ २ ॥
नानासिद्धसमाकीर्णे मुनिगन्धर्वशोभिते । नगाग्रकुसुमापारस्तबकोच्छिन्नगुच्छके ॥
मुदितालिगणाच्छाच्छे शल्मलीकुसुमावृते । पुन्नागतरुसम्भूतमारुते चातिशीतले ॥
मयूरवरसारङ्गमत्तवानरवारणैः । पुंस्कोकिलकलालापशुकसारसशोभिते ॥ ५ ॥
कलहंसकुलारावकुररध्वनिसुन्दरे । मन्दारकुसुमोद्भूतमन्दमारुतशोभिते ॥ ६ ॥
किंपूरुषकृतापारमृदङ्गध्वनिदिक्तटे । वैखानसैर्वालखिल्यैर्मुनिभिश्च मरीचिभिः॥ ७ ॥
उद्यच्चण्डांशुनिचयैरूर्ध्वबाहुभिरुन्नतैः । तापसैर्मौलिविलसत्कपर्दोत्कीलशोभितैः॥ ८॥
कपर्दकृतनीडैश्च पक्षिपक्षोत्थमारुतैः । विश्रान्तैस्सूर्यकिरणैस्तप्तगात्रैर्मुनीश्वरैः ॥ ९ ॥
रम्यसानुशताकीर्णे निर्यद्रीतिविराजिते । तगरागरुजोद्भूतदावाग्निवरभूपिते ॥ १० ॥
वरसौधे गन्धलिप्ते सुखासीनं त्वया सह । उद्यच्चन्द्रांशुधवलबालेन्दुकृतशेखरम् ॥
राजत्फणिफणारत्नकनत्कङ्कणशोभितम् । उरगेन्द्रमहाहारं नीलकण्ठं त्रिलोचनम् ॥

व्याघ्रचर्मोत्तरासङ्गं गङ्गापिङ्गजटाधरम् । त्रिशूलविलसद्बाहुं मृगहस्तं महेश्वरम्॥१३॥

ममैव मायापरिमोहितास्सुरा रुद्रेन्द्रविष्ण्वब्जजमित्रसोमाः ।

भगोऽर्यमा वरुणो गन्धवाहस्तथानलो वसवो मारुतश्च ॥ १४ ॥

ऊचुः प्राञ्जलयस्सर्वे प्रणम्याथ सुरोत्तमाः । मत्तेजसा धर्षिताश्च भीता मम महौजसा॥

देवाः—

को भवांस्तव किं रूपं नानाश्चर्यैकभावनः । नग्नोऽसि देवदेवेश ब्रह्ममुण्डलसद्गलः ॥

त्रिणेत्रश्च गरादश्च नीलकण्ठश्च शङ्करः । महाहिवलयोद्भासिरत्नमालागलश्रुतिः॥१७॥

पितृकाननसम्भूतभस्मधार्यसि सर्वदा । जटिलोऽसि महादेव महावृषभवाहनः॥ १८॥

मत्स्यकूर्मवराहादिनरसिंह्माजिनप्रियः । गजकृत्तिधरो नित्यं चन्द्रमूर्धासि शाश्वतः ॥

मृगबालमहाशूलधारकोऽसि महेश्वरः । वामभागैकविलसत्कामिनीनोऽसि विश्वभुक् ॥

सदा गिरिप्रियश्चासि ह्यसङ्गश्च चरिष्यसि । गणौघगणनां देव गणितुं ते न शक्यते ॥

का निष्ठा तव देवेश वद त्वं करुणानिधे । सशरीरोऽसि चारित्र्यं तव ज्ञातुं न शक्यते॥

तव मायामयैः पाशैर्मोहिताश्चैव भूसुराः । शरीरिणं त्वां दृष्ट्वैव ह्यस्माभिस्समुपास्यसे ॥

पुत्राभ्यां प्रीतियुक्तोऽसि द्विपाननषडानने । षडूर्मिरहितं देवदेवं त्वां मन्महे वयम् ॥

वयञ्च लोकपास्सर्वे ब्रह्मविष्णुमहेश्वराः । रुद्रादयश्च दिक्पाला ग्रहर्क्षमनवस्सुराः ॥

ब्रह्मा सृजति लोकांश्च विष्णुः पालयते जगत् । रुद्रस्संहरते चान्ते चन्द्रेन्द्रसुरनायकैः

हन्त्याजौ सर्वदैत्यांश्च मखभुग्विष्टपाधिपः । विश्वे च ऋभवस्सोमं तेऽपि यज्ञे पिबन्त्यपि

सोमं तवाज्ञया शम्भो ह्यश्विनौ सोमपीथिनौ । वसवश्च ततश्शम्भो सूर्यःपाति गभस्तिभिः

निशानाथस्सदा चन्द्रस्ताराश्चान्ये ग्रहादयः । इन्द्रोऽग्निस्सूर्यतनयो निर्ऋतिर्वरुणोमरुत्

यक्षेन्द्रोऽयं धनाधीश ईशानोऽयं महेश्वरः । मनवो ऋषयश्चैव स्वं स्वं कार्यमुपासते ॥

ताराचक्रमिदं सर्वं लोकाश्चैव चतुर्दश । एतेषामतिरिक्तस्त्वं कस्त्वं देव वदाधुना ॥

चरित्राण्यपि ते देव विश्वातीतानि दर्शय । नैव विश्वपरोऽसि त्वं देवो विश्वाधिको ह्यसि

तव देव कथं रूपं रूपवानिव दृश्यसे । न सज्जसे गुणेषु त्वं गुणवानिव दृश्यसे॥३३॥

---

१. मामाहुरोजसेति पाठः । २. मोहिताश्च वयं सुराः इति पाठः ।

३. इन्द्रोऽयं सुरनायकः इति पाठः । ४. ईदृशोऽयं महेश्वर इति पाठः ।

विश्वातिगोऽसि भूतेश विश्ववानिव दृश्यसे । निर्गुणोऽपि च देवेश सगुणेष्विव दृश्यसे
देव्यानया विहरसे कैलासाचलमूर्धगः । निष्किञ्चनोऽसि च सदा सर्वभाग्यसुधोदयः॥
यत दृक्कोटिसंलग्ना भवन्त्येवेश्वरा हि ते । ससुरासुरगन्धर्वमानवाः पशवोऽपि हि ॥
यत्र यत्रोत्कृष्टतमास्तवकारुण्यतोऽखिलाः । रमसे प्रमथाधीशैस्स्कन्दहेरम्बसंयुतः ॥
तवापारचरित्राणां ज्ञेयताच्च महेश्वर । वेदैरीड्योऽसि भगवन्नैव किञ्चित्करोपि च ॥
तवलिङ्गं सुरैस्सर्वैरसुरैर्मुनिपुङ्गवैः । पूज्यसे बिल्वपत्रैश्च तेषां त्वं मोचको ह्यसि॥३९॥
भवजालमयैः पाशैः किन्ते रूपं महेश्वर । भस्मप्रियोऽसि भगवन्भस्मनिष्ठे तु ते कृपा॥
रुद्राक्षधारिणो ये तु तेऽपि त्वद्भक्तसत्तमाः । पञ्चाक्षरपराणाञ्च त्वं सदा मोक्षदो ह्यसि
रुद्राध्यायार्थकथनतज्जपासक्तचेतसाम् । तेषां त्वं पापजालानि विनाशयसि शङ्कर ॥
भक्तिप्रियोऽसि भगवन्मोहितास्तव मायया । संशयाविष्टहृदयास्त्वां पृच्छामो महेश्वर॥
तवैवरूपं देवेश कृपया वद तच्छिव । अस्माभिरिव लोकेषु रूपवानिव दृश्यसे॥४४॥
स्त्र्यन्नपानादिभोगैश्च विहरस्य जरामरः । अरिमित्रेष्वपि सदा तुल्यो ह्यसि महेश्वर ॥
स्मरत्रिपुरदैत्येन्द्रयमान्धकगजादिहृत् । उत्तमोऽसि कथं देव ह्यस्माभिरपि ते सदा ॥
चरित्रं दृश्यते शम्भो वद तत्करुणाबलात् ॥ ४७ ॥

स्कन्दः—

इत्थन्तैर्मोहितैर्देवैः परिपृष्टो महेश्वरः । उवाच तान् शृणु मुने वेदवेदान्तसम्भवम् ॥

विश्वाक्षो भगवानुतोत इषुमान् ख्यातश्च सर्वात्मको
रुद्राणाञ्च गणैस्सहस्रवदनस्सर्वात्मकश्शक्तिमान् ।
नानाकारजगत्कृतीषुविहरत्येकोऽपि सर्वात्मक-
स्तद्वत्तत्र शिवायुतो गिरिवरे क्रीडारसैर्निर्भरः ॥ ४९ ॥

क्वचिद्धीरे सौधे विहरति सहाम्बो हि भगवा-
न्क्वचिल्लिङ्गं साङ्गं त्वपचितिविशेषैर्विहरति ।
क्वचिन्नीले सौधे विहरति च वातायनगतः
क्वचित्पौष्पे मञ्चे विहरति कथासारसुरसम् ॥ ५० ॥

क्वचित्तिष्ठन्धावन्मृगमनुधनुर्बाणसहितः
क्वचिद्देव्या पुष्पं त्वपचिनुति पुष्पद्रुमकुले ।
क्वचिज्जल्पन्नास्ते जलसरसि देव्यावगहते
क्वचित्पुष्पैर्गन्धैः क्वचिदपिमणीजालसदनैः ॥ ५१ ॥
क्वचिन्नृत्तं पश्यन्क्वचिदपिच वीणादनिनदैः
क्वचिद्भक्ष्यं भुंक्ते विहरति च डोलासु शिवया ।
क्वचिद्दीव्यत्यक्षैः क्वचिदपि च हल्लीसरयुतो
महारत्नैः क्लृप्तैर्वरतरगवाक्षैकवसतिः ॥ ५२ ॥
क्रीडाकन्दुकमुत्क्षिपत्यविरतं देव्या नु लोकादरो
ध्यायन् स्वात्मतया कदाचिदपि वै ह्येकोऽपि नानाकृतिः ।
इत्थं कैलासशैलेष्वनवरतमीशोऽधिवसति
भवान्या तादृक्ष्या किमिह महमीडेऽद्य चरितम् ॥ ५३ ॥
ततः किञ्चित् किं वा हरचरितमात्रं कथमपि
ब्रुवे शम्भोः पादाम्बुजभजनभक्त्यैव सहसा ॥ ५४ ॥

इति श्रीशिवरहस्ये प्रथमांशे देववाक्यं नाम
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

सुरोपदेशो नाम पञ्चाशोऽध्यायः.

स्कन्दः—

निलिम्पवचनंश्रुत्वानिर्लेपोनिर्मलश्शिवः।अनुकम्पारसाक्रान्तःकम्पितानाहतान्त्सुरान्

ईश्वरः—

इति गीर्वाणबृन्दानां श्रुत्वाहं वचनं शिवे । मन्दस्मिताधरो देवि विस्मयानन्दितान्तरः
मन्मायामोहितानज्ञात्वातानवोचमथाम्बिके। ब्रह्मविष्णुमहेशाद्याइन्द्राग्न्यनिलमित्रकाः
वसवोऽश्विमुखास्सर्वे मरुतश्चर्षयोऽखिलाः । शृणुध्वं मम सार्वात्म्यं यदज्ञानात्सुरासुराः

---

१. भगादित्या इति पाठः ।

मन्मायामोहिता यूयमभिजातास्स्थ सत्तमाः। भवन्तः पशवस्सर्वे चाब्रह्मस्तम्भपूर्वकाः
अहं मायामयैः पाशैरीपणाभिस्सुरासुरान्। बध्वा क्रीडामि देव्या च जगत्यस्मिंश्चराचरे
अहमेव सुरान्त्सर्वान्मोचको भक्तिभावितः। मम रूपमविज्ञाय भवन्तो विग्रहं मम ॥
दृष्ट्वैव चेष्टां विविधां गुणभूतां गुणातिगाः। विषयेष्वनुरक्तं मां ज्ञात्वा मोहं परं गताः॥
तदद्यैवापनेष्यामि शृणुध्वं परमं मम। गोप्याद्गोप्यतरं ज्ञानमथर्वशिरसि स्थितम्॥९॥
सर्वश्रुतिशिरोद्भूतं साक्षादज्ञाननाशनम्। अहमेको निराधारो वर्ताम्याकाशवत्सदा ॥
नैव लेपोऽस्ति मनसो मम कार्येन्द्रियैस्सदा। न महाभूतसङ्घैश्च न कालेन दिशा सुराः॥
वस्तुतो ह्यपरिच्छिन्नोह्यसङ्गोऽस्मिनिरामयः। अव्यक्तः परमात्माहं सर्वेषामन्तरास्थितः
अहमादिश्च मध्यश्चाप्यहमन्तस्सनातनः। जगज्जन्मादिनाशोत्थंक्रियाभिर्नाहमीश्वरः॥
मत्त एवाखिलं विश्वं मय्येवेदं स्थितं सुराः। ब्रह्मविष्ण्वीश्वरेन्द्रा भवन्तो मत्त एव हि या:/
निर्गतास्स्थ भवन्तो वै जगज्जालमिदं सुराः। सोमोऽहं जनिता देवास्सर्वेषां भवतां सुराः
भवद्भिस्सह मय्येव विद्यते तच्चराचरम्। न मत्तोऽस्ति पृथक्किञ्चिन्नेह नानास्ति किञ्चन
मां विज्ञायेदमखिलं जानन्त्येकं सनातनम्।ममैकत्वपरिज्ञानात्को मोहोऽत्र निलिम्पकाः
मां विदित्वैव परमा शान्तिस्तेषां सदैव हि। ग्रन्थिभिर्नाभिभूयन्ते काम्यकर्ममयैस्सुराः
बध्यन्तेऽत्र भवन्तो हि [1]विवशा मम मायया। वाक्यैर्गुणमयैर्देवास्तत्फलं प्राप्यते दिवि
ये यथा मां प्रपद्यन्ते नानोपासनया सुराः। तांस्तथैवाहमेवाद्य तद्भावानां प्रपूरकः ॥
तथैव प्रेरयाम्यद्य सोऽहङ्कारपरो भवेत्। मां प्रेरकमविज्ञाय कर्ताहमिति मन्यते॥२१॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्। सर्वस्य प्रभुमीशानं [2]सर्वस्य शरणं सुराः ॥

अपाणिपादोऽजवनः पश्याम्यहमतन्द्रितः।
अचक्षुश्श्रोत्रहीनोऽस्मि मनःप्राणातिगोऽस्म्यहम् ॥ २३ ॥

मयावास्यमिदं सर्वं मां विज्ञाय विमुच्यते। अहं सर्वशरीरेषु विजानामीदमेवहि॥२४॥
न वेत्ति मां सुराः कोऽपि योगयुक्तोऽपि [3]कश्चन। सर्वाश्रयोऽहं हि सदा सर्वाधारश्च सत्तमः
पञ्चकोशविहीनश्च पञ्चभूतातिगोऽस्म्यहम्। पञ्चप्राणातिगश्चाहं क्वेदं देहेन्द्रियं सुराः॥

---

१. पशवः इति पाठः। २. सुरास्सर्वस्यकारणमिति पाठः।
३. मुक्तये इति पाठः।

अपक्षपातसहितस्सर्वभूतेषु सर्वदा । लोकोत्थसुखदुःखैश्च पड्डूर्मिभिरपि द्रुतम् ॥ २७ ॥
नैव लिप्तोऽस्मि देहेषु ह्यशीष्णोंहमवस्थितः । सूर्यो यथा सर्वलोकं प्रवर्तयति कर्मभिः ॥
लोककार्यविहीनश्च तद्वत्साक्षिरहं स्थितः। कायप्राणमनोधर्मैर्नानाहङ्काररसम्भवैः॥२९॥
धर्मैर्वा पापजालैर्वा नैव लेपोऽस्ति मे सुराः । काष्ठाहं परमश्चाहं भासकोऽहं जडेष्वपि॥
भीषास्मादनिलो वाति भीषोदेति गभस्तिमान्। भीषैव चन्द्रयमकाः भीषैवेदं स्थितंजगत्

ज्योतिषां ज्योतिरस्मीह विम्बाविम्बातिगोऽस्म्यहम् ।
एकत्वं वा तथा द्वित्वं वहुत्वं वा न किञ्चन ॥ ३२ ॥

नैव मुक्तिर्नैव वन्धो मयि सर्वेश्वरे सुराः । सर्वभूमात्वहं देवास्साक्ष्यसाक्षिविवर्जितः ॥
न चाणुर्न महांश्चापि निर्गुणस्सगुणोऽपि वा । न माया मायि वा किञ्चिन्नैवाहमपि चेश्वरः
एषोऽहं परमानन्दो रसोऽहं सर्ववस्तुगः । एष ब्रह्मादिसर्वश्चाप्यहमेव सदा सुराः ॥
यूयमादिस्सर्व एव सीमा भूमाहमेव हि । न वेदवादवेदान्तैर्न गुरूक्त्या न चेच्छया[1]॥
न कर्मणा वा तपसा प्राप्नोत्येकोऽपि वा सुराः । मत्प्रसादेनैव देवा वृणुतंभक्तमेव हि॥
मन्निष्ठां सर्वभावेन कश्चिज्जानाति वा न वा । अथान्यथा नयत्यर्थं वेदान्तानां दुरात्मवान्
मामविज्ञाय दुःखौघान्नैव मुक्तो भविष्यति । विभूतिं मम वक्ष्यामि शृण्वन्तु परमां सुराः
यल्लाभान्नापरो लाभो मत्प्रसादेन लभ्यते । ये भस्मनिष्ठास्सततं तेषामेव प्रकाशयेत् ॥
ये त्रिपुण्ड्रलसत्फालास्तेषामेतत्प्रकाश्यते। ये रुद्राक्षमहादेहास्तेषामेतत्प्रकाश्यते॥४१॥
ये रुद्राध्यायनिरतास्तेषामेतत्प्रकाश्यते । ये मल्लिङ्गाराधनेच्छास्[2]तेषामेतत्प्रकाश्यते ॥
ये पञ्चाक्षरसन्मन्त्रजपध्यानैकमानसाः । तेषां श्रुतिशिरोद्भूतं ज्ञानं विप्रेषु जायते ॥
ये शिवक्षेत्रनिरतास्तेषामेतत्प्रकाश्यते । अनन्यभावास्सततं वेदान्ते मयि ये गुरौ ॥
अनन्यभावा ये देवास्सदा कौटिल्यवर्जिताः । मन्नामनिरता ये वै तेषामेतत्प्रकाश्यते॥
सर्वेभ्यो देवसङ्घेभ्यो वरिष्ठं मन्वते हि ये । मध्याननिरता ये वै तेषामेतत्प्रकाश्यते ॥
मध्यानं वेदवेदान्तसारतात्पर्यचिन्तनम् । तेष्वशक्तेषु मद्रूपचिन्तनं तत्प्रबुध्यते॥४७॥
चिन्तयेन्नीलकण्ठं मां त्रिणेत्रं चन्द्रशेखरम् । उमार्धविग्रहं रूपं स्वहृत्पद्मस्य सद्मगम् ॥
भावयन्त्सततं युक्तस्तज्ज्ञानं प्राप्नुयात्सुराः । अपरोक्षं हि मे ज्ञानं तस्य जायेत निश्चितम्

१. नचेज्ययेति पाठः । २. विल्वपत्रादिसाधनैरिति पाठः ।

एवं साधनहीनानां ज्ञानं तद्दुर्लभं सुराः । शृण्वन्गुरुमुखैर्भावैर्बुद्ध्या शब्दार्थवेदनैः ॥
नैव तत्प्राप्नुयाज्ज्ञानं कोटिकल्पशतैरपि । मत्प्रसादविहीनो यो गृही वाथ यतिर्वनी ॥
तन्नैव प्राप्नुयाज्ज्ञानं साक्षात्संसारमोचकम् ॥ ५२ ॥
यस्मिन् ग्रामे पुरे वा सततपरिचितापारशैवप्रचारा
रुद्राध्यायजपादरास्सितलसद्भस्मत्रिपुण्ड्रादराः ।
शम्भोर्लिङ्गसमर्चकास्तु सुतरां ते नातुरं नैव ते
सम्प्राप्यन्ति यमाद्भयं जनिजरारोगप्रणाशेन वा ॥ ५३ ॥
ज्ञानमेतदतिदुर्लभं सुरा भुक्तिमुक्तिजनकं मम भक्त्या ।
युक्तियुक्तगुरुसूक्तिसुधाब्धौ रुद्धमाद्यमनघं सततञ्च ॥ ५४ ॥
लभ्यते किल पचेलिमपुण्यैः कस्यचिन्मम कृपावशतो हि ।
बन्धहृद्धृदयभेदकं सुराह्यन्यथास्य न पथा न कर्मणा ॥ ५५ ॥

इति श्रीशिवरहस्ये प्रथमांशे सुरोपदेशो नाम
पञ्चाशोऽध्यायः ॥ ५० ॥

---

श्रुतिसारनिरूपणं नाम एकपञ्चाशोऽध्यायः.

ईश्वरः—

विभूतिं मम वक्ष्यामि शृण्वन्तु मुनिपुङ्गवाः । यद् ज्ञात्वा न पुनर्ज्ञेयं विद्यते सुरसत्तमाः
अहमेकोऽखिलाधारश्चाहं विश्वप्रवर्तकः । अहं विश्वमिदं सर्वं मय्येवान्त्ये विशत्यपि ॥
अहंधाता विधाताच मत्तोऽन्यो नास्तिकश्चन । सृजामीदं ग्रसामीदं भरामीदंसुरोत्तमाः॥
यथोर्णनाभिस्सूत्रांश्च ग्रसते सृजतीत्यपि । तथैवेदं जगज्जालं भवद्भिस्सुरसत्तमाः॥४॥
कालात्माहं ब्रह्मक्षत्रमोदनं मृत्युपादशम् । अहं जीवं प्रविश्यैव सर्वभूतेषु संस्थितः ॥
सर्वभूतेषु भूतान्तर्गुहायां सर्वदा स्थितः । सर्वेन्द्रियगुणातीतस्सर्वेन्द्रियविवर्जितः ॥
मदाधारा इमे लोका लोक्या यूयं सुरासुराः । तपने तापकश्चाहं चन्द्रेचैव प्रसादकः ॥
अनिले चलनश्चाहमनले ह्युष्णको ह्यहम् । इन्द्रे यमे प्रतापोऽहं लक्ष्मीश्चाहं धनाधिपे ॥

अश्विनेऽपि च भैषज्यं मरुतां मातरस्सदा । विश्वेषां हृदयश्चाहं वसूनां हृद्गतस्सदा ॥
असुराणां सुराणाञ्च सम्पदा समवस्थितः । तमसा सात्विकेनैव मुनीनां राजसस्सुराः
गुणत्रयोऽहं विबुधा गुणहीनोऽस्मि केवलः । अहं हि निर्गुणस्साक्षात्तमःपारे प्रतिष्ठितः
अपांरसस्तथैवाहंज्योतिषांज्योतिरस्म्यहम्। भूताकाशेचेतयिताव्यापकश्शब्दगोस्म्यहम्
पृथिव्याश्च तथा गन्धो गुणो देवाश्च संस्थितः । वायुश्चाहं तथा देवा एतेषामाद्यसृष्टयः॥
चराचरमिदं प्रोक्तं जगत्स्थावरजङ्गमम् । एतेषामानुलोम्येन सृष्टयस्स्युः प्रवर्तिताः ॥
एतेषां प्रातिलोम्येन स्थितौ प्रलयसंज्ञिताः । एतेषां कार्यकरणे नैव किञ्चिदहं सुराः ॥
निलिम्पा नैव लोपेन किन्तु साक्षी सनातनः । मत्सन्निधानविरहे जगन्नैव प्ररोचते ॥
अयस्कान्तमणेर्यद्वत्सन्निधौ लोहसूचयः । चेष्टन्ति विविधं देवास्तथैवेदं जगत्सुराः ॥
सन्निधौ चेष्टते मेऽद्य सर्वे क्रीडनका मम । मम रूपपरिज्ञानं भवतामतिदुर्लभम्॥ १८ ॥
षडूर्मिरहितश्चाहं पञ्चकृत्यविवर्जितः। ब्रह्माप्यहं सृजामीदं रजसा केवलं जगत्॥ १९॥
विष्णुःपालयिता चाहं सात्विकंगुणमास्थितः। रुद्रोभूत्वासंहरामि तामसोऽहंचराचरम्॥
सदाशिवोऽहं देवेशो ह्यनुग्रहकरोऽस्म्यहम्। मन्मायामोहितं चैव करोमीश्वररूपधृक् ॥
पञ्चकृत्यपरश्चाहं पञ्चकोशातिगोऽस्म्यहम् । पञ्चप्राणविहीनोऽहं पञ्चभूतैकवर्तनः ॥
इयं मम परा शक्तिर्विक्षेपावरणात्मिका । यया सम्मोहिता यूयं जगत्सासुरमानुषम् ॥
स्थास्नुर्गच्छत्सुरेन्द्राश्च पराशक्तिरियं मम । सृष्टौ स्थितौ तथा नाशे कारणं त्वियमेव हि
ममैव शक्तिः परमा विविधज्ञानदायिनी । एनां प्रणमत क्षिप्रमेतस्याः कृपया सुराः ॥
मत्प्रसादादावरणशक्तिनाशः प्रजायते । यावत्कर्मविपाको हि देहिनां भवतां सुराः ॥
विक्षेपाय च सा शक्तिरनुवर्तेत सत्तमाः । ममैवांशो जीव एव स्वाज्ञानात्परिजृम्भते ॥
नानायोनिशरीरेषु ह्यशीर्णो दुःखभागभुक् । एवं द्विधा देहगेहे वृक्षे पक्षिवदास्थितौ ॥
एकः कर्मात्मकं भुंक्ते फलं वै सुखदुःखयोः। तथान्यस्साक्षिवद्भाति द्वासुपर्णेति मन्त्रतः॥
ब्रह्मैव संसरत्येष स्वाविद्यातो दिवौकसः । स्वविद्यया मुच्यते च तपसाकेवलेन हि ॥
अहम्मानतयापन्नः फलभुक्सुखदुःखयोः । स्वर्गे च नरके चैव सदा वै सम्प्रवर्तते ॥
मद्ज्ञानान्मुक्तिमाप्नोतिनान्यथाकर्मकोटिभिः। जीवापेतम्म्रियत्येतन्नजीवोम्रियतेसुराः

१. एषां सन्धाविसृष्टयः इति पाठः ।

षडूर्मिरहितश्चाहं सर्वदेहेषु सत्तमाः। षट्कोशकमिदं देहं प्रविश्याखिलभासकः ॥ ३३॥
षडूर्मिरिन्द्रियार्थैश्च[1] कामयामि चराचरम्। सत्यकामश्च सङ्कल्पस्सर्वलोकान्सृजाम्यहम्
सङ्कल्पात्पितरोदेवाउपतिष्ठन्तिमामिह। नमेशोकोऽस्तिमोहोवाजिघृत्साचपिपासका ॥
अशरीरश्शरीरेषु ह्यनवस्थेष्ववस्थितः। महांश्चाहं विभुश्चाहमात्माशीर्योऽहमेव हि ॥
अवस्थात्रयदूरोऽहमसङ्गः पुरुषस्त्वहम्। सर्वाकाशस्सर्वभासस्सर्वावासोऽहमीश्वरः ॥
यो मां वेद स वेदेदं यो मामज्ञानमोहितः। परादात्स परादेदं ज्ञात्वानन्दं विभेति न ॥
शान्तिं परां गच्छति च न कामी भवति स्थिरः। ब्रह्म मां वेद स ब्रह्म मां वेत्येव सुरासुराः[2]
अस्तिब्रह्मेतिमांवेदतस्याहंमोचकोऽस्मि च। नान्तःप्रज्ञश्चनबहिःप्रज्ञानंब्रह्मचास्म्यहम्॥
एषोन्तर्यामिच सदा ह्यमृत्योर्मृत्युरूपतः। अहमेव सदा ब्रह्म साक्ष्यसाक्ष्यादिवर्जितः ॥
अयमात्मा सदा ब्रह्म देशकालस्थितोऽप्यहम्। तत्वमेतत्सर्वमसीत्यादिवाक्यैकरूपतः॥
अहं वाक्येषु सर्वेषु चाहमेवास्मि भासकः। आनन्दं परमं ज्ञात्वा तरत्येव भवार्णवम् ॥
उपास्यं मामभिज्ञात्वा शोकमोहौ तरत्यपि। यूयं मामेव जानीथाप्यन्यत्सर्वं वृथैव हि ॥
सत्यं ज्ञानमनन्तोऽहं मत्सत्यात्सत्यता[3] जगत्। मत्सत्तयैव हि जडं चेतते विविधं जगत्॥
महानन्दाम्बुधेस्सर्वं शीकरं जगदेव हि। रसोऽहं सर्वभूतेषु रसतां जानते तु ये ॥ ४६ ॥
रसास्तेनन्दमात्रश्च जीवन्त्येवसुरास्सदा। कोवान्यःप्राणितिसदामदाकाशंविनासुराः॥
न तत्र गच्छति मनो नवाग्गच्छति चेन्द्रियम्। परमात्माहमेवाद्य स एवाद्य सउश्वकः ॥
असङ्गस्त्वरसस्पर्शोह्यप्राणो गन्ध एव हि। अपाणिपादकार्यादिः पायूपस्थादिवर्जितः॥
प्रमाप्रमेयरहितस्तर्कदूरोऽहमेव हि। अहं जानामि सर्वं हि न मां जानाति कश्चन ॥५०॥
पराञ्चि खान्यकृणवं तस्मान्माञ्च न पश्यति। मत्प्रसादयुतःकश्चिज्जानात्येव हि वा न वा
द्रष्टाहं दृश्यरहितो दर्शनश्चाहमेव हि। षोडशोऽहं सुरश्रेष्ठाश्श्रोता घ्राताहमेव हि॥५२॥
बुद्धेर्बोद्धा मनश्चापि प्राणप्राणोऽहमीश्वरः। सर्वा एव कला देहे चेन्द्रियाण्यहमेव हि॥
सर्वे मय्येव लीयन्ते नाहं तेषु[4] व्यवस्थितः। एक एवाहमद्वैतश्चतुर्थश्शिव एव हि॥ ५४ ॥
मज्जं मल्लश्च मदनं जगद्विद्ध सुरास्सदा। भूमाहं परमानन्दो मां न जानाति कश्चन॥

---

१. षड्वर्गैरिन्द्रियार्थैश्चेति पाठः। २. भवत्येव सुरासुराः इति पाठः।
३. असत्यात्सत्यता जगत् इति पाठः। ४. तेनाहं तेष्ववस्थितः इति पाठः।

एकोऽहं भुवने जडाजडगतिस्स्वैरं हि नानाजग-
न्नास्त्येव प्रतिभाति किञ्चिदपि वै तन्मार्गतृष्णोपमम् ।
तेनाद्री न भवेत्क्षया सुरगणा नास्त्येव किञ्चिज्जग-
त्सर्वं शम्भुतया विभाति सकलं कस्यास्विदेतत्सुराः ॥ ५६ ॥

इति श्रीशिवरहस्ये प्रथमांशे श्रुतिसारनिरूपणन्नाम
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

देवानांशोधनं नाम द्विपञ्चाशोऽध्यायः.

ईश्वरः—

सोऽहं नित्योऽप्यनित्यश्चब्रह्माब्रह्माहमेवहि। प्राञ्चोऽहञ्चैव पश्चाचदक्षिणोदीचएवहि॥
अधश्चोर्ध्वमहं लोका दिशश्च विदिशोऽप्यहम् । पुमान्नपुंसकश्चाहं स्त्रीचाहंसर्वदेवताः ॥
नैव स्त्री नपुमांश्चाहं नैव चाहं सनातनः । अशरीरश्शरीरेषु ह्यशीर्णश्शीर्यकेष्वहम् ॥
ज्योतिषामहमेवास्मिचात्मज्योतिस्सदाव्ययः। अनलानिलसूर्येंदुभूतानामन्तरास्म्यहम्
मां नजानन्ति भूतानि भूतादिश्चाहमेव हि । छन्दसामहमेवादिर्गार्हपत्योऽहमेवहि ॥
दक्षिणाग्न्याहवनीयस्सत्योऽहं गौरहं सुराः । गौर्यहञ्च वरिष्ठोऽहं कनिष्ठोऽहंसनातनः
ऋग्यजुस्सामाथर्वाणि मद्गिरो हि सुरेश्वराः। अक्षरोऽहं क्षरोऽहञ्चगुह्योऽहं पुष्करं तथा॥
अणोरणीयोऽस्मि सुरा महतोऽहं महांस्तथा। विश्वतश्चक्षुरेवाहं विश्वतोबाहुरीश्वरः ॥
विश्वमौलिर्विश्वपादस्सहस्राक्षस्सहस्रपात् । दशाङ्गुलमिदं सर्वमत्यतिष्ठामि भो सुराः ॥
अमृतस्याहमीशानस्सर्वेषु पुरुषोऽन्तरः । व्यपोह्यशीर्षकपालं सर्वेषां संस्थितोऽस्म्यहम्
ऐषोऽन्तराहं पुरुषो हिरण्यश्मश्रुरेवहि । मनसोऽहं जवीयांश्च मयावास्यमिदं जगत् ॥
मय्येव लीयते चान्ते मत्तोऽन्यन्नास्ति किञ्चन ।
अप्राणोऽस्म्यमनाश्शुभ्रो निर्गताक्षोऽहमेवहि ॥ १२ ॥
न प्रज्ञोऽहं न चाप्रज्ञो नोभयप्रज्ञ एव हि । अहं भूतेषु सुप्तेषु जागर्मि सततं सुराः ॥
अहमव्यक्त एवेशोव्यक्तोभूतहृदिस्थितः । स्थाणुर्निर्गुण एवास्मिकार्यकारणवर्जितः॥
क्षराक्षरादिरहितः परमात्माहमेव हि । अहं च न दिवा रात्रिर्न सन्नासत्सदाशिवः ॥

आकाशकोशस्संवेष्टुं मुकरो यदि जायते। तदा मांत्वनविज्ञायदुःखस्यान्तोभविष्यति॥
वेदैस्सर्वैश्च वेद्योऽहं वेदान्तेष्वहमास्थितः। स्वे महिम्न्यहमेवैको ह्यहमौपनिषत्परः॥
वेदादिस्स्वर एवाहं प्रणवोऽहं सनातनः। प्रणवादित्रिमात्रोऽहं सर्वमन्त्रात्मकस्त्वहम्
पञ्चाक्षरमयश्चाहं पञ्चपातकवर्जितः। नासङ्गो नैव मे सङ्गोऽप्यहं भुवनमेवहि॥ १९॥
विश्वातीतो विश्वधामा विश्वाधिक उमापतिः। भवन्तः पशवस्सर्वे भवतांपतिरस्म्यहम्
मत्प्रसादाद्भवन्तोहि मुक्तये यतताधुना। मज्ज्ञानं वेदवाक्योत्थमन्यच्छिल्पंसुरोत्तमाः
ब्रह्मैवाहं संसरामि विद्ययाविद्यया सुराः। निर्मुक्तो मोचयाम्येव सर्वं सासुरमानुषम्॥
श्रवणायापि लभ्योऽहं कर्मभिर्नसुरासुराः। शृण्वन्तोऽपि यतिश्रेष्ठानमांविन्दन्तिकेचन
अतोन्यदार्तंविबुधास्सर्वंजगदिदंध्रुवम्। कथंभवन्तोमन्यन्तेतद्ब्रुवन्तुममाग्रतः॥ २४॥
विभूतिर्मम या प्रोक्ताश्रद्धया वेद नान्यथा। नाविश्वस्तचेतसेदेयंज्ञानंवेदान्तवाक्यजम्
दत्वा नरकमाप्नोति सहपूर्वपितामहैः। सर्वोपनिषदां सारं मयैतत्समुदाहृतम्॥ २६॥
भवद्भ्यस्सम्यगधुना हृदयग्रन्थिभेदनम्। नाशिष्यायाप्यभक्ताय नापुत्रायेदमेवहि॥
दद्यादेतच्छाम्भवेभ्यो यतिभ्यस्सुरसत्तमाः। देयमेतत्सुरश्रेष्ठास्तस्यमुक्तिरयत्नतः॥
मत्प्रसादेन सर्वेषां मुक्तयस्स्युः करे स्थिताः। शिरोव्रतं यैश्चरितं देयं तेषामिदं सुराः॥
शिरोव्रतमिदं देवाः पुरा चीर्णम्मयैवहि। अग्निरित्यादिभिर्भस्मगृहीत्वाङ्गानिसंस्पृशेत्
व्रतमेतदिदं देवाः पशुपाशविमोक्षदम्। श्रद्धया तपसा देवा मम लिङ्गार्चनेनहि॥ ३१॥
भस्मत्रिपुण्ड्रकण्ठैश्च पापाच्छिन्नोभवेन्नरः। पञ्चाक्षरावर्तनैश्च पञ्चपापप्रणाशनम्॥ ३२॥
रुद्राध्यायजपश्चैव विल्वमूले विशेषतः। मम क्षेत्रेषु नियतं वासाच्च सुरसत्तमाः॥ ३३॥
अविमुक्तनिवासाच्च तत्रैवान्ते तनुक्षयात्। उमासहायमन्मूर्तिध्यानेनैवसुरास्तथा॥
एतदेव परं ज्ञानं लभ्यते मत्प्रसादतः। नान्यथा लभ्यते ज्ञानं कर्मोपासनतस्सुराः॥

ह/ इदमखिलरस्यं वेदजालोत्थसारं कथितमिदमशेषाज्ञाननाशैकहेतु।
हृदि सदयमदीयं भेदनं ज्ञानमाद्यं जगति न हि विधेयं मूढमर्त्येषु देवाः॥
भवशतजनिनाशं मोक्षमार्गप्रदीपं ह्यपि दुरितशतोत्थैः पापतापैर्विहीनः।
मम वरदसुपूजाद्ध्यानतः प्राप्यमेवं गुरुजनवरबोधैर्वेदवाक्यैर्दुरापम्॥ ३७॥

किं वीर्यं भवतां सुरा हरिहरौ पद्मासनस्सेन्द्रका-
स्सूर्येन्दू ह्यनिलानलाश्च मरुतो विश्वेऽश्विनौ ब्रूतमे ।
वस्वादित्यगणा ऋभूमरुगणा यूयं कुबेरादय-
स्तत्पश्यामि बलाबलं मम पुरस्सन्दर्शयन्त्वादरात् ॥ ३८ ॥

स्कन्दः—

इत्युक्तं त्रिदशेश्वरा हरिहराश्श्रुत्वा वचश्शाङ्करं
देवाग्रे महिमानमुत्तममहो प्राकट्यमीषुर्वृताः ।
गर्वोरीकृतमानसास्सुरगणाः प्रोचुर्हि नत्वा शिवं
स्वं स्वं कार्यमथाधिपत्यजनकं शृण्वन्तुतद्वाक्यजम् ॥ ३९ ॥

ब्रह्मा—

सृजामि विविधं जगत्सुरनरादिगन्धर्वकं
समुद्रगिरिगह्वरं नदनदीवनञ्चाप्यहम् ।
नमत्समसुराद्यकः प्रतिवदामि शम्भो तव
प्रसादसुमुखे मुखे विहितवेदजालोऽस्म्यहम् ॥ ४० ॥

विष्णुः—

अहं हि दैत्यप्रवराननेकान्निकृत्तचक्रारविदारिताजौ ।
चराचरं विश्वमिदं हि पालये न मत्समः कश्चिदिति प्रभो मतः ॥ ४१ ॥

रुद्रः—

मच्छूलमूलवरकोटिविलग्नधाराछन्नं तथान्ते प्रलायाधिकोऽब्धिः ।
चराचरं विश्वमिदं ममास्यगं फलालिवच्चर्वयामीदमिष्टम् ॥ ४२ ॥

इन्द्रः—

त्रिविष्टपनिविष्टितो मदकरीन्द्रकुम्भस्थित-
स्सुरेन्द्रवलयावृतः प्रकटरत्नमौलिस्फुरन् ।
प्रपादृतलपङ्कजः कुलिशपाणिरिन्द्रोऽस्म्यहम् ॥ ४३ ॥
सवृत्रमुरजम्भकप्रमुखवैरिमन्युः प्रभुः
प्रपीतवरसोमपा न हि कदाचिदन्यस्सुरः ॥ ४४ ॥

वायुः—

ममानिलचलाचला नदनदीनगाः कामगा
विलोलतरमर्णवाः प्रतिभवन्ति लोकाखिलाः ।
महाद्रुमकुलावलीप्रपतनोरुवायुस्सदा
सदेवमरुतां सुरैर्नरवरादिदेहस्थितः ॥ ४५ ॥

सूर्यः—

प्रचण्डतरमण्डलो मम मयूखजालैर्जग-
त्पयोधरपयः कणैरतिसुवृष्टवृष्ट्युत्थितैः ।
दिनोदयदिनान्तिमे प्रथितबीजधान्यादिभि-
र्जगत्परिपुषामि वै सकलमर्चिरादेः पंथा ॥ ४६ ॥

अग्निः—

शिखाशतविदीपितस्सुरगणेषु तृप्तिप्रदो-
मखादिषु सुसंस्थितः पितृगणेषु कव्यप्रदः ।
महार्णवमुखे स्थितो मम शिखासुपर्कं रसं
पवित्रितजगत्त्रयस्तव च फालनेत्रोऽस्म्यहम् ॥ ४७ ॥

यमः—

यमो ह्यघवतामहं नरकवर्गगर्वापहः
प्रचण्डतरदण्डधृक् समदृगस्मि सर्वत्र वै ।
म/ ममोत्तमभटारवैर्जगति जागताः पातका
नसन्ति भयभीतितस्तव शिवाङ्घ्रिदत्तेक्षणः ॥ ४८ ॥

कुबेरः—

धनैश्च धनवर्जितान्परिपुषामि त्वत्प्रेरित-
स्तवाब्जपदमित्रतामुपगतोऽस्मि यक्षाधिपः । म/

१. यमोऽसमवतामिति पाठः ।

समुच्चलितवर्णकः प्रथितगीतकाष्ठाधिपः
किमुत्तरमिदं मम प्रवणमेतदेवं मनः ॥ ४९ ॥

चन्द्रः—

सोमोऽहं सरसीरुहालिमलिनीमुत्फुल्लने मित्रक-
स्त्वन्मौलिस्फुरदम्बरे मधुरिमाकान्तिर्जटाजूटगः ।
पुष्णाम्योषधिजालमीश्वरतवाग्राहं प्रकाशास्पदो
नेत्रं तेऽग्र च वाममीश्वरदयापात्रं प्रशाद्ध्यग्र माम् ॥ ५० ॥

वरुणः—

अपां पतिर्नदीनदप्रवरनीरपाराब्धिक-
स्समुल्लसितकेतनस्स्फुरदपारगङ्गापतिः ।
अपुण्यजनपाशकृद्गणवरैश्च संसेवित-
स्तव प्रपदपूजको भवहरस्तदेवास्तु मे ॥ ५१ ॥

सर्वदेवाः—

विश्वेऽश्विनौ समरुतस्सर्व एव वयं सहेन्द्रेण पिबाम सोमम् ।
तवाज्ञया जगतां पालने रता विभो प्रमथाधिनाथ ॥ ५२ ॥

~~सूत उवाच~~— स्कन्दः।

इति सुरगणवचनं निशम्य शम्भुः प्रणतामरभूरुहोऽभ्युवाच देवान् ।
तदविनयजातवाक्यहर्षः प्रसमीक्ष्यैव वचोऽप्युदाररूपम् ॥ ५३ ॥

ईश्वरः—

एतन्मे तृणकाकृतिश्च पुरुषस्सङ्कल्पजः कल्पित-
स्तस्मिन् वो महिमारसं सुरवरास्सञ्चोदयन्तु द्रुतम् ।
तत्पश्यामि भवत्प्रसादमखिलं देवास्तरन्तु द्रुत-
मित्युक्त्वा जगदीश्वरोऽयमुमया शीघ्रं तिरोधत्त वै ॥ ५४ ॥

विष्णुब्रह्महरामरेश्वरयमा वाय्वग्नयः सूर्यका-
श्चन्द्रेशानवसुर्वरुणका वित्तेशदिक्पालकाः ।

तस्मिंस्तार्णनरे स्वकायुधवरैश्शक्तीभिरीशास्तदा
नो किञ्चित्प्रविचालितुं त्वथ भवन्नीशा अनीशास्तदा ॥ ५५ ॥
देव्या चापि समन्वितं गुणगणैरुद्दण्डभक्तिप्रभा-
श्चानम्रोत्तमशेखरास्सुरगणा भक्त्या प्रपन्ना हरम् ।
सम्यक्तुष्टुवुरब्धिजाततनयानाथादिकास्सर्वशो
विश्वेशं भुवनेश्वरं त्रिजगताराध्यं महेशं शिवम् ॥ ५६ ॥ ८/
स्रष्टुं पातुमथात्तुमप्यतिबलाद्दग्धुं च संशोषितुं
बद्धुं चालयितुं च दण्डमखिलं तत्प्लावितुं वा जले ।
भाग्यैः पूरयितुं च सोमजकरैर्नेशास्ततस्ते सुरा
लज्जानम्रमुखा महेशचरणं भक्त्या प्रपन्नास्तदा ॥ ५७ ॥

इति श्रीशिवरहस्ये प्रथमांशे देवानांशोधनं नाम
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

## देवकृतदेवीस्तुतिर्नाम त्रिपञ्चाशोऽध्यायः.

जैगीषव्यः—

अत्यद्भुतकथाश्रावि चरितं शङ्करस्य च। तिरोधानं गते देवे किञ्चक्रुस्सुरसत्तमाः॥ १॥
शिखिध्वज नमस्तेऽस्तु तन्मे विस्तरतो वद। नहि तृप्यामि त्वद्वक्त्रसुधानिष्यन्दधारया
पुनः पुनश्च श्रवणे भूयसीच्छा प्रवर्तते ॥ ३ ॥

सूतः—

इत्येतद्वचनं श्रुत्वा शाम्भवस्य स षण्मुखः। शृण्वतां गणवृन्दानां देवानां तु मुनीश्वरम्॥
सम्बोध्य प्राह तान्विप्रान्देवस्य चरितं तदा ॥ ५ ॥

कुमारः—

शृणुष्व चरितोदारं परमं धूर्जटेर्मुने। ततस्ते ब्रह्मविष्ण्वाद्यास्सेन्द्रास्सर्वे मरुद्गणाः॥
सूर्यचन्द्रास्सवरुणाः करुणासारविग्रहाम्। तुष्टुवुर्जगदम्बान्तामुमां शोभितभूषणाम्॥
कृताञ्जलिपुटास्सर्वे ध्यायन्तस्ते शिवां तदा ॥ ८ ॥

देवाः—

अयि गिरिनन्दिनि नन्दितमोदिनि विश्वविनोदिनि नन्दिनुते ।
गिरिवरविन्ध्यशिरोधिनिवासिनि शम्भुविलासिनि विष्णुनुते ॥ ९ ॥
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।
भगवति हे शितिकण्ठकुटुम्बिनि भक्तजनामितभूतिकृते ॥ १० ॥
अयि निजहुङ्कृतिमात्रनिराकृतधूम्रविलोचनधूलिकृते ।
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ११ ॥
समरविशोषितशोणितबीजसमुद्भवशोणितबीजलते ।
श्रीयुतशुम्भनिशुम्भमहाहवतर्पितभूतपिशाचतते ॥ १२ ॥
जयजय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।
अयि जगदम्ब कदम्बवनप्रियवासनिवासिनि सौधरते ॥ १३ ॥
शिखरिशिरोमणि तुङ्गहिमालयसौधनिजालयमध्यगते ।
मधुमधुरे मधुकैटभतर्जनजातससम्भ्रमब्रह्मनुते ॥ १४ ॥
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।
सुरघनघोषिणि दुर्धरघर्षिणि दुर्मुखहर्षिणि घोषरते ॥ १५ ॥
त्रिभुवनपोषिणि शङ्करतोषिणि कल्मषदूषिणि घोषरते ।
दनुजविशोषिणि दुर्मदरोषिणि सन्मुखपोषिणि सिह्मवहे ॥ १६ ॥
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।
धनुरनुषङ्गमनुक्षणसङ्गपरिस्फुटवङ्किनटत्कटके ॥ १७ ॥
कनकपिशङ्गनिषङ्गपृषत्करभटसङ्घहते ।
सुरसङ्घवचतुरङ्गवलक्षितिरङ्गघटद्रणरङ्गतटे ॥ १८ ॥
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।
अयि शिखण्डविखण्डनतुण्डवितुण्डितशुण्डगजौघकृते ॥ १९ ॥
रिपुगजगण्डगतोद्भटभण्डविदारणचण्डपराक्रमशौण्डमृगाधिपते ।
निजभुजदण्डविपाटितमुण्डनिवापितचण्डभटाधिपते ॥ २० ॥

जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ २१ ॥

जय जय देवि नगराजकुलोत्तारिणि कचकुचगमनजघनवदनकण्ठोदरकटितटोरुद्वयकरबाहुभूषणविराजिते सजलजलदनगमातङ्गपुलिनेन्दुशङ्खकरतलसिह्मरम्भास्तम्भारक्तनीरजमृणालनिभे तारामलमौक्तिकसरकीलितकन्धरे बिम्बाधरे मध्याष्टमीचन्द्रसमानभ्रूकृते तपनोडुपमण्डलायिततटाङ्के उद्यत्कविमण्डलनिभनासामुक्तामणिद्योतिते सर्वाभरणभूषिते त्वन्मायामोहितान् रक्ष रक्ष ॥ २२ ॥

इति संस्तुत्य ते सर्वे प्रणम्य भुवि दण्डवत् । बद्धाञ्जलिकरा मौलौ तदोचुस्ते सुरा इति ॥

देवाः—

त्वया सम्मोहितास्सर्वे न जानीमो महेश्वरम् । सर्वदेवसमं ज्ञात्वा कारणानां च कारणम्॥
पतीनां पतिमीशानं चेतनानां च चेतनम् । तस्यैव विरहात्सर्वे तृणमेतत्पुरोगतम्॥ २५॥
जगत्सृष्ट्यन्तकार्येषु स्फीतावपि महेश्वरि। किञ्चित्कर्तुमनीशा हि त्वां प्रपन्नास्सदाम्बिके
नमस्तेऽस्तु जगन्मातः प्रसन्ना भव नस्सदा। त्वयावृतमिदं सर्वं त्वया सम्पाल्यते जगत्॥
त्वय्येवान्ते लयं याति सदेवासुरमानुषम् । त्वं शक्तिः परमा देवी महेशार्धाङ्गभागिनी ॥
त्वत्प्रसादेन सर्वेषां मोहनाशो भवेच्छिवे । सर्वत्र रूढा शक्तिस्त्वं माया मायी महेश्वरः ॥
त्वां प्रपन्ना वयंसर्वे मोहितास्तवमायया। इत्युक्त्वा ब्रह्मविष्ण्वाद्याःप्रणम्य भुवि दण्डवत्
अथोत्थाय नभोमध्यं ददृशुस्सर्व एव ते । नीलतोयदमध्यस्थविद्युल्लेखेवभासुराम्॥३१॥
निष्टप्तकनकाभासां सर्वाभरणभूषिताम् । बालेन्दुबद्धमुकुटां सोमधामसमाननाम्॥ ३२॥
नीलेन्दीवरनेत्रांतां पवित्राकृतिसुन्दराम् । दृष्ट्वा पुनः प्रणम्येशीं रक्ष रक्षेति चाब्रुवन्॥
देवानां वचनं श्रुत्वा ह्युमोवाच सुरांस्तदा । प्रगल्भधीरमधुरं देवाज्ञानविनाशनम् ॥

देव्युवाच—

एष ब्रह्मैष आत्मा प्रणवपदगतो मातृमात्रादिहीनो
मायी मायात्वहं वै शक्तिरस्मीह देवाः ।
सर्वेशश्शक्तिमांश्च प्रकृतिपरवशो विश्वमेतद्विचित्रं
विश्वोद्भूताभवन्तस्सकलभवहरं तम्भजध्वं महेशम् ॥ ३५ ॥
यतो वै हरिब्रह्मरुद्रेन्द्रपूर्वं प्रजातास्थ यस्मिंस्स्थिता एव नूनम् ।

भवद्भिस्ततं लोकजालं किलेदं प्रपद्यध्वमीशं भजध्वं महेशम् ॥ ३६ ॥
शक्तिस्त्वहं यस्य जगत्समग्रं करोमि लीलामिषतां भवद्भिः ।
भवप्रसादेन भवैकमोचनं ममैव शक्तिं शरणं प्रयात ॥ ३७ ॥
न तस्य कार्यं करणं शिवस्य सनातनो नित्यशुद्धः पुराणः ।
यन्मायया मोहितास्थ प्रजेशास्तस्यैवेतद्विरहात्सर्वमेवम् ॥ ३८ ॥
व्यर्थं भूयात्तार्णकस्योपमानात्सर्वे देवा रुद्रमीशानमारात् ।
द्रुतं तमिष्टं गगनान्तरस्थं सर्वेन्द्रियेणोपरतं भजध्वम् ॥ ३९ ॥

स्कन्दः—

इत्युक्त्वा सा जगन्माता तिरोधत्त सुरान्प्रति। देवा देव्युदितं श्रुत्वा सर्वे प्राञ्जलयस्तदा
विभूतिभूषितैर्गात्रैस्त्रिपुण्ड्रपरिशोभिताः । कृत्वा व्रतं पाशुपतं कृतलिङ्गार्चनास्सुराः ॥
रुद्राध्यायजपेनैव पञ्चाक्षरपरास्सदा । पञ्चास्यध्यानसंसक्तास्संवत्सरमतन्द्रिताः ॥
अदृष्ट्वैव महादेवं जगतां जननीमपि । ऊर्ध्ववाहव ईशानं तुष्टुवुः परमेश्वरम् ॥ ४३ ॥
भक्त्या त्वनन्यया देवाः प्रवद्धकरसम्पुटाः। रौद्रैरृक्सामसम्भूतैस्तथा/र्वशिरोगतैः॥ ४)

देव्युवाच—

प्रणवप्रवणेषु ते कृपाणा भीतिंविनास्य सुकृतैकरसार्णवेषु ।
निर्वाणकारणभवार्णवकर्णधारत्वद्वाच्यशब्दमभिधातृगणाश्श्रयामः ॥ ४५ ॥
त्वामग्निमीलइति मौलिकृचाभिधत्ते वेदोदितस्तदितरस्त्विषमूर्जमाह ।
त्वामन्धसां पतिमनुत्तममीशितारं साम्नादिमेऽप्यवनहेतुमथाग्निमाह ॥ ४६॥
त्वां शम्भुवञ्जलमयं तनुवं तवेश साक्षादथर्वणगिरा प्रकटाष्टमूर्ते ।
नीरूपवर्णकथने तव ते निवृत्ता वेदाश्चतस्रकमहाशिखशाखभेदाः ॥ ४७ ॥
वाचा मनस्त्वतिगतं भगवन्तमेव भक्त्या तवाष्टगणितैस्तनुभिस्स्तुवन्ति ॥

इति श्रीशिवरहस्ये प्रथमांशे देवकृतदेवीस्तुतिर्नाम
त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

## देवकृतोपनिषत्स्तुतिर्नाम चतुःपञ्चाशोऽध्यायः.

देवाः—

यो वै रुद्रस्स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ॥ १ ॥
यो वै रुद्रस्स भगवान् यश्च रुद्रस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् या चोमा तस्मै वै नमो नमः ॥ २ ॥
यो वै रुद्रस्स भगवान्यश्च विनायकस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च स्कन्दस्तस्मै वै नमो नमः ॥ ३ ॥
यो वै रुद्रस्स भगवान्यश्चेन्द्रस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान्यश्चाग्निस्तस्मै वै नमो नमः ॥ ४ ॥
यो वै रुद्रस्स भगवान्यश्च वायुस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान्यश्च सूर्यस्तस्मै वै नमो नमः ॥ ५ ॥
यो वै रुद्रस्स भगवान्यश्च वरुणस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान्यश्च यमस्तस्मै वै नमो नमः ॥ ६ ॥
यो वै रुद्रस्स भगवान्यश्च निऋतिस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च ईशानस्तस्मै वै नमो नमः ॥ ७ ॥
यो वै रुद्रस्स भगवान् यश्च कुबेरस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान्यश्च नक्षत्राणि तस्मै वै नमो नमः ॥ ८ ॥
यो वै रुद्रस्स भगवान् यश्चाष्टौ ग्रहास्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान्यश्च ऋषयस्तस्मै वै नमो नमः ॥ ९ ॥
यो वै रुद्रस्स भगवान्यश्चाष्टौ वसवस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च द्वादशादित्यास्तस्मै वै नमो नमः ॥ १० ॥
यो वै रुद्रस्स भगवान् यश्च एकादशरुद्रास्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च पृथिवी तस्मै वै नमो नमः ॥ ११ ॥
यो वै रुद्रस्स भगवान्यश्चापस्तस्मै वै नमो नमः ।

योो वै रुद्रस्स भगवान् यश्च तेजस्तस्मै वै नमो नमः ॥ १२ ॥
यो वै रुद्रस्स भगवान् यश्च वायुस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्चाकाशस्तस्मै वै नमो नमः ॥ १३ ॥
यो वै रुद्रस्स भगवान् यश्च भूस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च भुवस्तस्मै वै नमो नमः ॥ १४ ॥
यो वै रुद्रस्स भगवान् यश्च सुवस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च महस्तस्मै वै नमो नमः ॥ १५ ॥
यो वै रुद्रस्स भगवान् यश्च जनस्तस्मै वै नमो नमः ।
यौ वै रुद्रस्स भगवान् यश्च तपस्तस्मै वै नमो नमः ॥ १६ ॥
यो वै रुद्रस्स भगवान् यश्च सत्यं तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च प्राणास्तस्मै वै नमो नमः ॥ १७ ॥
यो वै रुद्रस्स भगवान् यश्च मनस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च सर्वं तस्मै वै नमो नमः ॥ १८ ॥
यो वै रुद्रस्स भगवान् यश्च कालस्तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च मृत्युस्तस्मै वै नमो नमः ॥ १९ ॥
यो वै रुद्रस्स भगवान् यश्च भूतं तस्मै वै नमो नमः ।
यो वै रुद्रस्स भगवान् यश्च भविष्यत्तस्मै वै नमो नमः ॥ २० ॥
यो वै रुद्रस्स भगवान् यश्च वर्तमानं तस्मै वै नमो नमः ।
ओमादावन्ते च भूर्भुवस्स्वस्त्रिरोङ्कृतिः ॥ २१ ॥

ब्रह्मैव त्वं त्रिधोर्ध्वस्त्वं गतिः पुष्टिर्महेश्वरः । विश्वश्च विश्वातीतस्त्वं हुतं प्रहुतमेव च॥
कृतं चाकृतमेते च परमं च परायणम् । नारायणादिजनको ह्यर्यम्णो वरुणस्य हि ॥
जनिता त्वं तथा वायोर्द्यावाभूम्योर्महेश्वरः । सर्वेशस्सर्वसाक्षी च सर्व एव त्वमेव हि॥
अग्राह्यस्सर्वभूतेषु सर्वेन्द्रियगुणातिगः। अलिङ्गोस्यशरीरस्त्वं व्यापकश्च सनातनः ॥
वामनं त्वां महादेवं सर्वेदेवा उपासते । त्वत्तो जातं जगच्छम्भो स्थितं त्वय्येव लीयते
त्वत्तो नास्ति पृथक्किञ्चिन्न भिन्नं परमार्थतः ॥ २७ ॥

अजां मायां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम् ।
अजस्त्वमेको जुषमाणोऽनुशेषे जहात्येनां भुक्तभोगामजस्त्वम् ॥ २८ ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तवावयवसम्भूतैर्व्याप्तं सर्वमिदं जगत् ॥
नेह नानास्ति किञ्चिद्वै त्वदधिष्ठितमेव हि । त्वामवज्ञाय दुर्मेधाः कृतकृत्योऽभिमन्यते॥
न साम्परायं प्रविदाम बाला मूढा वयं केवलं त्वद्विहीनाः ।
किञ्चित्तृणं चालयितुं च नेशास्त्वं नो गतिः परमं चासि शम्भो ॥ ३१ ॥
त्वयावृतं लोकमिदं समग्रं को वा हीनं चेतते त्वद्विहीनः ।
एको रुद्रस्त्वं हि सर्वस्य कर्ता विश्वातीतः परमश्वेतकोऽसि ॥ ३२ ॥
सर्वभूतातिगश्चात्मा कोशातीतः परात्परः । महाग्रासस्त्वमेवेश मृत्युस्त्वदुपसेचनः ॥
ओदनं तव भूतेश ब्रह्मक्षत्रं जगत्तथा । ब्रह्मपुच्छं प्रतिष्ठा त्वं शान्तिरक्षरमेव च ॥
हृदिस्था देवतास्सर्वा हृदि प्राणे प्रतिष्ठिताः । हृदयं पुरुषोऽसि त्वं तिस्रो मात्राःपरश्च सः
ओङ्कारः प्रणवो व्यापी ह्यनन्तोऽनन्तविक्रमः। तारं सूक्ष्मं वैद्युतस्त्वं शुक्लं सर्वशरीरगम्
ईशानो भगवान् रुद्रो महादेवस्त्वमीश्वरः । परं ब्रह्म परं धाम परः पारः परायणः ॥
शूरो वीरः पुरुषो भूतसंस्थो विश्वो विश्वेशः प्राणदश्चाव्ययात्मा ।
चक्षुषश्चक्षुश्श्रोत्र एव त्वमीश मनसो मनो बुद्धेर्बोद्धा त्वमेव ॥ ३८ ॥
पतिः पतीनां पशवो वयं चाप्यस्मानहो पासि तथात्सि देव ।
त्वदुद्भवं सर्वमीशस्त्वमेको नानेव भासि पुरुषस्य मायया ॥ ३९ ॥
तिलेषु तैलं दधिनीव सर्पिरापस्स्रोतस्स्वरणीषु वह्निः ।
एवं प्रोतं त्वय्यद्वितीये महेश त्वज्जं त्वल्लं त्वदनं चैतदेव ॥ ४० ॥
न विद्यते गुणकर्मादि नामरूपादिशक्तिर्ज्ञानशक्त्या विभिन्नः ।
हृदयस्त्वं भूतभव्यः पुराणो ह्येको वीरो वेदगुणैकवेद्यः ॥ ४१ ॥
ओङ्कारादिस्वररूपो महेश विधामा त्वं वरणीयस्तथाणुः ।
महान् जेता जिग्यश्चापराजितो ह्यभ्रावकाशः खश्च कश्च त्वमेव ॥ ४२ ॥
विभ्राट् सम्राट् भूमधामा त्वमेव पितासि माता भ्रातृकश्चादिवेद्यः ।
रुजां हरस्त्वं भिषक्पापहीनो ह्यपाणिपादो निर्विकारस्त्वमात्मा ॥ ४३ ॥

स्वयं भानः पर एको ज्योतिरेव त्वत्तो न ओजस्त्विष्टतमोऽस्ति देवः ।
त्वं न दिवा नैव रात्रिस्त्वमीशस्त्वं सीमा विश्वतश्चक्षुरीशः ॥ ४४ ॥
न वेदान्ता नापि वेदाश्च ते वै तव ज्ञानं मनसैवाद्य वृत्तम् ।
आकाशः पृथिवी सलिलं च वायुस्तेजश्चासि प्रथितं ते जगच्च ॥ ४५ ॥
विश्वस्य नेता विश्वभर्ता त्वमीशस्तव ज्ञानात्सर्वमेवेह विन्देत् ।
तवाज्ञानान्मोहितास्सर्व एव तव प्रसादादम्बया बोधितास्स्मः ॥ ४६ ॥
अवस्थातीतः पर आत्मा त्वमेव ब्रह्मैव त्वं संसरस्यादिरूपः ।
विशोको विमृत्युरजिघृत्सोऽपिपासश्शरीरहीनोऽप्यजरः पुराणः ॥ ४७ ॥
ऋतं सत्यं नामरूपातिगस्त्वं तवामेयरूपं को हि वेदेदमेव ।
ऋचो अक्षरे परमस्त्वं महेश नान्यत्वत्तो यद्भवेदेदमार्तम् ॥ ४८ ॥
नान्यद्दृक्पश्यति पश्यकस्त्वं दृष्टेर्द्रष्टा वाच्यवाचादिहीनः ।
विद्याधीशस्स्वर एको महेशस्त्वमेव त्वं वेद योऽसीश एव ॥ ४९ ॥
नमस्ते हरसे शोचिषे ते नमस्ते अस्त्वर्चिषे देवदेवविश्वाधीशश्शङ्करो वेदवेद्यः ।
अन्यत्तपन्तु हेतयो घोररूपा भक्तेषु त्वं शिवो भव शत्रूनस्माकं जहि शूलेन शम्भो॥
य इमं विश्वं भुवनं पासि जुह्वदृष्टिः प्रथमो वो मनःपद्मसंस्थः ।
त्वमाशिषं द्रविणं धेहि शम्भो विश्वकर्ता मनसा सम्प्रदृश्यो धाता विधाता परमेष्ठ्यसन्दृक्
तेषामिष्टानि तव पादपूजया सर्वे लभत्येव न हि संशयोऽत्र ।
त्वं नो माता त्वं पिता चोपनेता माता बन्धुः परमोवै गुरुस्त्वम् ॥ ५२ ॥
त्वं देवेषु प्रथितो नामतस्त्वेक एवेदं रुद्रस्त्वा मनाक्पूर्वसूराः ।
वेत्तुं च त्वां नूतनाश्चापि शम्भो ह्यपूतपूर्तं जगदेकं त्वयार्तम् ॥ ५३ ॥
यद्भूतजालं निखिलं वै विसृष्टमेतादृशं त्वां
न विदन्ति केचिद्दृष्ट्यान्तरेण परिपश्यन्ति मूढाः ।
मायानीहारप्रावृताशास्त्रजन्याः असूस्तृप्या भोगभाजो भुवः के ॥ ५४ ॥
यज्ञैर्दानैः कामकामैश्च वाला दिवः परः पृथिव्यास्त्वं परश्च ।
देवासुरैस्त्वं पुरो मूढगर्भो भूतानां त्वं महिमा गर्भरूपः ॥ ५५ ॥

कस्त्वां वेद भूतवर्गैर्विहीनं वेदैर्विश्वं यत्र लीनं त्वयीशे ।
अज त्वन्नाभौ जगदेतद्विचित्रं मध्येऽर्पितं यस्मिन् विश्वं भुवनं च त्वमेव ॥
ततो गन्धर्वा ओषधीशोऽपि शम्भो सर्वेन्द्रियाणि मनसा त्वां नमामः ।
हृदा पश्यन्ति मनसा मनीषिणो ये ब्रह्ममन्वान उपासते त्वाम् ॥ ५७ ॥
त्वामीदृशं गूढमनुप्रविष्टं सहैव सन्तं न विजानन्ति देवाः ।
विश्वस्य चक्षुर्विश्ववक्त्रोरुबाहुर्विश्वस्पतिर्भुवनस्यास्य गोप्ता ॥ ५८ ॥
द्यावाभूमी त्वत्त एवेद्धरश्मिस्सूर्यो भ्राजति खे सोमतारैर्गृहैश्च ।
नान्ये जानन्ति तव भक्त्या विहीना ह्यजातं त्वामीशं शरणं प्रपन्नाः॥५९॥

~~सूतः~~— स्कन्दः /

इत्थं संस्तुत्य ते सर्वे दण्डवत्सुरसत्तमाः । प्रणेमुः परमात्मानं ददृशुर्देवतागणाः ॥
तेजोराशिं महादेवं गगनस्थं सनातनम् ॥ ६१ ॥
वडवानलवाडबेन्द्रमुख्यैर्वडवाजानिविडौजसार्चिताङ्घ्रिम् ।
बलिनन्दनपूज्यबाणलिङ्गलोलं बलमानर्च्य सुबिल्वपल्लवैः ॥ ६२ ॥
बलप्रमथनं शिवं बलिबलारि बाणार्चितं
बिलेशयफणामणीविधृतपाणिपद्माङ्कितम् ।
बलोत्कटसुरासुरैर्नमितबालचन्द्रार्धधृक्
धृताबलवराङ्गकं हरिसुबाणमैक्षन् सुराः ॥ ६३ ॥

इति श्रीशिवरहस्ये प्रथमांशे देवकृतोपनिषत्स्तुतिर्नाम
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

## देव्युपनिषत्प्रतिपादनं नाम पञ्चपञ्चाशोऽध्यायः.

स्कन्दः—

तदा देवा महादेवं गगनस्थं सनातनम् । उमया वरदं देवं मन्दस्मितमनोहरम् ॥ १॥
उत्फुल्लहल्लकलसन्मालाशोभितकन्धरम् । सुधांशूग्रांशुकीलाभिर्विकासितदिशामुखम्॥
कुन्दाच्छशारदाभ्राभघनकान्तिशरीरकम् । त्रिणेत्रशोभिवक्त्रोद्यन्नागकुण्डलमण्डितम्

कुण्डलीशफणाभ्राजत्कुण्डलाननमण्डितम् । कपर्दतटवद्धेन्दुगङ्गाप्लावितमौलिकम् ॥
शूलामललसद्बालमृगपाणि मनोहरम् । आशावसं महात्मानं रत्नकङ्कणमण्डितम्॥ ५॥
करटित्वक्कटितटवद्धखङ्ग विराजितम् । देव्या च संयुतं चारुवदनस्मेरकान्तया ॥ ६ ॥
धम्मिल्लमल्लिकामोदपङ्कजोत्तमगन्धया । सिन्धूरतिलकाशोभिफालयाच्छमणित्विषा॥
नानालङ्कारसङ्कप्तत्तत्तदङ्कैकशोभया । कोटिकन्दर्पदर्पघ्नः कोटिसूर्यशताधिकः ॥ ८ ॥
कोटिचन्द्राधिकतनुस्तनुहीनोऽपि शङ्करः । घनघोषेण देवांस्तानुच्चैर्घोषो महेश्वरः ॥
गम्भीरया मधुरया वाचा संह्लादयंस्तदा । प्राह तान्प्रमथाधीशस्सुराधीशान् शिवासखः

ईश्वरः—

भोभो सुरोत्तमास्सर्वे ब्रह्मविष्णुमहेश्वराः । यमानिलानलब्रध्नमरुतो वासवोऽश्विनः॥
सूर्यचन्द्रेन्द्रवरुणधनाधीशा दिशाधिपाः । शृण्वन्तुपरमं मेऽद्य वचनं सुन्दरं सुराः ॥
कृतयत्ना भवन्तो हि चास्मिंस्तार्णककल्पिते । पुरुषे सर्वशक्त्यापि भवद्भिरुरुविक्रमैः॥
जगत्पालनदक्षैश्च न किञ्चिदुदभूत्सुराः । दग्धुं स्रष्टुं तथादातुमत्तुं नाशयितुं द्रुतम् ॥
मम तेजोविहीनाश्च जडाहङ्कारमाश्रिताः। मच्छक्तिकरुणाहीनाश्शक्तिहीनाश्च साम्प्रतम्
इयं ममाङ्कसंस्था या ह्युमाख्या शक्तिरुत्तमा । विश्वनिर्माणभरणशिक्षणेयं विचक्षणा॥
दक्षशैलेन्द्रदुहिता कारणैश्च सुरैस्स्तुता । न तस्याः कारणं कार्यमजैवैषा सनातनी ॥
एतस्याश्शक्तिवैचित्र्यं भवन्तस्सर्व एव हि । ममैषा परमा मूर्तिरेतस्या विरहे मम ॥
न किञ्चिदिह कर्तव्यमकर्तासङ्ग एव हि । अहमेको निराधारो मदाधारात्वियं सुराः॥
भवतां कारणं देवाश्शिवेयं चित्रकारिणी । एतस्याश्शक्तियोगेन शक्तिमानस्मि सर्वधा
परा मे परमा शक्तिस्स्वभावादेव वर्तते । कालं स्वभावं नियतिमिच्छामेकेवदन्त्यपि ॥
भूतसङ्कन्तथैवान्ये चर्षयः परिमोहिताः । एतस्याश्शक्तिवैचित्र्यं जगदेतच्चराचरम् ॥
एनां प्रणमत क्षिप्रमेतस्याः कृपया सुराः । विक्षेपावरणाभ्यां च शक्तिभ्यां वर्जिता यदि
तावदेव चिरं देवा यावद्विक्षेपशक्तितः । न मुक्ता मे परं ज्ञानं प्राप्यापि सुरसत्तमाः ॥
किन्त्वावरणनिर्मुक्ता भविष्यध्वं कृपाधिकाः । भवतां सर्वथा ज्ञानं मत्प्रसादेन सत्तमाः
यावदावर्तनं देवास्सज्ञानाश्चाधिकारिणः । प्राप्नुवन्तु भवन्तो हि वेदवेदान्तसम्भवम्॥
ज्ञानं मे पारमैश्वर्यं देव्याश्च कृपया सुराः । तदा देवाश्शम्भुवचो निशम्य परमार्थतः ॥

जानुभ्यामवनिं गत्वा तुष्टुवुर्जगदम्बिकाम्। देवदेवप्रसादाय भक्त्या बद्धकरास्सुराः ॥

देवाः—

शरच्छशिसमानने जितगजेन्द्रयाते शिवे
सुनीलजलदोपमोज्वलकचे सुबिम्बाधरे ।
सुनीलनयनाब्जलोत्पलसमाननेत्राञ्चले
दयारसघने शिवे सदयमद्य नः पालय ॥ २९ ॥

सुरासुरमुनिव्रजैर्नतपदाम्बुजे शङ्करि
महेश्वरमहाङ्कगे विकचमल्लिधम्मिल्लके ।
भवानि भवनाशिनि हरितभक्तपापव्रजे
नमाम पदपङ्कजं तव विमुक्तिदं केवलम् ॥ ३० ॥

कदम्बवनसंस्थिते मणिकदम्बकान्तिप्रिये
शरच्छशिसुबिम्बवत्प्रथितवक्त्रबिम्बाधरे ।
सुगन्धतरबन्धुरायितसुगात्रिताम्भोरुहो-
ज्वलन्नयनकोटिके नतगुहादिहेरम्बके ॥ ३१ ॥

नगेन्द्रकुलकन्यके विधृतसामिसोमालके
महेश्वरि सुयल्लके ह्यसुरजालसम्भल्लके ।
नमाम पदपल्लवं तव सुगल्लमौलिस्फुर-
त्सुरोत्तमकिरीटकज्वलितपापमल्लापहम् ॥ ३२ ॥

कुलाचलकुलं त्वया तिलककान्तमीशे कृतं
कुलाचलभयाश्रयात्कुलिशिताग्रसङ्के[1] शिवे ।
कुलीनजनमानसाश्रयणपादपद्मोज्वले
प्रसीद पवनानलैर्नतपदाम्बुजे शङ्करि ॥ ३३ ॥

सूतः—

देवानां संस्तवं श्रुत्वा प्रहृष्टा परमेश्वरी । प्राह प्रसन्ना गम्भीरं देवान्सुमधुरं गिरम्॥

१. शयाश्रयादिति पाठः ।

देव्युवाच—

स्तुत्या च भवतां देवाःप्रसादसुमुखात्त्वहम्। ददामिवाञ्छितं सर्वं शिवज्ञानमिदं सुराः
मज्ज्ञानेन परां शान्तिमधिगच्छत सुव्रताः। अहं मानं परित्यज्य शिवसार्वात्म्यवेदिनः
विमुक्ताः पशवो यूयं मन्मायाशक्तिवैभवात्। अहमेवाखिलाराध्या ह्यहं ध्येयाखिलैरपि
संविच्च सदसच्चापि चाहं विश्वमिदं ध्रुवम्। मन्मायया मोहितास्स्थ ह्यहमेतद्भवाभवम्
अहमेव स्वयमिदं ददामि ज्ञानमैश्वरम् ॥ ३९ ॥

अहं विश्वं भुवनं चेतयामि ह्यहं विश्वेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्व ॥ ४० ॥
अहं दधामि द्रविणं हविष्मते सुवीर्याय यजमानाय सुन्वते।
परो दिवाहं परयेनापृथिव्यां परंपरा हि प्रथमा पृथिव्याम् ॥ ४१ ॥
एषोऽन्तर्याम्यमृतः पुराणस्सदाजनानां हृदये सन्निविष्टः।
एनमात्मानं गूढमनुप्रविष्टं हृदा पश्यन्ति मनसा मनीषिणः ॥ ४२ ॥
एषभूतपतिरेषसेतुर्विधरणो लोकानामसम्भेदाय।
एष सुप्तेषु जागर्ति भूतम्भूतं पुरुषो निर्मिमाणः ॥ ४३ ॥
एषोऽन्तरादित्ये ह्यमृतो हिरण्मयः पुरुषो दृश्यते शिवः।
एष धाता विधाता च स्वराट् सम्राट् प्रजापतिः ॥ ४४ ॥
एष दिव्यो देव एकः पुराणो सङ्गिष्वसङ्गो गुणनामकर्मभिः ॥ ४५ ॥

एष एव हि भूतात्मा भूते भूते व्यवस्थितेः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्
जलस्य चलनादेव यथाचलति भास्करः। तथैष सर्वभूतेषु तद्धर्मैर्नैव लिप्यते॥ ४७॥

अलिङ्ग आकाशसधर्म एषो नान्तो न चादिर्न च मध्यमेषः।
जगद्गतोऽयं न जगद्विचित्रमेषोऽखिलाधार उरुक्रमस्सदा ॥ ४८ ॥
विशेषहीनश्च कविः पुराण एष स्वतन्त्रः पुरुषः पुराणः।
गूढेषु गूढः परपारपारस्सदुर्दर्शोयोगयुक्तैश्च भूयान् ॥ ४९ ॥
सहैव संस्थो भवतां वै निलिम्पाः।
नजानन्ति सर्वे हृदा भासमानं सदाभास्यभासं महोक्षाद्विहीनम् ॥ ५० ॥

अस्यैव हि प्रकृतिश्चास्मि देवा न मां जानते ये सदा दुःखभाजः ।
प्रभास्मीह देवी शशी सूर्यऋक्षे ऋषौ ग्रहाणां परमास्थितश्च ॥ ५१ ॥
न चावयोर्भेदजालं कदाचिन्माया चाहं ह्येषमायी महेशः ।
भावग्राह्यो ह्यनीडात्मा भावाभावकरश्शिवः ॥ ५२ ॥
कलाविदं पुरुषं देवमीड्यं निचाय्यैनं शान्तिमत्यन्तमेति ।
एप आत्मा तपसालोकनीयो नान्यैर्धर्मैरस्य लिङ्गं न चैव ॥ ५३ ॥
यस्यैप आत्मा वृणुते तनूं स्वां तस्य प्रसादेन हितस्य लाभः ।
यस्यैव लाभान्न परं लाभमीष्टे जनस्सुरा ज्ञानमेतस्य दुर्ज्ञम् ॥ ५४ ॥
पुराविदः कवयो ये मनीपिणो ज्ञात्वाप्येनं निष्प्रकम्पा महेशम् ।
तरन्ति शोकं च पृथक्पृथग्जना न जायते नित्ययुक्ता गुणेषु ॥ ५५ ॥
तथेन्द्रियाधारमनन्तरूपं नीरूपरूपं परमाकाशमेनम् ।
विश्वक्प्रपश्चेषु पुरीशयं स्थितं वेदान्तसङ्घैरपि ष्टुज्यमाणः ॥ ५६ ॥
रसं रसानां परमास्वादनीयमनास्वादं रसवर्जं सुगुप्तम् ।
तुरीयमिन्द्रं सततोदितं गुणैर्गुणातीतं विप्लुषन्दिव्यधाम ॥ ५७ ॥
एषोऽनन्तो महिमाधार ईशो भूमा सीमा सार एकोऽद्वितीयः ।
नानैवास्ति महिमायं प्रतिष्ठा कविः प्रधानो रसवर्जोऽयमात्मा ॥ ५८ ॥
एष ब्रह्मैष एवेन्द्र एष सर्वं चराचरम् ।
एष आत्मापहतपाप्माविरजो विशोको विमृत्युरजिघृत्सोऽपिपासः ॥ ५९ ॥
सत्यकामोऽगुणो ह्येष बृहद्धामायमीश्वरः ।
एषोऽशरीरो विश्वकर्ता गुणेश एष देवश्शीर्यमाणैर्नशीर्णः ॥ ६० ॥
अरजोऽयममृतो वै विशोकश्शोकातिगो जातिधर्मैर्विहीनः ।
एष देवैर्वेदसङ्घैश्च विप्रैरभिष्टुतोऽप्रतर्क्यो हीन्द्रियैश्च ॥ ६१ ॥
एषोऽनन्तश्चेष्टते देहजालैर्यथोर्णनाभिस्सृजते तन्तुजालम् ।
एष आदित्ये तपति तेजसेद्धः एष विप्रैर्मखजालैश्च तुष्टः ॥ ६२ ॥

१. जानते इति पाठः ।

यः पाति सोममममृतस्य नाभिं कालातिगः पाति विश्वं सदैव ।
अस्मद्भिन्नं नाणुरस्तीह किञ्चित्स एष भर्ता मम देवः पुराणः ॥ ६३ ॥
नीरूपरूपोऽप्ययमात्मा महेशो नीलग्रीवश्शिपिविष्टश्शाश्वतोऽयम् ।
न हन्यते हन्यमाने शरीरे दिव्यो देवोह्येष देवः पुराणः ॥ ६४ ॥
तं ब्रह्मवन्वान उपासते परं बुद्धीन्द्रियातीतमनौपमं शिवम् ।
नान्तः प्रज्ञं न वहिः प्रज्ञमीशं नोभयतः प्रज्ञमर्हत्तमं च ॥ ६५ ॥
विश्वस्य स्रष्टारमनेकरूपं विश्वस्यैकं परिवेष्टितारम् ।
गुहाहितं गह्वरेष्ठं पुराणं त्ववस्थातीतं प्रणवं चादिमेकम् ॥ ६६ ॥
महं महान्तं परमात्मानमीशमणोरणीयांसमिदं ततं च ।
विभ्राजमानं भूतवर्गेष्वसङ्गं वेलातिगं स्वप्रभाभासमानम् ॥ ६७ ॥
वालाग्रमात्रं हृदये प्रतिष्ठं जीवाभासं मन्यमानैश्च मूढैः ।
न त्वेष जीवो न शिवश्चादिकर्ता यस्मात्परं नापरमस्ति किञ्चित् ॥ ६८ ॥
बृहत् ब्रह्म शुक्लं ऋतं सत्यमीशं प्रमोदं महज्ज्ञानमानन्दमेकम् ।
य एनं विदुरमृतास्ते भवन्ति ह्यथेतरे दुःखमेवाविशन्ति ॥ ६९ ॥

स एष परमानन्दो प्यानन्दो ब्रह्म तत्परम् । अस्यैवानन्दमात्रा हि भवन्तश्च सुरासुराः
अयमेव परा काष्ठा स ब्रह्म स शिवस्स्वयम् । वेदपर्वतजालोत्थमन्त्रैः क्लृप्तोऽयमेव हि॥
इत्युक्त्वा सा जगन्माता देवानां पश्यतां तदा । प्राह देवं महादेवमनादिमजमव्ययम्॥

स्कन्दः—

इत्यम्बावचनेन नन्दितमनास्स्वान्तास्सुरास्ते तदा
नानावेदशिरोगतैश्च विविधैर्वाक्यैस्तदा हर्षिताः ।
तां देवीमगजां गिरीशरमणीमानन्दधारावृताः
पश्यन्ति श्रुतिलोचनैः परिवृतं देवं नभोमध्यगम् ॥ ७३ ॥

इति श्रीशिवरहस्ये प्रथमांशे देव्युपनिषत्प्रतिपादनं नाम
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

१. अपाति इति पाठः ।

देवकृतक्षेत्रपूजनं नाम षट्पञ्चाशोऽध्यायः.

मूलः— स्कन्दः :—

कुक्षित्रिलोकं देवेशं महोक्षस्थं हि पार्श्वगम् । प्राञ्जलिर्विनयोपेता नयादिगुणसंयुता ॥

प्राह देवी विरूपाक्षं विशालाक्षी महेश्वरी ॥ २ ॥

देव्युवाच—

देवाः किलैतद्भगवत्प्रसादतो ममैव ते ज्ञानमहोमहार्थदम् ।

तवात्र तोषात्सुहृदोऽद्यभेदनं समाप्नुवन्देघसङ्घाः कृतार्थाः ॥ ३ ॥

भवाननादिः पुरुषः पुरीशयो गुहाहितो गह्वरेष्ठः पुराणः ।

गुणातिगो गुणभूतेष्वसङ्गोह्यशीर्य आत्मा परमः पावनस्त्वम् ॥ ४ ॥

नान्यस्त्वत्तो भेदभानं न चास्ति कविर्मनीषी परिभूस्स्वयम्भूः ।

तथापि लोकायन उत्तमोऽसि स सर्गजैरुद्वहसीह देहान् ॥ ५ ॥

विभुर्महान्द्यां दिवं रोदसी खं रोदस्यतो रुद्र ईशोऽद्वितीयः ।

अकामकामो महिमा त्वं हि भूमा सीमा स दिव्यो देव एको ऋपिस्त्वम्॥

अजोऽव्ययस्तव वक्त्रं महेश प्रपन्नास्सर्वे दक्षिणं घोररूपम् ।

एते सर्वे पशवः कामकामास्तेषां त्वं पाशं छेत्तुमर्हस्यतोऽद्य ॥ ६ ॥

पयोनिधित्याग एको हि नित्यो नित्यानां चेचेतनानां च चेताः ।

पतिः पतीनां प्रथमो विद्युदीशस्त्वत्तो बभूवुर्भुवनस्य गोपाः ॥ ७ ॥

मनोवाचामतिगस्त्वं हि गोप्ता सर्वस्सर्वेषां शर्व सर्वादखर्वः ।

बभ्रुर्मधुः पिङ्गलो विश्वनेता सहस्रभास्तनकाः प्रीतिमीयुः ॥ ८ ॥

एते प्रसादाभिमुखास्त्वयातो लोकेषु लोक्याः पालनीया महेश ।

तवैश्वर्यादाप्तकामा भवन्तु नान्यत्तेषां त्वत्त एवाखिलेषु ॥ ९ ॥

सम्प्राप्तास्ते पारमैश्वर्ययोगं मुच्यन्तु ते मम मायादिपाशैः ॥ १० ॥

स्कन्दः—

तदादेव्यावचश्श्रुत्वाप्राहदेवोघृणानिधिः । प्रणतानमरान्त्सर्वान्विष्णुब्रह्मेन्द्रपूर्वकान्॥

हस्तमस्तकसंयोगं कृत्वा देव उमाधवः । गिरा प्राह ततो देवाञ्छक्तिं वै पातयं स्तदा ॥

ईश्वरः—

देव्यानया बोधिता यूयमेवं वेदान्तविज्ञानसुनिश्चितार्थाः ।
मद्ध्यानयोगेन सुरोत्तमाश्चिरं सम्प्राप्स्यथ ज्ञानमज्ञैर्दुरापम् ॥ १३ ॥
न चक्षुषा दृश्यमिदं च खे सदा न वेदवादैर्न च शास्त्रतर्कैः ।
तपसैवानुदृश्योऽहमात्मा गुरुप्रसादेन शिवप्रसादात् ॥ १४ ॥
भिद्यन्ते वै विपुला ग्रन्थयो वः अनादिसिद्धाः को हि वेदेदमेवम् ।
न साम्परायो भवतां बालकानामनाद्यविद्याविषयैकवर्त्मनाम् ॥ १५ ॥
यूयं मया कल्पितैवास्थ लोके लोकाधीशा यावदावर्तनं वः ।
तावत् ज्ञानं प्राप्य मध्ये बलीनां भविष्यथ प्रतिकल्पं सुरेशाः ॥ १६ ॥
स मामनुप्रतिपद्यध्वमद्य सुनिर्वृतास्तपसा केवलेन ।
विजानन्तोऽन्यमनसो नो रमन्ते तस्माद्वेदैरीड्य एको महेशः ॥ १७ ॥
यज्ञैर्दानैस्तपसानाशकेन मत्क्षेत्रवासैः परिधूलनादराः ।
धृतत्रिपुण्ड्रा भवपाशमुक्ताश्शिरोव्रतैरग्निरित्यादिमन्त्रैः ॥ १८ ॥
उद्धूल्यगात्राणि पवित्रभस्मना रौद्राणि चावर्तयत प्रीतये मे ।
पञ्चाक्षरावर्तनजातहर्षा मल्लिङ्गसम्पूजनमात्रतुष्टाः ॥ १९ ॥
कष्टैर्विहीनाश्शिपिविष्टमिष्टैर्बिल्वैस्समभ्यर्च्य दिने दिने माम् ।
प्रकृष्टमुक्त्यैव भवोत्कटे रताः प्रनष्टमोहाः प्रकटाष्टमूर्तिम् ॥ २० ॥
सर्वार्तिघ्नं हृदये सम्प्रविष्टं ध्यायन्त मामेव सदा हृदि स्थितम् ।
सम्प्राप्स्यमज्ज्ञानमहो दुरापं कोष्ठं कनिष्ठं परितोषपुष्टम् ॥ २१ ॥
इष्टं च यत्किञ्चिदपि त्रिविष्टपे निवेद्य तद्भुञ्जत प्रीतियुक्ताः ।
तेनैव वो ज्ञानमखण्डमिष्टमीष्टेऽधुना संसृतिबन्धनाशम् ॥ २२ ॥
करोमि पाशान्भवतापसम्भवान्सनातनांस्ते दधाम्यद्य हृष्टः ।
अहो भवद्भिरपि पूर्णकामः किं विस्मृतो हृदये सम्प्रविष्टः ॥ २३ ॥
मदः पूर्णोऽपूर्णएवास्मि पूर्णः पूर्णात्पूर्णो नास्त्यपूर्णं मया हि ।
देव्याः प्रसादेन विमुक्तकामाश्चरन्तु तुष्टाः परिपूर्णसिद्धयः ॥ २४ ॥

तथापि किञ्चित्प्रवदामि वैभवं कष्टं तदव्यक्तगतं ममाद्य ।
सर्वेषु देवेषु सदैव सर्वदा लिङ्गाकृतिर्गिरिमौलौ निविष्टः ॥ २५ ॥
स्थानेषु पूज्योऽहमनादिरीशो मद्रूपलोक्यं भवतां सुदुर्लभम् ।
अहं त्वलिङ्गसंस्थस्सनातनः पूजनीयो भवद्भिः ॥ २६ ॥
तदेव लिङ्गं मम लिङ्गमेवं ज्ञातुन्नशक्यं क्षुरधारकं तत् ।
रूपद्वयं मे परमार्थतस्सुरास्साकारनीरूपमिदं हि विश्वम् ॥ २७ ॥
त्रिणेत्रमुद्यच्छशिमौलिसंयुतमम्बायुतं नीलकण्ठं ममाद्यम् ।
ततोऽपि नीरूपमिदं हि लिङ्गं जगत्पवित्रं कुरुतेऽर्चनादिभिः ॥ २८ ॥
ततो हि तत्केवलकष्टभ्यं तस्माद्भवन्तश्शरणं प्रयात ।
कैलासवासो भवतां सुदुस्तरस्तत्र प्रवेशो न हि सद्म मे सदा ॥ २९ ॥
सर्वावभासोऽप्यहमीश एकस्तत्राम्बया गणसङ्घैश्च युक्तः ।
मुक्तो विजह्वामि सदास्तमायः कैलासलिङ्गेषु सदा निविष्टः ॥ ३० ॥
केदार ओङ्कार अथाविमुक्ते महालये रुद्रकोटौ प्रभासे ।
हिमालये श्रीनगमौलिसंस्थे तथान्यदेशेषु सुसंस्थलिङ्गे ॥ ३१ ॥
सम्पूज्य मुक्ताश्च भवन्तु विज्वरा रहस्यमेतत्कथितं सुरोत्तमाः ॥ ३२ ॥

सूतः—

इत्युक्तं गिरिजामनोहरवचश्श्रुत्वा विधीन्द्रादयो
विष्ण्वीशानमरुद्गणास्सवरुणा नत्वा महेशं शिवम् ।
जग्मुस्स्वाभिमतप्रदेशमखिला देवा मुदा शङ्करा-
त्प्राप्य ज्ञानमहोदयं सुरुचिरं मुक्त्यैच लिङ्गार्चकाः ॥ ३३ ॥

हिमालयनगोत्तमे हिमसुधाममौलिस्फुर-
द्धिमाद्रिवरकन्यकाजटिलकान्तिकान्तं प्रभुम् ।
पयोधिसुतया हरिः पयसिजातपुष्पार्चनै-
र्निनाय दिवसानुमे वरसुरङ्गकेदारगः ॥ ३४ ॥

१. जगत्सविक्षीति पाठः ।

ओङ्कारं समवाप्य भारतिपतिस्सन्नर्मदातीरगं
पुष्पैर्बिल्वदलार्चनैश्श्रुतिगतैर्मन्त्रैस्स्तुवन्मामुमे ।
तत्याजाखिलपातकं हृदि गतं चाज्ञानमप्यन्तत-
स्सृष्टिं प्रष्टुतया स्वकीयवदनैस्तुष्टाव चाष्टाकृतिम् ॥ ३५ ॥

रुद्रोऽविमुक्तपदवीमविमुक्तमेतत्सम्प्राप्य लिङ्गनिलयं वरगङ्गयापि ।
विश्वेश्वरं त्रिभुवनेश्वरमीप्सितारं त्वामम्बिकामगसुतां सुविशालनेत्राम् ॥३६
अभ्यर्च्य पुष्पनिकरैः पयसो रसैश्च नीरैश्च सेच्य वरबिल्वदलैस्समर्च्य ।
लेभेऽप्यलभ्यमपि वेदशिरः प्रतीतं ज्ञानं तदा सुविमलं नगराजकन्ये ॥३७
इन्द्रोऽप्यथामरसुकण्ठकमेतदेव देवं महेश्वरमुमे वरबिल्वपत्रैः ।
सम्पूज्य तच्छ्रुतिगतं विमलं मदीयं ज्ञानं सदोदितमखण्डमवाप्य तुष्टः॥३८॥

यमोऽपि वरशैलके विमलगन्धमाद्रौ शिवं
समर्च्य निजपातकैश्श्रुतिगतिश्च लेभे शिवे ।
विमुक्तहृदयस्तदा त्रिदलबिल्वपत्रैश्शिवे
स एव सुखसम्पदां प्रवरदक्षिणाशाधिपः ॥ ३९ ॥

श्रीशैलनायकमुमे प्रथिते प्रदोषे श्रीदं धनाधिपतिरर्च्य विमुक्तपापः ।
ज्ञानं च यक्षपतिरक्षममाप वीक्ष्य पक्षाश्रयेण विमलं सलभेत्सुमोक्षम् ॥४०॥
तावश्विनौ च करहट्टपुरं तदाप्य नागेशमर्च्य विविधैर्लभतां सुपुष्पैः ।
मोक्षं तथैव भिषजामधिपौ तथा तौ वेदं तथायुषमुमे समवापतुस्तौ ॥४१॥

वायुः कामदवैद्यनाथविपिनाधीशं समभ्यर्च्य मां
बिल्वैः कोमलपुष्पनीरजलवैस्सम्प्राप्य मोक्षं द्रुतम् ।
अग्निः पुष्करमीश्वरं त्रिभुवनाध्यक्षं समभ्यर्च्य वै
सर्वभक्षसमुद्भवं प्रथितमप्यंहोविमुक्तोऽम्बिके ॥ ४२ ॥
गोकर्णं समवाप्य ते हि मरुतः पूज्येश्वरं मां शिवे
बिल्वैः कोमलपल्लवैश्च वसवो दित्यास्तवैस्तुष्टुवुः ।

श्रीमत्त्र्यम्बकमप्यगसुते ते द्वादशार्का हि मां
होमैर्हुत्वा महेशि रुद्रास्त्वभिपूज्य त्रिदलैश्च विल्वपत्रैः ॥ ४३ ॥
परिणतहिमधाममण्डलोऽपि शम्भुं हृदयाम्भोजसुपुण्डरीकवासम् ।
गोपर्वते समभिपूज्य तथैव शम्भुं मार्ताण्डकोऽपि गिरिजे समवाप मुक्तिम् ॥
काञ्चीं काञ्चितदित्कटां दिविपदस्त्वेकाम्रमूले हरं
कामाक्षीमपि भोगभोग्यनिकरैस्सम्पूज्य मुक्तिं गताः ।
अन्येचापि ग्रहास्तथैव मुनयो देवासुरा मानवा
गन्धर्वोरगयक्षराक्षसगणा मुक्तास्समभ्यर्च्य माम् ॥ ४५ ॥
श्रीकण्ठे तृणशङ्करे सुविहिते रत्नाद्रिमौलिस्थिते
श्रीमातृप्रभवे गिरीन्द्रतनये श्रीकालहस्तीगिरौ ।
जम्बूलिङ्गकवेरजातटयुगे जप्ये तथा कुम्भके
पुण्ये श्रीधवलार्जुने विधिपुष्टे श्रीवेदकाब्जे पुरे ॥ ४६ ॥
पुण्ये श्वेतवने मयूरविपिने छायावने शङ्करि
सम्पूज्य त्रिदशेश्वरं गिरिजया मुक्तिं परां ते ययुः ॥ ४७ ॥
हालास्यनायकमुमे वरशालिवाटीनाथं च कान्तिमतिकाशपुरायताक्षीम् ।
देवाङ्गनाःसमभिपूज्य हलीसलास्यैर्नृत्यन्ति हेमसरसीमवगाह्य मां त्वाम् ॥
मार्कण्डेयघटोद्भवौ घटहरं सम्पूज्य मृत्युं क्षणा-
द्योजिग्ये भुवनेश्वरि त्रिभुवने मत्पादशूलाहतम् ।
स्कन्दस्स्वामिगिरौ समर्च्य गणपस्तद्दक्षिणावर्तके
मामाराध्य गणाश्च भूसुरगणास्तत्रत्यलिङ्गेषु माम् ॥ ४९ ॥
क्षिप्रातीरनिकेतने मयि सदा नाम्ना महाकालजे
सम्प्राप्याचर्य गणत्वमाप सुकृतैर्मुक्तोऽप्यभून्मद्गणः ।
भृङ्गी नन्दिकचण्डिकौ वलिसुतः पौलस्त्यहुण्डादयो
मामाराद्ध्य सदैव तुष्टुवुरुमे तन्मे समाकर्णय ॥ ५० ॥

इति श्रीशिवरहस्ये प्रथमांशे देवकृतक्षेत्रपूजनन्नाम
षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

सर्वदेवस्तुतिर्नाम सप्तपञ्चाशोऽध्यायः.

ईश्वरः—

देवैर्गणेन्द्रैर्मुनिभिस्स्तुतोऽहं तत्र तत्र हि। तत्स्तुतिं सावधानेन मत्तश्शृणु नगात्मजे ॥
विष्णुब्रह्मादयो देवास्तथैव गणपा मम। मां तुष्टुवुर्महादेवं पद्यैर्गद्यैर्मनोहरैः ॥ २ ॥

विष्णुः—

कनज्जटाकुटीरगां विहङ्गसङ्गमण्डितां करिप्रियाङ्गसङ्गतां मुखाब्जकान्तिरङ्गिताम्।
कपर्दकोटिसङ्गतां कथासुधातरङ्गिणीं भजामि शम्भुमौलिगां महेश्वरं नतोऽस्म्यहम् ॥
खरादिखङ्गसंहतिप्रपञ्चबन्धनान्तकप्रखासचन्द्रहासधृक्।
अखण्डखण्डपर्शुजप्रभावितर्दिकेत्वतत्क्षणज्ञपारणस्फुरत्खरादिदुष्टगर्वहृत् ॥ ४ ॥

ब्रह्मा—

मनोतिगं वचोतिगं गणातिगं गुणातिगं भुजङ्गराजभोगगार्चिताङ्घ्रिहृत्पथोजगम्।
तरङ्गिणीतरङ्गजप्रफुल्लपद्मनालगं भजामि रत्नरङ्गगं कुरङ्गपाणिमीश्वरम् ॥ ५ ॥
हिरण्यदं महीप्रदं पशुप्रदं हराजविष्णुसर्वदप्रदानभोगमोक्षदम्।
भजामि देवदैवतं गुहाहितं जगद्गतं प्रभावितं सुभाषितं महाश्रुतीडितं शिवम् ॥ ६ ॥

रुद्रः—

महाहिराजकङ्कणं धराधृगात्मजासखं ज्वलत्त्रिशूलधारिणं मुनीन्द्रबालपोषणम्।
कुरङ्गबालधारिणं सितत्रिपुण्ड्रधारिणं भजामि सोमधारिणं करीन्द्रकृत्तिधारिणम् ॥
प्रकृष्टसामघोषिणं सुधांशुखण्डदीधितिप्रचण्डमौलिमण्डलं
सुकुण्डलीकृताच्छगण्डकुण्डलीश्वरं प्रभुम्।
अखण्डदिव्यदीधिमत्सुचन्द्रखण्डदेहकं विधातृमुण्डषण्डजप्रकाशमालजालकम् ॥ ८॥
भजामि चण्डताण्डवं घनाण्डजाण्डजप्रियं तुहण्डहुण्डकप्रियं महोरुबाहुदण्डकम्।

इन्द्रः—

पुरान्तकं स्मरान्तकं भगान्तकं मखान्तकं गजान्धकान्तकान्तकं शिवं सदा हृदम्बुजे॥

वायुः—

सुदक्षदक्षशिक्षकं महोक्षवाहकक्षगं सुपक्षिवाहनप्रियं मयस्करं यशस्करम्।

तिरस्करं महेनसां महस्करततिप्रभं तिरस्कृतं दुरात्मनाम् ॥ १० ॥
सुमस्करीमनोगतं सुतस्करं हविष्करं भजामि शङ्करं सदा हृदन्तरे सुविस्तरम् ॥११॥

अग्निः—

शुभाङ्गदं शुभास्पदं सुरेषु दत्ततत्पदं महाविभूतिधारिणं सुभूतिदं सुमोक्षदम् ।
भवादिहीनबोधदं करीन्द्रचर्मवस्त्रकमखण्डसोममण्डलप्रदं भजे शिवं सदा ॥ १२ ॥

यमः—

हरं सुभक्ततत्परं गरन्धरं ज्वलन्धरं प्रबुद्धशत्रुसंहरं मयस्करं महेश्वरम् ।
हरीशरं महीधरोरुकार्मुकं भजामि भूरथं हरम् ॥ १३ ॥

सूर्यः—

शरीरभोगसंहरं भजामि देवभास्करं हरश्च शङ्करं सदा ।
परात्परं नटेश्वरं जनार्दनार्दनं फणीन्द्रराजहारकं सुमारमारकारकम्॥ १४॥

कुबेरः—

धनाधिपं गणादिबृन्दपाधिपमुमाधिपं वृषाधिपं जगत्सुकारणाधिपम् ।
भजामि चित्सुखाधिपं नगाधिपं हृदाधिपम् ॥ १५ ॥

चन्द्रः—

शरच्चशीसमछविं महोक्षपुच्छचामरं महाच्छतरुकल्पकप्रसूनगुच्छमस्तकम् ।
निरिच्छजनवल्लभं तटिच्छविकपर्दकं हृदिस्थशिवमव्ययं सुकच्छपस्तवेडितम्॥ १६॥

वरुणः—

विशिष्टाद्रिशिष्टादिशिष्टेष्टनष्टं गिरिष्टं महिष्टं तथा ज्येष्टमीशम् ।
भजामीष्टमष्टाकृतिं भक्तितुष्टं कनिष्टश्च कष्टादिकष्टैकनाशम् ॥ १७ ॥

अश्विनौ—

कटितटकरटित्वचं जटाकुटीरात्सुरपाटीरतटीतटोरुगङ्गातटवद्धेन्दुकलासटम्।
वटोरुधारानिकटाटङ्कटकोटिटङ्कहस्तम् ॥ १८ ॥

वसवः—

भुजङ्गराजहारकं महाविषाग्निधारकं भवाम्बुधेस्सुतारकं भयानकं महेनसाम् ।

भजामहेऽन्तकान्तकं महेश्वरत्वदायकं सुरासुरेन्द्रनायकं जटाङ्गनार्धकायकम्॥ १९॥

मरुतः—

महारिखं भुजांसुखान्तरङ्गमद्रिजासखं सुसामजातसन्मुखं त्रिदद्वयोन्मुखोन्मुखम्।
बहिर्मुखैस्सुदुर्मुखं हसन्मुखं समस्तदुःखदुर्मुखं भजे शिवं हृदा सदा॥ २०॥
शिखीसखासखं जलासखं नटत्वशेषसन्मुखं हृदि॥ २१॥

रुद्राः—

दृगश्वलस्फुलिङ्गलेशभस्मिताङ्गनङ्गभस्मसङ्गतम्।
पतङ्गदृक्समान्तरङ्गमिन्दुधामगं विहङ्गवाहनार्चितम्॥ २२॥
भजे शिवं दृगङ्गतं शिवाङ्ककं पाथोजगार्चिताङ्गमौलिसङ्गतम्।
सुदक्षदक्षशिक्षकं महोक्षवाहकक्षगं सुपक्षिवाहनप्रियं भजाम्यधोक्षजार्चितम्॥ २३॥
हृदक्षहीनमक्षतं त्वपक्षयादिवर्जितं भजामि भक्तजालके ह्युपेक्षया सुवर्जितम्॥
क्षपेशमौलिमीक्षणीकृताब्जमित्रकाननमलक्षमक्षता-
क्षदृश्यविग्रहं विरूपकाक्षमीश्वरं भजे सदा हृदन्तरे॥ २४॥

आदित्याः—

गणाधिनाथनाथिताखिलप्रपञ्चगाधिजातसन्नुतं
दिगाधिगायकातिथीकृताब्जदिव्यपादुकम्।
भजामि रात्रिनाथमौलिकस्फुरत्सुरङ्गनीतरङ्गिणीदिवासनाथगं सदा॥ २५॥

गणेशः—

अशेषशोषिताखिलप्रपञ्चजातशेषकं मुनीष्टजातपोषकं महाहिशेषभूषकम्।
समुद्रनीरशोषकं प्रकाममिष्टलोचनं महाम्बुदप्रकर्षणं तटित्समानघोषणम्॥ २६॥
भजामि वेदभाषिणं विधेस्तु सृष्टिकारणम्॥ २७॥

स्कन्दः—

घनस्तनयुगर्क्षकं घनस्तनितनिम्नमेरुदाघघृणायुतसुचक्षुषम्।
निराकृताघसङ्घकं घृणायुतं स्वभक्तके धृताक्षभूतिसुप्रियं घनाभकण्ठमण्डलम्॥ २८॥
स्वनन्नखाग्रनिस्सृतविधीजमुण्डमण्डलं भजेऽन्तरङ्गचिद्घनं सदाशिवं सदाहृदि।

नन्दीश्वरः—

चराचरं सुचङ्करं कृपीडयोनिधारकं निशाचरान्तकं चतु-
र्मुखाननारविन्दवेदजालसंस्तुतं शिवम् ।
विचारमात्रगोचरं सुपञ्चवक्त्रगोचरं सुनिश्चलं
हृदन्तरे सुचामरौघवीजितं महोक्षगं भजे शिवम् ॥ ३० ॥

चण्डी—

हरिज्जटातटीनिकङ्कटेभचर्मधारकं कवाट-
हृत्तटीनिकाटहंसकं वटोरुमूलगं शिवं महोत्कटम् ॥ ३१ ॥

भृङ्गी—

मृडं दृढं परीवृढं सुबाढगाढहृद्गतं सुमूढव्यूढसन्मुखं क्रियासमूहतर्पितम् ।
अनूढकन्यकाद्रिजासखं समूढगूढहृद्गतं
महाकराम्बुजोत्थितप्रकाशढक्कवाद्यकम् ॥ ३२ ॥

ईश्वरः—

गीर्वाणैरमृतार्थिभिः किल शिवे क्षीराब्धिधारार्णवे
कृत्वा वासुकिरज्जुमज्जनविधौ मन्थानमन्द्राचलम् ।
तस्मादप्युदभून्महामणिगणं धेनूगणं पङ्कजा-
ज्जाता चोषधिनायकस्सुरतरुस्सारङ्गतीरङ्गकौ ॥ ३३ ॥
धूमोत्कीलितकालकूटशबलज्वालातिगं ते ततः
कान्दीशीकृतदेवदैत्यनिवहं दृष्ट्वाहमेको घृणी ।
तत्प्राश्याखिलदेवसङ्घविनुतो नीलाच्छकण्ठोऽभवम् ॥ ३४ ॥
अकपटपटुवाक्यमौलिगुम्फैस्तटिनीजालकमौलिरागहाखिलाग्रः ।
करटित्वक्पटभूतभूतटोपो कपटितदूरहृदब्जनृत्तटोपः ॥ ३५ ॥
सन्ध्याताण्डवडम्बरव्यसनिनो भर्गस्य चण्डभ्रमे
मोन्नृत्यद्भुजचण्डमण्डलभुवो जञ्झानिलाः केवलम् ।

१. नटानटिकदम्बचर्मधारकमिति पाठः ।

येषामुच्चलतां जवेन झटिति व्यूहेषु भूमीभृता-
मुड्डीनेषु विडौजसा पुनरसौ दम्भोलिरालोकितः ॥ ३६ ॥

सर्वदेवाः—

त्वल्लिङ्गार्चनतो महेश शरदां जीवेम शम्भोशतं
त्वन्नामानि सदा ब्रुवाम च विभो भक्तान्हि नन्दाम ते ।
लिङ्गं विल्वदलोत्तमाङ्गमसकृत्पश्येम पुण्याः कथा-
श्शृण्वामः प्रतिवासरं च विगतैनस्का भवामो वयम् ॥ ३७ ॥

शेषः—

वसुधाधरधारकं महेशं वसुधाराधिपमित्रमित्रसंस्थम् ।
हिमकरहिमभेषजाक्षियुग्मं हिमगिरिसुतयानतोऽस्मि देवमाद्यम् ॥ ३८ ॥

ईश्वरः—

पृष्ठेष्टलग्नकमठाकृतिलोकनाढ्यं[1] भूदारदारितरसातलतोऽतिदूरम् ।
ब्रह्माण्डखर्परमतीत्य गतोर्ध्वमौलिं लोकेशदृष्टिविरहान्मम लिङ्गमेतत् ॥३९॥
तल्लिङ्गपूजनमुमे श्रुतिमौलिवाक्यसिद्धान्तगर्भितपदप्रपथेन भाव्यम् ।
तत्कश्चिदेव कुरुते मम च प्रसादान्नो वा सुरा भरितभक्तिरसा हि केचित्॥
चण्डांशुप्रकटप्रदीपिततमस्स्तोमैकसीमा दिशः
खद्योतद्योतनेव प्रभवति भवतां देवजालं समग्रम् ।
किं निम्बाकतरुस्सुरद्रुमसमो भूयात्ततो मे शिवे
ह्यज्ञानं किमु वेदनेन सदृशं विष्ण्वादयः किं समाः ॥ ४१ ॥
गगनातिगलिङ्गमौलिमेतद्गुरपातालतलात्तमूलभागम् ।
महसाधवलीकृताखिलाशं भवदाशास्यसमं ममेष्टवासम् ॥ ४२ ॥
गगनगतमपारतेजसेद्धं जनितानन्दभरेण देवसङ्घाः ।
अवनितलनिवासमस्तकास्ते परिवद्धाञ्जलयो ददर्शुरीशम् ॥ ४३ ॥

१. पृष्ठोष्ठलग्नकमठाकृतिलोकनाथ इति पाठः.

सूतः—

सुरकुवलयसोमं सोमधामोत्तमाङ्गं मधुरिमगुणसीमं भूमसामादिगीतम् ।
सुमसममृदुकायं भीममीशं च सोमं कुमतिपथविदूरं कामदं कामनाशम् ॥ ४४ ॥
कमलामलनेत्रपूज्यपादं कमलारातिजटातटोरुभूपम् ।
कलितालकगाङ्गतुङ्गलीलं कलशोद्भूतमुनिप्रपूजिताङ्घ्रिम् ॥ ४५ ॥

इति श्रीशिवरहस्ये प्रथमांशे सर्वदेवस्तुतिर्नाम
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

आत्मलिंगकथनं नाम अष्टपञ्चाशोऽध्यायः.

जैगीषव्यः—

अहोज्ञानमहानन्दधारामृतनिमज्जनैः । सानन्दमग्नहृदयाश्शिवज्ञानहताशुभाः ॥ १ ॥
धन्या वयं न सन्देहस्स्कन्दानन्दैकमेदुराः । किन्तल्लिङ्गं महेशेन प्रोक्तं तद्वद मेऽधुना॥
किं तल्लिङ्गं कश्च लिङ्गी को वा तल्लिङ्गपूजकः।लिङ्गार्चनेन किं प्राप्यं वद विस्तरतोऽधुना
त्वद्वागमृतधाराभिः पापदावानलो मम । शान्तःप्रशान्तं चित्तञ्च महानन्दाब्धिवीचिगम्

सूतः—

जैगीषव्यवचोवीचीसम्प्लावितहृदन्तरः । स्कन्दो नन्दितमन्दारो गुह्यन्तत्पारमेश्वरम्॥
देव्यै देवेन कथितमवादीच्छाम्भवाय तु ॥ ६ ॥

स्कन्दः—

यथा मुने त्वयापृष्टि प्रश्नोऽयं सर्वदुस्तरः । तथैव पृष्टो भगवान्दृष्ट्वा कैलासमौलिंगम्॥
कैलासेश्वरलिङ्गञ्च प्रणम्य स्तव्यभक्तितः ॥ ८ ॥

देव्युवाच—

लिङ्गं कैलासमौलौ जनिततिविहितापारतापैकभङ्गं
मच्चित्ताब्जैकभृङ्गं रविशशिशिखिजापारकान्तोत्तमाङ्गम् ।

ध्यानानन्दैकसङ्गं विविधजनिजरानाशनेनाप्यसङ्गं
शान्तं स्वान्तैकसङ्गं कथय भवहरं शाङ्गमध्यानसङ्गम् ॥ ९ ॥
विविधजनविधीन्द्रैर्विष्णुभिश्चैव रुद्रैरमरवरसमूहैर्दैत्यगन्धर्वसङ्घैः ।
मुनिवरगणबृन्दैस्स्कन्दहेरम्बकाद्यैर्न हि खलु भगवंस्ते लिङ्गमेतद्धि दृष्टम्॥१०
कथमिदमनलाक्षं पश्यति प्रीतियुक्तो यमनियमतपस्यापारदानैर्मखैर्वा ।
जनिशततपसा वा प्राप्यमेतन्महेश त्रिभुवनभवने वा कश्चिदस्तीशदृष्टम्॥११
कथय रहसि शम्भो ह्याः किमेतद्विचित्रं ह्यहमपि भगवंस्ते ज्ञासिषं नैव लिङ्गम्॥

स्कन्दः—

इत्यम्बावचनेन सुन्दरतरस्वान्तेन्दुमौलिस्तदा
वीक्ष्याम्बां मुखपङ्कजोत्तमलसन्नेत्रालिमालादरः ।
वेदान्ताम्बुजभास्करस्त्रिजगतामाधारभूतो हरः
प्राहोत्फुल्लमनोहरारविन्दवदनो देवीं मुदा शङ्करः ॥ १३ ॥
पुनः प्रणम्य सा देवी प्राह कामारिमीश्वरम् ॥ १४ ॥

देव्युवाच—

देवदेव महादेव महाकारुणिकोत्तम । किं तल्लिङ्गं कश्च लिङ्गी लोके लिङ्गं किमुच्यते॥
कथं लिङ्गं कश्च लिङ्गं समर्चयति शङ्कर । तद्वदेवानुपूर्व्येण यदि ते मय्यनुग्रहः ॥१६॥

स्कन्दः—

इत्थं देव्या पुरापृच्छि महेशो भक्तवत्सलः। तस्यैवाकथयत्पुण्यं शिपिविष्टः कथानकम्॥
निविष्टहृदयो देव्यामष्टमूर्तिः प्रतुष्टिमान् । उवाचाह्लादयन्देवीं तच्छृणुष्व गणोत्तमैः॥
सुरेन्द्रैश्च मुनीन्द्रैश्च गोप्यमेतत्सनातनम् । नाख्येयं कस्यचिद्वापि ज्ञानहीनाय शाम्भवैः

ईश्वरः—

सावधानेन देवेशि लिङ्गपूजाविधिक्रमम् । शृण्वपर्णे प्रणयतो मयोक्तं हृदये धर ॥२०
नाख्येयं कस्यचिद्वापि रहस्यं मम सर्वथा । लयनात्सर्वजगतां लिङ्गमित्युच्यते शिवे॥
लीनमर्थं गमयति तस्मात्तल्लिङ्गमुच्यते । लमु क्रीडाञ्च जगतो गच्छतीति तदुच्यते ॥
तस्माल्लिङ्गं विदुः प्राज्ञा विन्दुहीनं च तत्प्रिये। अर्चनं च प्रवक्ष्यामि ह्यर्चकश्च विशेषतः

लिङ्गं गुणत्रयाद्धीनं ब्रह्मविष्णुमहेश्वरैः । पीठपीठ्यादिरहितं पूज्यपूजाविवर्जितम् ॥
ध्यानध्येयादिरहितं निर्गुणं तमसः परम् । जगज्जन्मोदयास्थानविनाशनविवर्जितम्॥
ओङ्काराद्यं सप्रणवं त्रिमात्रापरिवर्जितम् । भावाभावादिरहितं भावाभावविवर्जितम्॥
बोध्यबोधादिरहितं व्याप्यव्यापकवर्जितम् । ज्ञानज्ञेयज्ञातृहीनं खण्डाखण्डविवर्जितम्॥
प्रभवाभवसंहारतिरोधानादिवर्जितम्। ध्यानध्येयादिरहितं [1]महाध्यानविदूरगम्॥ २८॥
अलक्ष्यलक्षणाहीनं गोप्यगोपकवर्जितम् । न सन्नासन्न चैवासत्सदसच्चैव नाप्यसत् ॥
सत्तामात्रादिरहितं केवलं स्वात्मदर्शनम्। भानाभानविहीनञ्च स्वभासा भासिताखिलम्
चेतृचेतकराहित्यं क्षराक्षरविवर्जितम् । चराचरविहीनं च प्रमामेयादिवर्जितम्॥ ३१॥
[2]बिन्दुनादादिकंसाक्षात्साक्षिसाक्ष्यादिवर्जितं। बिंबीबिंबातिगंचैतत्प्रतिभासादिवर्जितम्
नैव दृश्यं न चादृश्यं ग्राह्यग्राहकवर्जितम् । नवाग्वाक्यविहीनं च वाचां दूरमनौपमम्॥
न मनो नामनःप्राप्यं न प्राणं प्राणबोधकम् । न चक्षुरूपरहितं तद्दृश्यज्ञानवर्जितम् ॥
न श्रोत्रं श्रवणाद्धीनं तदाकाशमनौपमम् । न घ्राणं गन्धहीनं च पृथिवीपरिवर्जितम्॥
न रसं तदपोहीनं जिह्वास्थानादिवर्जितम् । न पाणिपादपाय्वादिमरुद्धीनं शिवे हि तत्
न रूपरसगन्धादिशब्दस्पर्शविवर्जितम् । नैवाकाशमनाकाशमाकाशस्यापि चेतकम् ॥
न भूमिर्भौतिकैर्हीनं घनभावविवर्जितम् । न तेजस्तेजसा हीनं सर्वतेजःप्रवर्तकम् ॥
न वायुश्चलनाद्धीनं वायोरुद्बोधकं हि तत् । न चैतत्सलिलं साक्षात्सलिलद्रवकल्पकम्॥
भूताद्विहीनं भूतादि भूताधारं सनातनम् । अपाणिपादवदनमचक्षुश्श्रुतिवर्जितम् ॥
सर्वेन्द्रियगुणातीतं सर्वेन्द्रियविवर्जितम् । सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् ॥
सर्वेन्द्रियगुणैः कान्तं नित्यकान्तं सदोदितम् । नवद्वारगृहान्तस्थदिव्यपीठे प्रतिष्ठितम्
यदप्रतिष्ठं विश्वास्यं विश्वहस्तोरुपादकम् । विश्वमौलिं विश्वपीठं विश्वपीठतमःपरम् ॥

न तत्र किञ्चित्प्रतिभाति रूपं यस्मात्परं नापरमस्ति किञ्चित् ।
वेदान्तवेद्यं निर्गुणं यद्वचोगं यतो जातं भुवनं वै विचित्रम् ॥ ४४ ॥

यस्मिन्लिङ्गे स्थितं चैतद्यस्मिन्लीनं जगच्छिवे । यदाधारमिदं विश्वं त्रिगुणं परिवर्तते
तल्लिङ्गपरिमाणं हि केन वक्तुं हि पार्यते । परिमाणादिरहितं गुणखण्डत्रयातिगम् ॥

---

१. ममाध्यानविदूरगमिति पाठः । २. विन्दुनादातिगमिति पाठः ।

अखण्डमेकपिण्डाण्डब्रह्माण्डोपरितस्स्थितम्। न प्रतिष्ठा न च स्थानं तल्लिङ्गस्य महेश्वरि
नालयस्थं महेशानि सर्वावास्यं महच्च तत्। सर्वभूतमहाकोशगर्भागारस्थमम्बिके॥४८॥
अणोरणीयोऽपि महन्महतोऽपि महत्तरम् । सर्वाधारमनाधारं विश्वरूपं प्रकाशकम् ॥
तेजोमात्रं स्वप्रकाशं जीवेशानादिवर्जितम् । प्रत्यक्चैतन्यमात्मानमानन्दघनमद्वयम्॥
ब्रह्मविष्णुहराद्युत्थपीठजालविवर्जितम्। स्वात्मैकवेद्यं तल्लिङ्गं स्वस्मिन्नेव प्रतिष्ठितम्॥
तद्भूमा परमानन्दं तत्रनोनास्तिकिञ्चन । तस्मिन्लिङ्गेदृष्टिगते दृग्रूपोलिङ्गतामियात् ॥
लिङ्गोऽप्यलिङ्गोभवतितल्लिङ्गस्यैवशीलनात्।नान्येपश्यन्तितल्लिङ्गंनान्येजानन्तिकेचन
तल्लिङ्गं परमानन्दं रसहीनं रसातिगम्। उपास्यं सर्वदा सर्वैस्तदु नात्येति किञ्चन ॥
न तस्य महिमा कश्चित्स्वमहिम्नि प्रतिष्ठितम्। सर्वहृत्संस्थितं लिङ्गं नित्यं सर्वप्रकाशकम्
अवस्थाभेदरहितं मायागर्भगृहान्तरम्। सार्वकालिकपूज्यन्तत्पद्त्रिकालादिवर्जितम्॥

प्रविष्टं स्वावृततमोराशि स्वाभानभासकम् ॥ ५७ ॥
न तत्र वाङ्मनो वा कदाचिन्नचेन्द्रियप्राणभूतादिसङ्गः ।
स्वयं प्रभातं भासितुं नो समर्थौ दृग्रूपं तत्केवलं बोधहीनम् ॥ ५८ ॥
जीवेश्वरौ ब्रह्मविष्णू कदाचित्तल्लिङ्गमेवं स्वहृद्दृष्टिहीनौ ।
किञ्चिद्ज्ञसर्वज्ञविमोहमानिनावहङ्कारमायाविवशान्तरङ्गौ ॥ ५९ ॥
हंसीभवद्वाक्यजपामिमां वदन् जीवो विधिर्मोहजालेषु मग्नः ।
अहङ्कृहोपासनाशस्त्रजालैस्सर्वज्ञमेवाभिमुखे[1] युयोधम् ॥ ६० ॥
विष्णुं तदा चेश्वरप्राज्ञमज्ञं स चाप्यहङ्कारवशान्तरात्मा ।
अहं च सर्वेश्वर इत्यथोच्य यद्दृष्टलिङ्गोऽभ्युवाच [2]विद्धितम् ॥ ६१ ॥
एवं च ते युयुधातेऽस्त्रशास्त्रैर्मिथ्याभूतैः पश्य मोहान्धकौ तौ ।
कदाचिदैक्षन्त विहाय मोहं क्षराक्षरौ विधिविष्णू भवानि ॥ ६२ ॥
व्यपेतमोहौ भवतं तदम्बिके दृष्ट्वाहतुर्लिङ्गमेतद्विलोक्य ।
पुनश्च मायाप्रभवैश्च पाशैर्मौलिं मूलं चास्य पश्याव चेति ॥ ६३ ॥
नान्तो न मूलं न च मौलिरस्य लिङ्गस्य दृष्ट्वोपरतौ तदा शिवे ।

१. अभिमुखेषु बोध इति योऽथ इति च पाठः । २. विधिन्तमिति पाठः ।

भूदारहंसाकृतिदेहभाजौ स्तुत्वा च लिङ्गे व्यरमन्त तौ तदा ॥ ६४ ॥

जीवेश्वरौ—

क्षराक्षरौ तौ हरिवेधसौ शिवे हंसाख्यमन्त्रेण विभाव्य देवम् ।

ज्ञाज्ञावनीशौ यदादृष्टलिङ्गावलिङ्गमाकाशसधर्मकौ तदा ॥ ६५ ॥

व्यपेतमोहावभवन्त तौ तदा ह्युपाधिहीनौ न हि किञ्चिदत्र ।

तदेव लिङ्गं मम देव्यलिङ्गं न पूजनायासपरैर्नरैश्शिवे ॥ ६६ ॥

कार्यं शिलाधातुजबाणलिङ्गे चरे स्थिरे चापि विशिष्टलिङ्गे ।

सम्पूजयेद्बिल्वदलैर्भवानि भवाम्बुधेस्सन्तरणाय लोकः ॥ ६७ ॥

तल्लिंगपूजा न कदाचिदीदृशैर्नरैस्सुरैर्वागणविप्रवर्यैः ।

कर्तुं न शक्या विविधैरुपायैर्दानैस्तपोनाशनयादिभिश्शिवे ॥ ६८ ॥

समर्चनं तत्कथये भवानि गूढं सदा प्राज्ञतमैकगम्यम् ।

तदर्चनं पुण्यनरैकलभ्यमलभ्यमन्यैर्नृपशुत्वधर्मैः ॥ ६९ ॥

भूताधिकारणधराधरदारणेन सर्वज्ञरूपहरिणा किटिरूपकेण ।

किञ्चिद्ज्ञजीववरहंसकभूतपुण्यपाथोजजातवदनैस्स्तुतमर्चितं च ॥ ७० ॥

हृल्लिंगमात्मकमुमे मनसाभिपश्य पश्यंस्तदात्मकतया भवतीव चित्रम् ॥ ७१ ॥

इति श्रीशिवरहस्ये प्रथमांशे आत्मलिंगकथनं नाम
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

शिवगौरीसंवादे उपनिषल्लिंगकथनं नाम एकोनषष्ठितमोऽध्यायः.

ईश्वरः—

अहमीशश्च जीवोऽहमित्यहङ्कारमानिनौ । तावेव हरिब्रह्माणौ तल्लिङ्गादर्शकौ शिवे ॥

तन्मौलिमूलं च सुरौ सोऽहङ्कारःप्रकीर्तितः। अहं मानाभिपन्नानां नास्ति तत्पूजनं शिवे

वर्णाश्रममहाधर्मश्रमैर्भिस्तदपूजनम् । तत्पूजारहितानां तु नास्ति मुक्तिः कदाचन ॥

तत्पूजया विमुच्येत नान्यथा कर्मकोटिभिः। सुराणां रूपपूजातो मम लिङ्गार्चनं वरम्॥

मम भौतिकलिङ्गार्चा विल्वपत्रैर्महेश्वरि । तल्लिंगपूजात्मैक्या हि पारम्पर्यक्रमेण च ॥

सन्निपत्योपकारादौ प्रवर्तेत महेश्वरि । विभूतिधारणं चापि ज्ञानांगत्वमुदाहृतम् ।।६।।
रुद्राक्षधारणं चापि ज्ञानांगत्वमुदाहृतम् । पञ्चाक्षरजपश्चापि ज्ञानांगत्वमुदाहृतम् ।। ७।।
रुद्राध्यायजपश्चापि ज्ञानांगत्वमुदाहृतम् । त्रिणेत्रमम्बिकायुक्तं नीलकण्ठं महेश्वरि।।८।।
मन्नैवेद्यस्य भुक्तिश्च चित्तशुद्ध्यै श्रुतीरितम् । तदश्यामेति मन्त्रेण त्रिगुप्सातेति मन्त्रतः
अन्तरिक्षेतिचऋचासम्प्राप्तोऽयंविधिक्रमः । जाबालाथर्वणैर्मन्त्रैश्शिखाकैवल्यसम्भवैः
भस्मरुद्राक्षलिंगार्चारुद्रपञ्चाक्षरेषु मे । ध्यायीतेशेति च शिवे शिव एक इतीरितम् ।।११
उमासहायमित्यादिमन्त्रैर्ध्यानांगकल्पनैः । सन्निपत्योपकारीणि हृल्लिंगाराधनाय हि।।
इज्यादानव्रतैश्चापि वर्णाश्रमनिबन्धनैः। तदारादुपकारं हि न साक्षाल्लिंगपूजने ।।१३।।
न चेयं प्राप्यते पूजा पूज्यपूजकवर्जिता । धूपदीपादिरहिता गन्धपुष्पविवर्जिता।।१४।।
पञ्चामृतोदसेकादिनैवेद्यपरिवर्जिता । भावनामात्रसुलभा दुर्लभा योगिनामपि ।। १५ ।।
प्रज्ञातीर्थमहागंगानिषण्णोमौनिताखिलः। नित्यशुद्धोऽहमस्मीतिस्नात्वास्वात्मजलाशये
स्वात्मज्ञानमहाभस्मोद्धूलितो धवलाकृतिः। ज्ञानवैराग्यबोधोद्यत्त्रिपुण्ड्रावलिभासुरः ।।
शान्तिदान्तियमाभ्यासयोगरुद्राक्षमालिकः। पञ्चभूतमहातत्वपञ्चीकरणनिर्मलः।।१८।।
पञ्चकोशविदूरोद्यत्पञ्चाक्षरपरायणः। पञ्चप्राणमनोधर्मसर्वेन्द्रियविवर्जितः ।। १९ ।।
ईशोऽहं ब्रह्म परमं वाच्यवाचकवर्जितम् । ध्यायन् स्वात्मैक्यविज्ञानमहानन्दाम्बुमग्नधीः
गतमोहमहामायागर्भधामैकसंस्थितः । स्वात्मलिंगस्थितापारनिर्मलज्ञानवर्जितः।।२१।।
पञ्चकर्मेन्द्रियरसपञ्चगव्यप्रसेचकः । पञ्चज्ञानेन्द्रियापारपञ्चामृतनिषेचकः ।। २२ ।।
अखण्डैक्यानुसन्धानरुद्राद्भुतया निषेचकः । मनोलयमहागन्धलेपनादिप्रकाशकम्।।२३
सार्वात्म्यभावविलसद्वस्त्रवेष्टनवेष्टितम् । सोऽहमस्मीत्यक्षताभिस्स्वात्मलिंगं समर्चयेत् ।।
महावाक्यानुसन्धानविल्वैः पुष्पैस्समर्चयेत् । चतुर्वेदान्तसारोत्थमहावाक्यैश्च भूषणैः
सम्भूष्यदेहजालोत्थभक्ष्यभोज्यनिवेदनैः । विनिवेद्याहमस्मीति ताम्बूलैरुपचारकैः।।
स्वात्मविल्वादिकुसुमैः पङ्कजैश्च समाधिजैः । देहजालादिरहितप्रणामप्रक्रमादिभिः।।
महानन्दमहाधारागानैश्च करतालकैः । अहं विश्वमभवमिति गानैर्नटननर्तनैः ।।२८।।
सर्वसङ्गपरित्यागछत्रचामरदर्पणैः । सम्पूज्यपूजापूज्यादि पूजकादिलयक्रमैः ।।२९।।
नैवाहमस्मि किञ्चिद्वै नेदं नानात्मकं जगत् । सम्पूज्यात्मानमद्रीन्द्रतनयेतत्सपूजनम्

न पूजान्तो नास्य शिवे नवोद्वासनकल्पनम्। न कालदेशनियमो न साधनपरिग्रहः॥
सर्वदा सर्वभावेन ह्यात्मलिङ्गं प्रपूजयेत्। ब्रह्मक्षत्रमिदं दृश्यं नैवेद्यं तन्निवेदितम्॥३२॥
भुक्त्वा सुखमवाप्नोति तन्निवेदनभोजनात्। गुणत्रयादिरहितं त्रिश्शङ्काम्बुपिबेत्ततः
सदाशिवोऽहमस्मीति तन्निर्णोदकपानकृत्। एवमात्ममहालिङ्गपूजा ते कथिता शिवे॥
एवं पूजयतो नित्यं पूज्यपूजाविवर्जितः। पूजकः पूज्यतामेति सदालिङ्गमयोभवेत्॥

न पूजानलिङ्गं न चोपासनादि न वेदान्तधारारसास्वादनं हि।
न वेदप्रचारोत्थधर्मैकजालैस्शिवेमत्प्रसादैकलभ्यं किलेदम्॥ ३६ ॥
न च प्राणकोशं न चानन्दकोशं न विज्ञानकोशं न चान्नादिकोशम्।
न चाणुर्न दीर्घं न बद्धं न मुक्तं न च द्वैतमेकं त्वनीशं परं च॥ ३७ ॥
न च व्यापकं देशकालादिहीनमवस्थादिहीनं त्वलिङ्गं रसादि।
गुणातीतमेकं चिदानन्दरूपं घनं चाप्यखण्डं सदाखण्डितेषु॥ ३८ ॥
मनोवागतीतं त्वनादिं च सूक्ष्मं सदा शुद्धबुद्धं त्वसङ्गं महाङ्गम्।
सदा लिङ्गसङ्गं त्वलिंगं सुतुंगं नभस्स्वान्तरंगं जनानामसंगम्॥ ३९ ॥
न पुण्यं न पापं न तज्जन्मनाशे न चिन्ता नचार्तिर्न तल्लोभमोहौ।
न वा देशिको नैव शिष्यस्तदेवं न वेदान्तवादैर्दुरापं सदापम्॥ ४० ॥
सहस्रास्यहस्तं सहस्रोरुपादं तदेवाधुना पाणिपादास्यहीनम्।
तथागन्धमेकं रसैश्चापि हीन मसंस्पर्शकं घ्राणजिह्वादिहीनम्॥ ४१ ॥
तुरीयं त्वशीर्णं शरीरेषु नित्यं विभु सर्वदेहादिधर्मैर्विहीनम्।
तथात्मानमिष्टं कनिष्टं च ज्येष्टं प्रियं वस्तुतस्सर्वभागेषु युक्तम्॥ ४२ ॥
तदेवाखिलैर्भोगजालैर्विहीनं महानन्दसन्दोहधामैकसीम।
तदेवास्मि लिंगं तदेवास्मि भूतं तदेतद्भविष्यं शिवे वर्तमानम्॥ ४३ ॥
तदेवाखिलाधारपुच्छं प्रतिष्टं तदेवाद्य ब्रह्म तदेव त्वमीशे।
तदेवेशि तत्वं सदा तत्वमस्मीत्यहंब्रह्मचास्मीति वाक्यैर्दुरापम्॥ ४४ ॥
तदेवायमात्मेति ब्रह्मेत्यहं वै सदा ब्रह्मभूतो भवेदेव ब्रह्म।

---

१. सदेशमिति महेशमिति च पाठः। २. गुणादीति पाठः।

तदूर्ध्वं ह्यधस्थात्तदेवेति देवि तदेवेशि पश्चात्पुरस्तात्तदेव ॥ ४५ ॥
तदेवाद्य लोकास्तथालोकलोक्या दिशो भूतवर्गं तथा वेदजालम् ।
सुराश्चासुरा भूसुराभासुरं तत्प्रविष्टं समस्तेषु निष्टं विशिष्टम् ॥ ४६ ॥
कनिष्टं विशिष्टैश्च शिष्टैर्दुरापं सदा लोकनेत्रे शिवौ चापिविष्टम् ।
तदीयप्रसादेन वायुर्द्धरित्री तथा सूर्यचन्द्रादयो वह्नयश्च ॥ ४७ ॥
विभात्यस्य भासैव लोकं त्वशेषं यदज्ञानतो नित्यमेतज्जडं च ।
यदुद्बोधनेनापि सर्वं विभाति यदालोकने सर्वमेतद्धिपश्येत् ॥ ४८ ॥
दृगेतद्दृशौ नैव रूपं तदेतन्न दृश्यं तथादर्शनं चापि गौरि ।
न तद्ज्ञानमज्ञानमेतद्विचित्रं न सूक्ष्मं न च स्थूलमण्वादिहीनम् ॥ ४९ ॥
न तत्किञ्च केनापि पश्यश्च जिघ्रं न च स्पर्शगन्धादिशब्दादिहीनम् ।
तदेतत्सुराणां हृदिस्थं गुहास्थं न हि प्राणवाचां मनस्तोऽपि दूरम् ॥ ५० ॥
न च स्त्री न पुंश्च न हि क्लीवमेतद्यदा केन कार्येण युक्तं हि तद्धि ।
न बालं युवा वै न वृद्धं न दीर्घं न च ह्रस्वदीर्घं न कृष्णं न पीतम्॥५१॥
न वै वर्तुलं नैव तद्वै चतुष्कं नचोर्ध्वं न चाधो न तद्विस्तरं हि ।
तदेवाद्यखण्डं न खण्डादिहीनं समस्ताण्डगं विस्तृतं चाण्डतोऽपि ॥ ५२ ॥
न शुष्कं न चार्द्रं घनं वापि देवि न किञ्चित्तदेवेह पश्यामि लिंगम् ।
यतो ब्रह्मविष्ण्विन्द्ररुद्राः प्रजाता यतो वा महाभूतसङ्घानि देवि ॥ ५३ ॥
अनेनैव जीवन्ति नित्यं सदास्ते जगज्जालमेतन्महालोकवर्गैः ।
तथान्ते लयं याति लिंगे त्वलिंगे तदेतद्विजिज्ञासस्व ब्रह्मत्वमेव ॥ ५४ ॥
येनैव सर्वेन्द्रियकल्पना तता रूपश्च चक्षुः परिपश्यते तत् ।
तदेव लिंगं विमलं प्रपश्य नानैव नास्ति परिदृश्यते तत् ॥ ५५ ॥
यदैव वाक्सर्वरसांश्च वेत्ति रसात्तिगं तत्परिपश्यलिंगम् ।
तदेव तच्छ्रोत्रवरं च दिव्यं श्राव्यं शृणोतीदमेवाद्य लिंगम् ॥ ५६ ॥
यदेव चाघ्राति सुगन्धमेतत्तदेव लिङ्गं परिपश्य देवि ।
यत्रैव त्वक्स्पर्शमथैव वेत्ति तदेव लिंगं मम देवि पश्य ॥ ५७ ॥

येदेव च प्राणिति प्राणिवर्गं बुद्ध्यादि यद्बोधयतेऽत्र लिंगम् ।
पाण्यङ्घ्रिपायुप्रजनादिकेषु विसर्गजानन्दचलं च धर्मम् ॥ ५८ ॥
तल्लिंगमेतद्धि विजानते जना मनो मनो यच्च तदेव लिंगम् ।
यथैव नद्यस्सरमाणास्समुद्रं वेलातिगा नामरूपे विहाय ॥ ५९ ॥
तल्लिंगसन्दर्शनतो नरो भवेन्नामातिगो रूपगुणातिगश्च ।
तदेव लिंगं ध्वनिबिन्दुवर्णं मात्राकलातीतगुणातिगश्च ॥ ६० ॥
ओमोमिति प्राणवर्गे च वेदे वेदान्तसङ्घे च वदत्यभीक्ष्णम् ।
ईशानवास्यं हि तदेव लिंगं पूर्णात्तथा पूर्णतरं सुपूर्णम् ॥ ६१ ॥
यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत्सदतीतलिंगम् ।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥ ६२ ॥
भावग्राह्यगनीडं तद्भावाभावकरं हि तत् । कलासर्गगतं लिंगं ये विदुस्ते जहुस्तनुम्॥
स्वभावमेके वदन्तीशलिंगं कालं तथान्ये परिमुह्यमानाः ।
लिङ्गस्यैतन्महिमानमिति वीतशोको ज्ञात्वा लिङ्गं शान्तिमत्यन्तमेति॥६४॥
यस्मिन्लिङ्गे अधिविश्वे निषेदुर्यस्मिन्निदं सञ्चविचैति विश्वम् ।
यस्माद्बभूव भुवनस्यास्य गोपाः प्रज्ञापतिर्भूतवर्गैककर्ता ॥ ६५ ॥
यल्लिङ्गमेतद्भुवनं विचक्रमे तस्यांशतः पादमिदं हि विश्वम् ।
अणोरणीयान्महतो महीयांस्तदेव लिंगं निहितं गुहायाम् ॥ ६६ ॥
तदेव लिंगं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ ६७ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । कर्माणि तस्य नश्यन्ति लिंगे दृष्टे परावरे॥
तल्लिंगं ज्योतिषां ज्योतिश्चेतनानाञ्च चेतनम् । तत्र को मोहः कश्शोकस्तल्लिंगमनुपश्यतः
तद्दर्शनविहीनानां विपदस्स्युर्भवे भवे । जन्ममृत्युजरादुःखैरभिभूता हि नित्यशः ॥
आनन्दंतस्यलिंगस्यज्ञात्वाविभ्येन्नजातुचित्। तल्लिंगदर्शनानन्दमात्राज्जीवन्तिसर्वशः
अपाणिपादं तल्लिंगं मनसोऽतज्जवीय हि । स्थानकालातिगं यच्च स एवाद्यस्स ईश्वरः॥
तल्लिंगवेत्ता तरति शोकमेतत्सनातनम्। तदेव जानथैवैकं लिंगमेतन्मनस्स्थितम्॥७३॥

१. येनैव चेति पाठः ।

ध्यातव्यं ध्यानहीनं च ध्येयध्यानादिवर्जितम्। ज्ञानज्ञेयादिरहितं नामरूपविवर्जितम्
अनन्तमहिमाधारमप्रतिष्ठितवैभवम्। अजातमेतत्तल्लिंगं कश्चिद्धीरः प्रपश्यति ॥ ७५ ॥
तल्लिंगं सर्वतो वक्त्रं ज्वालाजटिलिताखिलम्। यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः
तदा तल्लिंगमज्ञात्वा दुःखस्यान्तो भविष्यति। नान्तः प्रज्ञं हि तल्लिंगं नोभयप्रज्ञमेव च
न प्रज्ञैव च तल्लिंगं नाप्रज्ञं चैतदीश्वरि। अदृश्यं चैव तल्लिंगमग्राह्यं तत्सदैव हि॥७८॥
एकात्मप्रत्ययं लिंगं प्रपञ्चोपशमं हि तत्। तल्लिंगज्ञा इमे लोकास्तल्लिंगे लीयतेऽखिलम्
तल्लिंगे लयनादेवि तज्जलानीति ते जगुः। तद्वेदादौ स्वरं लिंगं वेदान्ते च प्रतिष्ठितम्
तल्लिंगप्रकृतौलीनाब्रह्मविष्णुमहेश्वराः।तद्ब्रह्मतच्छिवस्साक्षात्तद्विष्णुस्तद्विराट् स्वराट्
सम्राड्विश्वेशि तल्लिंगं तद्दृश्यं सूक्ष्मदर्शिभिः। हृदा पश्यन्ति तल्लिंगं मनसैव मनीषिणः
श्रवणायापि तल्लिंगं न लब्धं बहुभिश्शिवे। शृण्वन्तोऽपि शिवे लिंगं न विदुर्बहवोऽपि ये
आश्चर्यवत्पश्यति कश्चिदेतदाश्चर्यवच्छृणुते तच्चलिंगम्।
आश्चर्यवद्बोधते यं तथान्ये ह्याश्चर्यवत्पश्यति तच्चलिंगम् ॥ ८४ ॥
न प्राणेन नापानेन लिंगहीनो न जीवति ॥ ८५ ॥
अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्।
अजो लिंगी जुषमाणोऽनुशेते जहात्येनां लिंगसंस्थस्स आत्मा ॥ ८६ ॥
तल्लिंगमारे द्रष्टव्यं श्रोतव्यं वेदपर्वतैः। पुरीशयं च तल्लिंगं सर्वभूतेषु संस्थितम्॥८७
कोह्येवान्याच्चकःप्राण्याल्लिंगहीनोमहेश्वरि। रसोह्येषमहालिंगंरसएषोऽम्बिकेसदा॥८८
एतद्धि परमानन्दं लिंगमेतत्स्वयं प्रभम्॥ ८९ ॥
यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्।
वृक्ष इव स्तब्धन्दिवि तिष्ठति लिंगमेकं तेनेदं पूर्णं लिंगभासैकसर्वम्॥९०॥
लिंगाद्वाचो निवर्तन्ते ह्यप्राप्य मनसा सह। तदत्यतिष्ठद्देवेशि ब्रह्माण्डोर्ध्वाङ्गुलं ततम्॥
तस्मिन्भाति स्वयं लिंगं चन्द्रसूर्याग्नयो न हि। भाति तत्तेजसा व्याप्तं जगदेतच्चराचरम्॥
यथा क्षेत्रज्ञविहितं हि भूमौ गुहाहितं तच्च लिंगं महान्तम्।
हिरण्यं न विन्दन्ति चोर्ध्वं चरन्तस्तथेदं प्रपश्याम्बिके लिंगमेतत् ॥ ९३ ॥
जाग्रत्स्वप्नसुषुप्तीषु यल्लिंगं मनसा ततम्। तदेतदहमिति ज्ञात्वा लिंगी लिंगातिगो भवेत्

यथोर्णनाभिस्सृजते तन्तुजालं गृह्णाति वक्त्रेण तथात्ति सर्वम् ।
तथा जगज्जालमिदं हि लिंगतो भवत्यतोऽन्ते विलयं प्रयाति ॥ ९५ ॥
ब्रह्मैव तल्लिंगमिदं सनातनं स्वविद्यया संसरते च मुच्यते ।
तदेतल्लिंगं तपसा वेदितव्यं नान्यैर्धर्मैस्तच्च लिंगं त्वलिंगम् ॥ ९६ ॥
तदेव लिंगं त्वविमुक्ते निविष्टं भूतातिगं विश्वनाथाभिधं च ।
वाराणस्यां भ्रूयुगे सन्निविष्टं योगैः पश्यन्ति तत्र ते चोत्क्रमन्ति ॥ ९७ ॥
तत्रैव तेषां तारकं चोपदेशमोङ्कारादयं प्रणवं ब्रह्ममन्त्रम् ।
न तस्य प्राणोऽनुत्क्रमतीव देवि तल्लिंगसंगं भवतीत्यलिंगम् ॥ ९८ ॥
तत्राविमुक्ते चोपास्यं तल्लिंगं महिमातिगम्।तत्राशक्तस्य देवेशि भौतिकं भुवि मुक्तिदम्
सन्दृश्यं चक्षुषा मर्त्यैः क्रमात्तन्मुक्तिदायकम्।तस्मिन्नेके तते लिंगे त्वन्तरेण भवेद्वयम्॥
तत्परादादिदं लिंगमस्तिब्रह्मेति वाक्यतः। तदेतद्ब्रह्म परममात्मलिंगं सनातनम्॥१०१
वेदा यत्रैव वेदान्तैर्निवृत्ता यत्र लिंगके। हृत्पुण्डरीकं विरजं तल्लिंगं भासतेऽनिशम्॥
कश्च खश्चैव तल्लिंगं सर्वव्यापि निरामयम्। आनन्दघनमद्वैतं चतुर्थं मनसः परम् ॥
दहराद्विस्तरं तच्च सूर्यमण्डलमण्डितम्। चन्द्रकोटिसहस्राभं तद्दृश्यं सर्वथा शिवे॥१०४
योगेनात्मानुसन्धानैर्वीतमोहभयैस्सदा ॥ १०५ ॥
वेदान्तविज्ञानसुनिश्चितार्थैस्सन्न्यासयोगैर्यतिभिश्शुद्धबुद्धैः ।
तेषामेवैतद्विरजं लिंगधाम प्राप्यप्राप्तेश्चाविदूरं शिवेऽग्र्य ॥ १०६ ॥
नैषा तर्केण मतिरापनेया क्षुरोपमं लिंगमेतद्धि सत्यम् ।
ऋचो अक्षरे परमे तत्प्रविष्टं सर्गादिहीनं महालिंगमेतत् ॥ १०७ ॥
सुराद्यैर्दुरापं तथायोगिभिः कर्मभिश्चाप्यवश्यम् ।
तल्लिंगत्यागेन सर्वथा वीतमोहो भवत्यवश्यं श्रुतिगुह्यमेतत् ॥ १०८ ॥
यो नाविरतो दुश्चरितितान्नाशान्तो नासमाहितः ।
तस्यैतद्दुर्लभं लिंगमासक्तस्यैव सर्वगम् ॥ १०९ ॥
येषां न जिह्ममनृतं सदैव तेषां लिंगं हृदि भात्येव शान्तम् ।

१. तमसः परमिति च पाठः ।

अतो लिंगं पूजयेदात्मकामो न कामकामी लिंगपूजाधिकारी ॥ ११० ॥
एतदर्थं गूढतमं महेशि नान्ये विन्दन्ति ज्ञाननिष्ठा हि भूयः ।
न वा देशिको नैव शिष्यः कदाचिन्न पूजा न पूज्यो न वा पूजकत्वम् ॥
स्वदोषात्प्रदोषोऽपि नास्त्येव लिंगे जगन्नैव शेषं विशेषाद्भवानि ।
महाशेषभूषाविशेषोऽपिनात्र सदोषाकरापारमौलिर्न चैव ॥ ११२ ॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादे उपनिषल्लिंगकथनं नाम एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## स्कन्दस्तुतिर्नाम षष्टितमोऽध्यायः.

ईश्वरः—

शृणु वक्ष्यामि ते देवि हितमात्यन्तिकं शिवे । यत्प्रोक्तं पूजनं देवि सुराणाञ्च नृणां सदा
सा पूजानन्तफलदा जन्मकर्मप्रणाशिनी । संविदेव परा पूजा सा तु तस्यां मनोलयः
साधारणानां सा पूजा ह्यव्यक्तालीव दुर्घटा । मत्प्रसादेन देवेशि पचेलिमतपःफलैः ॥
योगैर्यागैश्च तपसा महानन्दकदम्बकैः । भस्मनिष्ठस्य सततं रुद्रावर्तनशीलिनः ॥ ४ ॥
भस्मत्रिपुण्ड्रयुक्तस्य सदा रुद्राक्षधारिणः । पञ्चाक्षरपरस्यैव सदा लिङ्गार्चकस्य च ॥
बिल्वपत्रैर्महादेवि प्रदोषे पूजकस्य माम् । नक्ताशनार्चनध्यानचतुर्दश्यष्टमीषु च ॥ ६ ॥
सोमवारव्रताचारयुक्तस्य नियतस्य च । मत्क्षेत्रवासिनो देवि ह्यविमुक्तरतस्य च ॥ ७ ॥
विश्वेश्वरार्चकस्यास्य सुरस्य च नरस्य च । तथा महालये पुण्ये रुद्रकोटौ महेश्वरि ॥
कालञ्जरे प्रभासेऽपि पुष्करेऽमरकण्टके । पिण्डारके कुरुक्षेत्रे महाकाले महेश्वरे ॥ ९ ॥
देवदारुवने पुण्ये नैमिषे चित्रकूटके । केदारे कामदे पुण्ये वैद्यनाथे महेश्वरि ॥ १० ॥
श्रीशैले च तथोङ्कारे तथा वेणुवने शिवे । आवटङ्के सोमनाथे गोकर्णे त्र्यम्बके गिरौ ॥
श्रीमद्दक्षिणकैलासे तथैकाम्रवने मम । वृद्धाद्रावरुणाद्रौ च तथा गोपर्वते शिवे ॥ १२ ॥
हृत्पुण्डरीके गूढे च जप्येशे श्वेतकानने । गजारण्ये रत्नगिरौ श्रीकण्ठे मातृपर्वते ॥ १३ ॥
कोटिकायां मंगले च पुण्ये द्रुतिवनेऽपि च । कुम्भघोणेऽर्जुने चैव श्रीसुन्दरगिरौ तथा
माधवीतेजिनीदेवीक्षीरिणीकानने तथा । शमीवने बिल्ववने घटेशे ब्रह्मकानने ॥ १५ ॥

छायावने च श्रीवाञ्छ्ये तथा वेदवने शिवे। वल्मीके वातपुर्याश्च सेतौ वै गन्धमादने॥
हालास्ये शालिकवने गजशैले महेन्द्रके। वसतः पुण्यशीलस्य नक्ताशनरतस्य च॥१७॥
संवसद्द्वादशाब्दं तु भस्मनोद्धूलितस्य च। कस्यचिद्भाग्यनिवहैर्ज्ञानन्तल्लभ्यते मम॥
बहुभिर्जन्मभिर्देवि मत्प्रसादयुतस्य च। वैराग्यभक्तियुक्तस्य चात्मलिंगार्चने मतिः॥
जायते पुण्यपाकेन चित्तशुद्ध्यनुसारतः। जायते जन्मनाशाय नृणामत्यन्तदुर्लभम्॥
नानाचारविहाराणां विषयासक्तचेतसाम्। वाञ्छा न जायते देवि कस्यचित्कचिदेव हि
बहुजन्मसहस्रेषु तिर्यक्स्थावरजंगमैः। जन्मभिः पुण्यनिचयैर्युक्तस्य पुरुषस्य च॥२२
मत्प्रसादेन विज्ञानं जायते नान्यथा शिवे। मध्यानधारामोदादियुक्तस्य निरतस्य च॥
अथर्वशिरसोऽध्यायशिखाजपयुतस्य च। जाबालश्रुतिनिष्ठस्य शाम्भवस्य विशेषतः॥
कैवल्यकालरुद्रादिजापिनो ब्राह्मणस्य च। रुद्रावर्तनशीलस्य भस्मनिष्ठस्य मे सदा॥
ज्ञानं विजायते गौरि कस्यचिच्छिवयोगिनः। यततामपि शैवानां कश्चिन्मां वेत्ति तत्वतः
मज्ज्ञानसाधनं देवि नृणामत्यन्तदुर्लभम्। मां ध्यायेद्धृदयागारपद्मसंस्थं चतुर्भुजम्॥
मृगटङ्कधरं सौम्यं सच्चिदानन्दविग्रहम्। शुद्धकर्पूरसाराच्छकुन्देन्दुधवलप्रभम्॥२८॥
मुकुटोद्भासिचन्द्राङ्कं गंगामलकपर्दकम्। भुजंगराजवलयमहार्हमणिभूषणम्॥२९॥
दिव्यानेकमणिव्रातचितसिह्मासनस्थितम्। त्रिणेत्रं नीलकण्ठश्चापीन्दुधामसमाननम्
उमया सहितं ध्यायेत्क्षणं वाथ क्षणार्धकम्। सोऽहमीशश्शिवस्साक्षादहं रुद्रो हरिर्विधिः
अहमिन्द्रोऽनलो वायुर्यमोऽहं वरुणोऽर्यमा। चन्द्रः कुबेरो मरुतो ह्यश्विनौ मरुतोऽर्ककाः
स्कन्दो विघ्नेश्वरश्चैव नन्दिकेशादयो गणाः। सर्वेषां जनिता चाहं मत्त एवाद्य निर्गताः
मयैव विधये दत्ता वेदास्सर्वे सनातनाः। मयैव विष्णवे दत्तं सहस्रारं सुदर्शनम्॥३४॥
अहमेवेति विज्ञाय ध्यायेन्मद्रूपमैश्वरम्। एवं हि ध्यायतां देवि मज्ज्ञानं जायते नृणाम्
अथवा देवमीशानं मां ध्यायेत्सूर्यमण्डले। हिरण्यबाहुमाशास्यं हिरण्यश्मश्रुमीश्वरम्॥
हिरण्यवर्णं देवेशि ह्यम्बिकापतिमीश्वरम्। सर्वग्रन्थिविमोक्षाय तज्ज्ञानं जायते नृणाम्
योगेन वापि नियमयमासनयुतस्य च। रेचके पूरयेद्वायुं पूरकेणाथ पूरयेत्॥ ३८॥
कुम्भके कुम्भवद्धीमान्धारयेद्धटिकात्रयम्। योगाग्निदग्धकायोत्थमलस्यामलचेतसः॥
नीहारधूमसंविद्युत्स्फटिकोज्वलदीपवत्। ज्योतिर्विभासते देवि हृदि पूरितवायुभिः॥

प्राणायामेन सततं तन्नीवारशिखेव हि । सोऽहं ज्योतिर्महानात्मा ह्यसंगः पुरुषश्शिवः
आपादमस्तकं देहं व्याप्य सर्वेष्वस्थितः। यो मां योगेन जानाति स्वात्मारामं महेश्वरम्
तस्य सिद्ध्यन्ति नियतं सिद्धयोऽष्टौ महेश्वरि । तस्य मूर्ध्नि महानात्मासहस्रदलपङ्कजे
गोस्तनाकारवद्धारा ह्यमृतैकरसस्रवा। व्यपोह्य तत्कपालन्तु चेडायां सन्ततस्रवा॥४४॥
पिङ्गला कुण्डलीमध्यात्पतन्तीशिखिमस्तके । वैश्वानरोऽयं सर्वेषु मद्रूपो देहिषु स्थितः
तत्र चन्द्रामृतकरैः पिङ्गलायां महेश्वरि । स आत्मज्योतिरानन्दो नित्यमुक्तो महेश्वरः
सदा क्रीडन्नभोमध्यं दहराकाशगस्सदा । चेतयामीन्द्रियगणं वाचा च मनसा सह ॥
परापश्यावैखरीषु प्रणवादिरसस्त्वहम् । सोऽहमावसथातीतः पुरुषोऽहं पुरीशयः ॥
अलिङ्गोऽस्म्यहमात्मा च सुरतिर्यङ्नरेषु च । नामरूपातिगस्साक्षादहङ्कारविवर्जितः ॥
रस्यस्तत्कृतकर्माणिविषयान्वैषिकंसुखम् । षोडशाख्यकला देविह्येकोजानामिसर्वशः॥
तास्सर्वापि कला देविमयिद्योतन्तिनित्यशः । मन्तावोद्धारसयिताज्ञाताविज्ञानईश्वरः॥
श्रुतेश्श्रोता तथाघ्राता दृग्दृष्ट्याद्यहमेव हि । यथा कूर्ममहाग्रीवा ह्रस्वदीर्घा भवेच्छिवे॥
यथा नद्यस्स्यन्दमाना नामरूपगुणातिगाः। समुद्रेऽस्तं प्रयान्तीशे यथा ते भानुदीप्तयः
पुनर्यथोदयं प्राप्ते सूर्यस्यैव मरीचयः । प्रसरन्ति महादेवि तथा मत्सन्निधौ जगत् ॥
पद्मं मित्रकरैर्यद्वद्विकसत्यब्जिनीकुलम् । यथा मणिजसान्निध्याच्चेष्टन्ते लोहसूचयः ॥
कालकर्मविपाकेन तथा मत्सन्निधौ जगत् । चेष्टते नितरां देवि स्थितिसंहारजन्मतः॥
सोऽहं सृष्ट्वा प्रविश्यैव तन्नामगुणरूपतः। ब्रह्मविष्णुहराख्याभिर्यथापूर्वयुगेयुगे।।५७।।
सृजाम्यात्मानमेवाग्रे ततो नानाविधं जगत् । यथाग्नेर्विस्फुलिंगा वैक्षुद्रास्सम्भवतिप्रिये
इन्द्रो मित्रोऽथ वरुणः पूषा सोमोऽहमेवहि । मनवः पितरोविप्रास्ताराजालंग्रहास्तथा
स्थावरं जंगमं चैतदहमेव सनातनः । सर्वस्सर्वशरीरेषु सर्वेन्द्रियगुणातिगः ॥ ६० ॥
सर्वभोक्ताहमेवास्मि सर्वकार्यकृतास्पदः । नाहं तज्जन्ममरणैस्स्थितिसंगेष्वसज्जकः ॥
असंगोनैवलिप्तोऽस्मिसर्वबाह्यान्तरस्त्वहम् । एकस्तथान्तरस्सर्वदुःखहीनोऽस्मिशङ्करि
एवं मां यो विजानाति सोहंसो मे हृदन्तरः । तस्याहं न प्रणश्यामि सचमेनप्रणश्यति
योगसाङ्ख्यौ महादेवि तथोक्तौ मम हृत्तमौ । सर्वसाधारणं देवि कथयिष्येऽप्युपासनम्

१. दृग्द्रष्टा इति च पाठः । २. मया देवि तवोक्तौ इति च पाठः ।

अलिंगोऽस्म्यहमीशानो लिंगे तिष्ठामि सर्वदा । यथा गवि गतंक्षीरंविषाणादौनदृश्यते
ऊधस्येव प्रदृश्येत तथाहं सर्ववास्यपि । हृदिद्ध्यातुमशक्तानां ज्ञानयोगेन वै शिवे ॥
लिंगे कृतां परां पूजां शाम्भवैर्भस्मधारिभिः । मत्पुण्ड्रनिरतैरेव रुद्राक्षवरकङ्कणैः ॥
रुद्राध्यायाध्ययनतः पञ्चाक्षरजपेन च । एकं वा विल्वपत्रं यैर्निक्षिप्तं मम मस्तके ॥
भक्तैर्गृह्णामि तद्देवि तस्मै ज्ञानं ददामि च । तं ज्ञानभाजनं कुर्यां प्रतिज्ञा मम शङ्करि ॥
नान्यवर्णाश्रमैर्धर्मैर्विविधैरपि मे शिवे । नैव तुष्टिर्मम परा जायते कर्मकोटिभिः॥७०॥
न षोडशमहादानैरेकाहाहीनसत्रकैः । प्रपावापीप्रदानैर्वा कन्यान्नादिप्रदानतः॥ ७१॥
कथञ्चिज्जायते देवि मदर्चायाम्मतिर्भवेत् । पुण्ड्रान्तरेषु विप्रेषु मस्करीणां गणेषुच ॥
नैव प्रीतिर्महादेवि यथा मत्पुण्ड्रधारिषु । भस्मधार्येव सततं मद्ज्ञानस्यैव भाजनम् ॥
शिवलिंगार्चनध्यानरुद्राध्यायजपेषु च । पञ्चाक्षरजपैश्चैव मम क्षेत्रनिवासकः॥ ७४ ॥
भस्मत्रिपुण्ड्रधार्येव स्वीकार्योनान्य उच्यते । ऊर्ध्वपुण्ड्रं भ्रमेणापि नकुर्यान्मोहतोद्विजः
प्रत्युतो नरकायैव तस्य सर्वमनुष्ठितम् । यदि कुर्यात्प्रमादेन पितृभिस्सपतेदधः॥७६॥
ऊर्ध्वपुण्ड्राङ्कितं दृष्ट्वा मीलयाम्यद्य लोचने । मत्प्रसादालोकनेन तज्ज्ञानं जायते शिवे
यन्नेत्रे मीलिते देवि कथं ज्ञानं भविष्यति । लिंगं कैलासमौलौ मे कैलासेश्वरसंज्ञितम्॥
देवतिर्यङ्मनुष्याद्यैरदृश्यमपि कामदम् । स्मरणादेव सान्निध्यं यत्र कुत्रापि सिद्धिदम्
एतल्लिंगस्य महिमा वेदैर्नज्ञात एव हि । सुरासुरैश्च मनुभिर्गणेन्द्रैरपि शङ्करि ॥ ८० ॥
कैलासेश्वरसंज्ञं तु लिंगं मुक्तिप्रदायकम् । लिंगराजमिदं देवि ब्रह्मैवेदं सनातनम् ॥
ममैव हृदयानन्ददायकं स्वर्गमोक्षदम् । संसारसागरापारतारकं भवभेषजम् ॥ ८२ ॥
वेदान्तसारसर्वस्वमेतल्लिंगवरं शिवे । न कस्यचिन्मया ख्यातं नाख्येयं यस्य कस्यचित्
एतल्लिंगप्रभावेन जगत्सृष्टिं वितन्वते । विधातारस्सर्वएव कल्पेकल्पे स्वसूनुभिः ॥
देवतिर्यङ्नराकारसमुर्वीसरितो वनम्। लोका लोक्याश्च देवेशि ²विधाताद्यं तनोति च॥
विष्णवः प्रतिकल्पं वै चैतल्लिंगप्रभावतः । दैत्येश्वरान्निहन्तारो महतामलचक्रतः ॥
वैकुण्ठवासिनस्सर्वे ते लक्ष्म्याः पतयश्शिवे। प्रतिकल्पं तथा रुद्रास्ते गौर्याःपतयोऽम्बिके
एतल्लिंगप्रभावेन प्रलये संहरन्त्यपि । जगज्जालं तथा शूलैर्वृक्णं सासुरमानुषम्॥८८॥

१. यन्निमीलनतः इति च पाठः । २. विधाताद्यन्तनेऽपिचेति पाठः ।

सेन्द्राश्च मनवश्चैव ऋषिभिः पितृभिश्शिवे । एतल्लिंगे लयं यान्ति प्रतिकल्पं सुरासुराः
जगद्ब्रह्माण्डजालैश्च सर्वाधारमिदं शिवे । रूपं सङ्कोच्य मे दिव्यं महान्ते प्रलये शिवे ॥
त्वया गणवरैर्देवि स्कन्दहेरम्बपूर्वकैः । निवसामि सदा लिंगे कैलासेश्वरसंज्ञिते ॥
अलिंगो लिंगसंस्थोऽहंसृजामिविसृजामिच । जगज्जालमिदंदेविब्रह्मविष्ण्वीशपूर्वकम् ॥
संहरामि तथैवान्ते लीलेयं मम शङ्करि । आत्मक्रीड आत्मरतिस्सृष्टिस्थित्यन्तकारकः
कारणं कारणानाञ्च पतीनां पतिरीश्वरः । चेतनश्चेतनानां च नित्योऽहं परमेश्वरि ॥

सकारणोऽहं कारणाधिपाधिपो ममैव कश्चिज्जनको नहीश्वरि ।
कालात्मयुक्तान्यधितिष्ठतीशो गुणी सर्वज्ञस्सर्वभूताधिवासः ॥ ९५ ॥

एतत्ते कथितं देवि रहस्यार्थप्रकाशकम् । न देयं गुह्यमप्येतद्भक्तेषु प्रतिपादय ॥ ९६ ॥
रहस्यांशमिदं शैवमादिमं परमेश्वरि । गुह्यज्ञानमिदं सुभ्रु रहस्यज्ञानसङ्ग्रहम् ॥ ९७ ॥
न प्रकाश्यमिदं भद्रे कस्यचिद्धेलयाम्बिके । इदं रहस्यं वेदानामनन्तानां सनातनम् ॥
देवादीनां मुनीनां च गणानाञ्चप्रकाशितम् । तव हार्द्रेन देवेशि रहस्यं कथितं मया ॥
हृदि धार्यं सदा देवि गोप्याद्गोप्यमनुत्तमम् । प्रथमश्शिवरत्नाब्धिरहस्यस्यांश उत्तमः ॥
कर्णभूषामणिस्तेऽद्य कथितस्तु सुगोप्यताम् । सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते

स्कन्दः—

इत्युक्त्वा गिरिजां देवस्समालिंग्य महेश्वरः। कैलासमौलौ शिवया विजहार यथासुखम्

देव्युवाच—

वस्त्राधौतविधौ सहस्रकरता पुष्पार्पणे विष्णुता
गन्धे गन्धवता महान्नपचने वर्हिर्मुखाध्यक्षता ।
पात्रे काञ्चनगर्भतास्ति भगवन्कारुण्यवाराम्निधे
शुश्रूषां करवाणि ते पशुपते स्वामिंस्त्रिलोकीगुरो ॥ १०३ ॥
गण्डूषाम्बुनिमज्जनाय हृदभूद्गङ्गावतंसस्य ते
चूडालङ्कृतिकल्पनाय विधृतं ज्योतिस्सुधाधाम ते ।

---

१. अधितप्यामि ईशः इति च पाठः ।
२. गन्धवहाप्ततान्नपचने इति च पाठः । ३. यदभूदिति पाठः ।

तृप्त्यै भक्षितशेषमामिषमपि त्रैलोक्यकुक्षिम्भरे
विद्याधीशमृते तव स्तुतिरियं वाणी लघिष्ठापि मे ॥ १०४ ॥

सूतः—

श्रुत्वा चाथ महेशसुन्दरमहाकैलासलिंगालया-
पारावारमहाघसंसृतिभरं वह्न्याप्ततूलाद्रिवत् ।
पापाद्रिः प्रशमं प्रयाति सुकृतां राशिः परं वर्धते
शैवस्यैतदपारवर्णनकथाऽशम्भोर्मुदेशाङ्कुराः ॥ १०५ ॥

अगणितगुणगर्भपुण्यजालैस्सुरजालैरमृतैस्सुरद्रुसालैः ।
कलहंसकुलैर्विलासशीलैर्न विशेषोऽस्ति त्रिविष्टपेऽपि पुंसाम् ॥ १०६ ॥

श्रोतॄणामिदमेव सुन्दरमहाशैवैकसारं मधु
नानासंसृतिधर्मभारकथया सम्प्राप्नुयाद्वा फलम् ।
किं चित्रं क्षणमात्रमप्यगसुताकान्ताब्जपादादरो
नक्राकारमहाघसंसृतिभरं न प्राप्नुयाज्जातुचित् ॥ १०७ ॥

स्कन्दः—

श्रीमत्कैलासमौलौ त्रिभुवनजनकाद्विश्रुतापारधीरा-
संसारासारकारागृहगतजनताकामपादार्गलानाम् ।
देव्या मुक्त्यै स्वयुक्त्या सततपरिचितापादबद्धेन प्रेम्णा
[1]वेदानन्दैकसीमा दुरितभवनदीतारणे सैव नौका ॥ १०८ ॥

पुंसामार्यैकधुर्याः कथितशिवकथापान्थकास्साम्पराये
जैगीषव्यकृते महेशहृदयान्निस्सारितं यन्मधु ।
देव्या तत्करुणादरेण कथितं मह्यं तदुक्तं मया
शैवं दिव्यरहस्यमद्भुततमं वेदान्तसारे स्थितम् ॥
पीत्वा तुन्दिलमानसाश्शिवपदं ध्यायन्तु मुक्त्यै सदा ॥ १०९ ॥

---

१. विद्यानन्दैक इति पाठः ।

२. तस्करास्ते वराकाः इति च पाठः ।

जैगीषव्यः—

इष्टानिष्टसमस्तवस्तुविषयव्यावृत्तचेतोऽस्म्यहं
निष्ठीवोपमकष्टतुष्टजनकं मन्ये परं विष्टपम् ।
किंत्विष्टं शिपिविष्टकष्टहरणीचित्राष्टमूर्तेः कथा-
श्श्रोतुं मेदुरदृष्टकोटिहरणं तुष्टं प्रसन्नं मनः ॥ ११० ॥
मत्तानंगकरीन्द्रदारणमहासिह्मोपमस्येश्वर-
स्यार्चाधूतसमस्तपातकततेः प्राप्तं न किञ्चिन्मम ।
स्वेच्छेच्छस्य निरङ्कुशस्य जगतां वर्णाश्रमोऽप्याश्रमः
किं वा मे तव वक्त्रपद्मजमहाशम्भोः कथास्सुन्दराः ॥ १११ ॥
पायं पायमपायजन्मरहितो मोदामि नृत्यामि च ॥ ११२ ॥
पापोद्दामक्रौञ्चभंगे त्वमेको जित्वानघप्रस्तुतं शम्भुभक्त्या ।
त्वद्दर्शनात्सुदिनं सुप्रभातमैशीः कथाश्शक्तिहस्तोऽहि शूरः ॥ ११३ ॥
विषया विषसन्निभा मम प्रतिभान्तीश्वरपादसेवनात् ।
भवता भवतापसन्ततेः परिहीना मुनयोऽप्यमी गृहस्थाः ॥ ११४ ॥
शिवतत्वप्रभवोत्थहर्षवर्षैः परिषिक्ता मुनयस्सुरा गणाश्च ।
गुरुरस्माकमहोऽसि भाग्यवर्गैस्तव देयं किमतः प्रणामतोऽन्यत् ॥ ११५ ॥

मुनयः—

पङ्क्त्वामलपद्मसङ्गजनिताश्शम्भोः कथाः पावना-
नस्मान्त्सङ्कुरुते दयारसभरैस्संसारभारालसान् ।
शांगस्यास्य मुनेस्समागमवशात्प्राप्ता विमुक्तेः फलं
किञ्चित्रं भगवंस्त्रिणेत्रजकथासारैः पविता वयम् ॥ ११६ ॥

गणाः—

श्रमिभिः किल तेन्दुमौलिचरणध्यानार्चकैस्त्वन्मुखा-
दाश्राव्योत्कटभक्तिभावसुरसाश्शम्भोः कथाः पावनीः ।

१. कृतार्थाः इति पाठः ।

नौ कैलासनिवाससौख्यधुरिमा गण्यो न किञ्चित्प्रभो
त्वद्वक्त्रामलदर्शनेन सुतरां तृप्यामहे केवलम् ॥ ११७ ॥
स्कन्द त्वद्वक्त्रपद्मामलमधुझरीप्लाविताःस्मो मुनीन्द्रा-
श्शैलेन्द्रावरणोत्तमत्वचिविहितापारवृत्तेः कथाभिः ।
शम्भोः पुम्भावमुक्त्यै कलितकलिमलास्फारमाद्यज्जनौघ-
ध्वान्तभ्रान्त्युत्थदावप्रशमनशमनागाधदुःखापनुत्यै ॥ ११८ ॥

विष्णुब्रह्मेश्वराः—

सृष्टिस्थित्यन्तकार्यैस्सततपरिचितापारदुःखेषु मग्ना
लग्नाःकर्मजपापतापमनसो जन्मादिदुःखास्पदाः ।
शान्ताः प्राप्य भवत्पदाम्बुजोत्थसरणिं मुक्तेः किमन्यद्धि नः ॥ ११९ ॥

सूतः

सन्तुष्टुवुः कुमारं ते गणास्सुरमुनीश्वराः । प्रणम्य मुदितास्सर्वे शृणुध्वं तत्स्तुतिं द्विजाः

देवाद्याः—

शरणातुल मातुलगाधिपते करुणाकर कामद कामहन्तः ।
शरकाननसम्भवचारुरुचे परिपालय तारकमारक नः ॥ १२१ ॥
हरसारसमुद्भवहैमवतीकरपल्लवलालित कम्रतनो ।
पुरवैरिमुकुन्दहृदम्बुनिधे परिपालय तारकमारक नः ॥ १२२ ॥
शरदिन्दुसमानषडाननापारसरसीरुहलोचनया विलोचनया ।
निरुपाधिकया निजवालतया परिपालय तारकमारक नः ॥ १२३ ॥
गिरिजासुत सायकभिन्नगिरे सुरसिन्धुतनूज सुवर्णरुचे ।
शिखिजात शिखावलवाहगते परिपालय तारकमारक नः ॥ १२४ ॥
जय विप्रजनप्रिय वीरमनोजय भक्तपरायण भद्रनमो ।
जय शाखविशाखकुमार नमो परिपालय तारकमारक नः ॥ १२५ ॥
पुरतो भव मे परितो भव मे पथि मे भगवन्[1]भरक्षतान्तम् ।
वितरागिषु मे विजयिन् भगवन् परिपालय तारकमारक नः ॥ १२६ ॥

१. भररक्षनमः इति पाठः ।

इति कुक्कुटकेतुमनुस्मरतां पठतामपिषण्मुखषट्कमिदम् ।
नमतामभिनन्दनमिन्दुभृतो न क्षयं कचिदस्ति शरीरिणाम् ॥ १२७ ॥

सूतः—

अणुस्स्थाणुर्वेणुप्रतिनिभमुमोद्यज्जगदिदं
महाभानुश्चायं तुहिनगिरिरास्ते हि हितकृत् ।
हिमांशुं स्वर्भानुर्भगवतजनानाञ्च हि मुदे
समीचीनेनेदं दिवि विततचित्रैकवसति ॥ १२८ ॥

जाते पादाभिघाते चलति महितले सव्यथे भोगिनाथे
साक्रन्दे दन्तिबृन्दे विलुठति कमठे चञ्चले शैलजाले ।
नादोन्निद्रे समुद्रे नदरमणसुतानायके जागरूके
साश्चर्यत्रासधुर्ये त्रिभुवनमधुना पश्य मे ताण्डवं त्वम् ॥ १२९ ॥

पायादायासखेदक्षुभित फणिफणारत्ननिर्यन्निर्य-
च्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम् ।
अश्रान्तश्रान्तचूडातुहिनकरकरालीकनालीकनाल-
च्छेदामोदानुधावद्दुहिणरथखगं धूर्जटेस्ताण्डवं मे ॥ १३० ॥

इति श्रीशिवरहस्ये प्रथमांशे स्कन्दस्तुतिर्नाम
षष्ठितमोऽध्यायः ॥ ६० ॥



इति श्रीशिवरहस्ये प्रथमांशस्समाप्तः ॥ १ ॥

शोधितं वीरभद्रेण-शर्मणा। शैव कर्मणा।
शैवरहस्ये प्राथम्ये यथाबुद्धि विचारकं





PRINTED AT THE VANI NILAYAM PRESS, MADRAS.

